# निश्वासागमः

यथा ते संस्थिता देवास्तद्बुधा तत्परायणाः
ब्रह्माविष्णुश्च रुद्रश्च ईश्वरश्शिव एव च १
तस्यापि परमं यच्च तत्परं परमन्त +++++
+++++++++++ परात्परतरं परम् २
अकारश्च उकारश्च मकारो बिन्दुरेव च
शिवस्तु परतः तस्मात्परतस्तु परात्परः ३
अकारस्तु स्मृतो ब्रह्मा उकारो विष्णुरेव च
मकारो रुद्र इत्याहुः बीजमीश्वर एव च ४
नादाश्शिवो यतो ज्ञेयः सर्वव्यापी परात्परः
शैषाश्चैव हि ये तत्वा परात्परतराः स्थिताः ५
बोद्धव्याः तत्वतो देवी बिन्दुनादाधिकाश्च ये
देव्युवाच
अक्षराश्चैव ये +++++++++ ताः ६
कथमेकत्वमास्थाय गच्छन्ते परमं पदम्
ईश्वर उवाच
ओंकारं बिन्दुसंयुक्तं यत्तद्वेदमुखं स्मृतम् ७
अकारस्तस्य देवस्य शिवस्य परमात्मनः
अकारोकारयोगेन ओंकारं परिकीर्तितम् ८
ओष्ठाभ्यां संप्रयुक्तस्तु मकारस्संप्रवर्तते
इन्दुश्च परतस्तस्य मकारोपरि संस्थितः ९
चतुष्कलं विजानीयात् चतुर्विद्या विभूषितम्
निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिस्तथैव च १०
एताः कलाः समाख्याताः बिन्दुदेवसुधीमतः
ओंकारेण मकारस्तु स्पृष्टो वै नदते यदा ११
तदा बिन्दु स्पृशेत्याशु मकारस्य च मूर्धनि
ककारादिमकारान्ताः चतुर्विं शत्कलास्मृताः १२

ज्ञातव्या नित्यमेवाहुः त्रिस्थानस्था व्यवस्थिताः
सिद्धार्थ का ++ कारं बिन्दुदेवस्य लक्षणम् १३
सामान्यं सर्वतन्त्रेषु तव देवि उदाहृतम्
म् कारसदृशाकारं ओंकारस्य तु मूर्धनि १४
अर्धचन्द्रनिभश्चैव बिन्दोः परतरस्थितः
तस्याऽपि परमं यच्च नादरूपी सदाशिवः १५
परात्परपरातीतो नादस्तं व्याप्यसंस्थितः
अतः परतरन्नास्ति शिवात्परतश्च यत् १६
परिज्ञानस्य देवस्य सर्वकृन्मुच्यते नरः
आदिमध्यायतञ्चैव त्रिपञ्च सविसर्गकम् १७
पितामहे शरीरस्था आत्मतत्वे व्यवस्थिताः
चतुर्थादपरश्चैव गृहीतात्परसप्तमम् १८
तस्याऽपि परमं यच्च केशवस्य विनिर्दिशेत्
आदिमादन्तिमं यच्च अधस्त्वैकादशश्च यत् १९
आदिमान् पञ्चवैशेषान् +++ रुद्रांशमादिशेत्
++++++ चत्वारः कलास्थास्ता विजानतः २०
यस्य यस्य हि यद्भावं तेन तेन हि यन्मया
यकारादिक्षकारान्ताश्शिवतत्वे व्यवस्थिताः २१
मातृका कथिता देवी ओंकारान्तर्व्यवस्थिताः
++++++++++++++ सर्वदैवतम् २२
मुच्यते सर्वपाशैस्तु शिवं याति निरामयम्
देव्युवाच
यदेतत्कथितं देव ओंकारं सर्वदैवतम् २३
तत्कथं कथितं देव ध्यायते देव योगिभिस्तत्वचिन्तकैः
ईश्वर उवाच
चितश्चेतो तथा चिन्ता चिन्त्योऽन्यचिन्तकस्तथा २४

एतद्धि पञ्चकं ज्ञात्वा ततो योगं समभ्यसेत्
देव्युवाच
कीदृशं तु भवेच्चित्तञ्चेता चैव कीदृशम्  २५
चिन्ता च कीदृशी प्रोक्ता चिन्त्यस्तु चिन्तकं कथम्
एतत्सर्वं पुनः ब्रूहि तत्वतः परमेश्वर  २६
संशयो मे महादेव प्रासादिभवशूलधृक्
ईश्वरः
अवधानं स्मृतिंश्चित्तं चेता बोधप्रकारकम्  २७
++++++++ पुरुषस्मृतः
एवं पञ्च प्रकारेण विज्ञाय परमेश्वरी  २८
ततो योगं प्रयुञ्जीत अन्यथा न कदाचन
देव्युवाच
अद्यापि संशयो देव योगस्य परमेश्वर  २९
कीदृशं तु भवेद्योगं तत्वतः कथयस्व मे
ईश्वरः
एवमेतत्समाख्यातं योगिनां योगमुत्तमम्  ३०
लक्षभूतमलक्ष्यञ्च द्विप्रकारं प्रकीर्तितम्
लक्षं दृष्ट्वा तु वै सम्यक् वेत्ता तत्स्थं नियोजयेत्  ३१
तद्गतस्तन्मयो भूत्वा युञ्जनाद्योगमुच्यते
सुसदुःखेन संवेत्ति करणैश्च विवर्जितः  ३२
निश्चलस्थिरभूतस्तु अलक्षं स उदाहृतम्
एव ते योग आख्यातः परञ्च परमञ्च यत्  ३३
यः कश्चित्तन्मयी भूतो योगं तस्य समादिशेत्
ओंबुद्धीमनोहंकारश्चैता जीवश्च पञ्चमः  ३४
तुर्यस्थाने समाश्रित्य प्रणवस्संव्यवस्थितः
प्रणवो बिन्दुबन्धो हि सुषुम्नानादगोचरे  ३५

षोडशान्तविर्सर्गस्थः परतो मुक्तिरिष्यते
स एव वाङ्मयो देव मन्त्रपञ्चांशदव्ययः ३६
गीयते सर्वसिद्धान्तैरक्षरस्थानमुत्तमम्
स्वभावस्संस्थितस्तत्र ब्रह्मानाम्ना स विश्रुतः ३७
सुखमुच्चार्यमाणस्तु ब्रह्मा तत्राधिदैवतम्
उपांशूच्चार्यमाणस्तु विष्णुस्तत्राधिदैवतम् ३८
मनसा स्मरेन्नोच्चार्य शिवस्तत्राधिदैवतम्
आत्मा ध्याता मनो ध्यानं ध्येयश्शुद्धो महेश्वरः ३९
यत्तत्परममैश्वर्यं सर्वव्यापिमहेश्वरम्
तस्मिन् स्वदेहे देवेशि आत्मा ध्यानेन योजयेत् ४०
निष्कलं प्रणवं कृत्वा अमात्रस्वरवर्जितम्
तस्यान्ते तु शिवं कृत्वा समेता मोक्षदं पदम् ४१
यस्यैवं भेदमुत्पन्नं इदं परमदुर्लभम्
स गच्छेत् परमं स्थानं कुलकोटिशतैर्युतः ४२
सर्वावस्थां गतो वाऽपि युक्तो वा सर्षपातकैः
अवश्यं मुच्यते देवि सर्वस्यानुग्रहे क्षमः ४३
इदं तत्परमं देवि गोपनीयं प्रयत्नतः
मुच्यते पश्य देवेशि यन्त्रणारहितोपयः ४४
पुनरेव प्रवक्ष्यामि भेदं तस्य परापरम्
दर्शनास्पर्शनाच्चारे ज्ञेयं ध्यानेन योगिनाम् ४५
प्राप्यते हि परं स्थानं केवलं स्मरणादपि
तं प्रवक्ष्याम्यहं देवि यत्सुरैरपि दुर्लभम् ४६
अष्टत्रिंशत्कलैर्युक्तं शिवोमिति च यद्भवेत्
वेदरूपो हि सोऽवश्यं संसारार्णवतारकम् ४७
देव्युवाच
शिवोंकारविधानोऽयं कीदृशः कथयस्व मे

पुन +++++ संदिग्ध उत्पन्नः शिव ओमिति स्मृतः
ईश्वरः
सर्वतत्वादि देवस्य द्वादशान्तोपरी यदा
त्रिकपञ्चान्वितश्चैव शिवोमिति विधीयते ४९
देव्युवाच
अष्टत्रिंशत्कला चैव कस्मिंस्थाने व्यवस्थिताः
संज्ञाभिः स्थानभेदे तु कथयस्व ++++ ५०
सिद्धिऋृद्धिद्युतिर्लक्ष्मीर्मेधाकान्तिस्वधा स्थितिः
रजारक्षारतिः पाल्या कामा संयमिनी क्रिया ५१
बुद्धिः कार्या च धात्री च ग्रामिणी मोहिनी भवा
तमो मोहाक्षुधा निद्रा मृत्युर्नाथा भया जरा ५२
प्रवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव
शशिनी अङ्गदा इष्टा मरीचिज्वालिनी तथा ५३
++++++++++++++ ईश्वरः शिव एव
अर्धचन्द्रश्च शक्तिश्च कलाभिस्सह जानतः ५४
निरोधी ह्यर्धचन्द्रस्य नादस्यादूर्ध्वगामिनी
शक्तिस्था या मया प्रोक्ता व्यापिनीं तां विनिर्दिशेत् ५५
प्रणवोच्चारणं तस्य +++++++
+++ कत्वं यो न जानाति निरोधी रोधते यदा ५६
द्वयमुत्पन्ननादस्य यच्छब्दं शूयते सदा
स एव ऊर्ध्वगामी तु नादस्यान्तबर्हिस्थिता ५७
शक्तयान्तु वीक्ष्यमाणायां यत्तेजः संप्रदृश्यते
सा एव व्यापिनी चैव शक्तेश्चान्तर्बहिस्थिता ५८
अष्टत्रिंशत्कला ख्याता प्रणवस्य समासतः
वेदनीयास्तु ता नित्यं शिवतन्त्रानुवर्तिभिः ५९
योऽसौ सर्वगतो देवः सर्वेषां श्रूयते महान्

अनिर्देश्यमनाख्यञ्च समो ++ स्सर्वतस्थितः ६०
अस्तीति भावना तस्य आद्यावस्था तु तस्य वै
देवैरपि न विज्ञातं किं तदस्तीति भावना ६१
तस्यैव संज्ञा सञ्जाता शक्तिरित्यभिधीयते
प्रत्यक्षा सर्वलोकेषु दृश्यते सर्वतः स्थिता ६२
फलभावन्तु यत्तस्य प्रत्यक्षरसर्वतः स्थितः
श्रूयते सततं देवि नादाख्येति च विश्रुतम् ६३
अपरस्तस्य भावस्य निरोधीत्यभिधीयते
अर्धचन्द्रमिति प्रोक्तं व्यापी चान्ते बहिस्थितः ६४
संयोगेन हि चान्यत्र यः कः ++ श्चोदितोक्षरः
रोधते सर्वयोगीनामर्धचन्द्रेति विश्रुतम् ६५
ज्ञानं योगजपध्येयं शिवाचाग्निविधिक्रिया
इन्द्रियादिषु सर्वेषु ज्ञेयः परतरः स्थितः ६६
कन्दादिनालपद्मानां सर्वेषां सर्वतस्थितः
देवी
निष्कलं प्रणवं देव त्वया पूर्वमुदाहृतम् ६७
पुनश्च सकलङ्कानां किमर्थञ्च सुरेश्वर
ईश्वरः
अवगृह्णाति भूतानि मन्त्ररूपेण संस्थितः ६८
मन्त्ररूपं पुरा गृह्य पश्चात् ज्ञानं प्रकाशते
पशुपाशं जगन्मूलं पशुपाशात्मकं स्मृतम् ६९
तस्य चोन्मूलने हेतुं मन्त्रमूर्तिर्महेश्वरः
विद्यदर्कायुतप्रख्यः सर्वभूतानुकंपनः ७०
मन्त्रमूर्तिगतो देवः कारुण्यात् सशिवोऽव्ययः
व्यापिनी व्योमरूपा चानन्ता नाथानाश्रिता ७१
मूर्तिर्देवस्य विख्याता प्रणवो ब्रह्मभिर्युता

ईशानपुरुषाघोरवामसद्यादिग्रहः ७२
चराचर +++ स्ता अप्रमेयगुणोदयः
प्रणवः सकलो देवः सर्वविद्याधिपः प्रभुः ७३
अविनाशी सुसंपूर्णः तेजो बिन्दुः परश्शिवः
प्रणवस्तनुरीशानं धृतं मन्त्रेश्वरेश्वरम् ७४
ज्ञात्वा महे +++++++++++ प्रभुः
प्रणवस्थस्वरावर्णा यावन्तदति सुव्रते
तावत्सुरगणास्सर्वे अभिव्यक्ता भवन्ति ते ७५
प्रणवान्तस्थिताश्चैताः प्रणवे तत्वतः स्थिताः
प्रणवः सर्वधर्मात्मा प्रणवासक्तचेतसः ७६
सर्वाधारोऽप्यनाधारः प्रणवोऽनन्तमूर्तिमान्
प्रणवे च जगत्सर्वं शब्दाद्यं यच्च तत्परम् ७७
+++++++ मप्रकाशञ्च प्रगूढं प्रकटः प्रभुः
प्रणवः प्राणानां प्राणः प्रमाणपरिवर्जितम् ७८
ब्रह्मादीनां प्रजेशानां प्रणवात्मा महेश्वरः
मन्त्ररूपसमूहस्तु तत्स्वरूपरश्शिवः ७९
प्रणवप्रभवं सर्वमा ब्रह्मभुवनं जगत्
तल्लयञ्चं जगत्सर्वमवबुध्यस्व तत्वतः ८०
आदौ तु यादृशं रूपं कलान्तेष्वपि तादृशम्
नित्यत्वादन्तरत्वाच्च प्रागुक्तात्प्रणवस्मृतः ८१
ब्रह्मा विष्णुश्च रुद्रश्च शिवश्शान्तश्च सुवृते
प्रणवं तस्य कुर्वन्ति तेनाऽसौ प्रणवस्मृतः ८२
विशुद्धं सर्वगं नित्यं शिवः प्रणवसंस्थितः
विद्यादेहं परं शुद्धं आद्यं यत्पारमेश्वरम् ८३
प्रणवस्यान्तर्गतं त ++ यत्किञ्चित् भाससंस्थितः
साकायकारशुद्ध्यर्थं स च मोक्षस्य कारणम् ८४

देवनामशेषाणां कृत्स्नस्य जगतस्थितः
सर्वव्यापी परो देवः प्रणवः सर्वकर्तृणाम् ८५
प्रणवः सर्वधर्मात्मा प्राणीनां हृदि संस्थितः
तिस्रो मात्राऽर्धमात्रा च प्रणवोऽनादिसंभवम् ८६
प्रणवः सर्वभूतानां हृदिस्थो हि महेश्वरः
संवेद्यश्चैव याज्यश्च सध्येयो जप्य एव च ८७
विश्वात्मा विश्वभावी च बिन्दुसाधनमेव च
प्रत्येकसाधनञ्चैव मन्तव्यः प्रणवस्सदा ८८
प्रभुत्वञ्च विभुत्वञ्च महत्वञ्च तथैव च
ध्यानमात्रेण देवेशि निस्संदिग्धं वरानने ८९
ध्यातः सर्वेश्वरो देवः सर्वज्ञत्वं प्रयच्छति
हृदिस्था देवतास्सर्वा हृदि प्राणे व्यवस्थितिः ९०
हृदि ज्योतींषि सर्वाणि प्रणवोऽयं हृदि स्थितः
एतैस्त्रिभिस्समायुक्तस्सर्वभूते व्यवस्थितः ९१
चितः चेतोऽधिको देवी आत्मानं वेत्ति तत्वतः
चित्तं शरीरमाख्यातं चेता शक्तिः प्रकीर्तिता ९२
एतैर्विहीनं यदात्मानं विषसुप्ते च लक्ष्यते
तथा हि लक्ष्यते देवि एतैर्हीनस्तु चेतनः ९३
रूपस्पर्शस्तथा शब्दः त्रिकलः सर्वतः कलः
प्रणवः परमः सूक्ष्मं प्रमाणं परिवर्जितम् ९४
प्रसूतिः सर्वतत्वानां सात्वराजसतामसाः
एषु वै प्रणवो ज्ञेयः क्षेत्रज्ञस्य तु सारथी ९५
सा की चेता शरीरेऽस्मिन् सर्वभूतगतः प्रभुः
स शब्दः प्रणवो ज्ञेयो सर्वमापूर्य तिष्ठति ९६
प्रकृतिः सा परा सूक्ष्मा सा करोति शिवात्मिकाम्
पञ्चाशत्प्रणवा देवि भेदेनैकेन कीर्तिता ९७

ज्ञातव्या योगिभिर्नित्यं शिवज्ञानानुवर्तिभिः
वेदसांख्यपुराणेषु पाञ्चरात्रेतिहासयोः ९८
स्मृतयश्च तथा चाऽन्ये ब्रुवन्ति विविधं क्रमात्
ओमित्येकाक्षरं ब्रह्म वदन्ते सर्वयोगिनः ९९
वदन्ते नाऽभिजानन्त इति माया शिवात्मिका
देव्युवाच
पञ्चाशत्प्रणवा देव ज्ञातं मे त्वत्प्रसादतः १००
तस्मिन् वर्णा स्थिता देव बिन्दुनादं तथैव च
स +++++++++++++
म +++++++++++ मेतं मया ज्ञातं भगवंस्त्वत्प्रसादतः
भूयोऽहं श्रोतुमिच्छामि संशयो मे महेश्वर १०२
ईशानः पुरुषो घोरो वामस्सद्यस्तथैव च
विद्येशा लोकपालाश्च अस्त्राणि च यथाक्रमम् १०३
एतेषामविशेषेण मन्त्रोद्धारं वदस्व मे
ईश्वरः
शृणु देवि परं गुह्यं मन्त्रसद्भावमुत्तमम् १०४
प्रणवे सर्वमन्त्रास्तु प्रवक्ष्यामि वरानने
अकारस्तु भवेनन्तः प्रथमं यः प्रकीर्तितः १०५
धर्माद्यस्तु द्वितीयो वै च्छादनानि तथैव च
तृतीयं कल्पयेत्पद्मं सानुस्वारञ्च सद्भवेत् १०६
चतुर्थेन तु बीजेन विन्यसेन्नवशक्तयः
मकारः कर्णिकाऽख्यातं तस्य पद्मस्य नित्यशः १०७
एतस्मिन्नंशकाः प्रोक्ता उकारादि समासतः
ओंकारान्तेन देवेशि पुष्करान्तेन कल्पयेत् १०८
लृकाराद्यास्तु ये प्रोक्ता एकारान्ते प्रतिष्ठिताः
केसरास्ते तु विज्ञेयाः तस्य पद्मस्य शोभने १०९

एवं विन्यस्य यत्नेन मूर्तिं विन्यस्य पूर्ववत्
निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिस्तथैव च ११०
शान्त्यतीतश्च देवेशि पञ्च ब्रह्मा प्रकीर्तिताः
वायव्यमादितः कृत्वा शकारान्तात्प्रतिष्ठिताः १११
शिवाङ्गानि तु विज्ञेयाः कथितास्तु समासतः
षकारस्तु भवेन्नेत्रं सा गायत्री प्रकीर्तिता ११२
क्षस्सावित्री सदा ज्ञेया अस्मिन् तन्त्रे वरानने
संपूज्य देवदेवेशि हंसाख्यं च सदाशिवम् ११३
परमाक्षरः परो देवः सर्वतन्त्रसमन्वितः
तेन संचिन्त्य देवेशं पूजयेत यथाक्रमम् ११४
प्रथमे विन्यसेद्गर्भे द्वितीये चक्रवर्तिनाम्
तृतीये लोकपालांश्च चतुर्थेऽस्त्राणि विन्यसेत् ११५
ककारादि जकारान्ता अष्टौ वै चक्रवर्तिनः
झकारादितकारान्ता लोकपालाः प्रकीर्तिताः ११६
थकारादि भकारान्ता अस्त्राणि तु यथा क्रमम्
अकारेण समायुक्ता विद्येशाः परिकीर्तिताः ११७
बिन्दुना लोकपालास्तु विसर्गेऽस्त्राणि योजयेत्
प्रणवेन तु सर्वेषां गन्धधूपविधिक्रमम् ११८
कर्तव्यं सर्वथा देवि आनुपूर्वेण यत्नतः
प्रणवेन तु कार्याणि सर्वाण्युक्तानि यानि वै ११९
कर्तव्यं सर्वकार्याणि अविकल्पेन भाविनी
पृथिव्यादि शिवान्तञ्च ये तत्वाः परिकीर्तिताः १२०
प्रणवेन तु सर्वेषां पूजा होमविधिक्रिया
कर्तव्यं सर्वकार्याणि जपध्यानादिरेव च १२१
शतत्तंशञ्च होतव्यं पूर्णाहुत्या क्रमेण च
एष ते मातृकायागो दुर्लभः त्रिदशैरपि १२२

एष ते मातृकायागो कृतार्थश्छिन्नसंशयः
व्रजते शिवसायुज्यं निर्मलो विगतज्वरः १२३
आदितः कथितो देवि परमाक्षरसंज्ञितः
तस्याऽपि चेदृशं प्रोक्तं यागं देवेन शोभने १२४
एष मन्त्रविभागस्तु प्रणवस्य उदाहृतः
पश्चात् +++++++ जयात्मकम् १२५
अचिरेणैव कालेन कालमृत्युं जयिष्यति
मासे वर्षशतं प्रोक्तं मासे द्व +++++++ १२६
++++ तेनात्र सन्देहः सत्यं देवि वदाम्यहम्
जपार्चनविधानेन अब्देनैकेन सिद्ध्यति १२७
अतः परं प्रवक्ष्यामि न्यासचक्रे यथाक्रमम्
पूर्व +++ विन्यसेद्देवदेवेशि यावत्सर्वं समाप्यते १२८
एवं वर्गक्रमेणैव विन्यसेत्सुसमाहितः
क्षकारैकेन कर्तव्यं सप्तधा ++++ १२९
+++ ष्टपत्रेषु कर्णिके च तथैव हि
रुद्रबीजसमायुक्ता षडङ्गेन समन्विता १३०
जुंकारमादितः कृत्वा सकारान्तेन शोभने
एके मृत्युञ्जयं तेषु चतुष्षष्ट्या समासतः १३१
उच्चारेण जपं कुर्यात् आनुपूर्वेण योगवित्
ध्यानञ्च सततं कुर्यात् मार्गविच्चक्रसंस्थितः १३२
शुद्धस्फटिकसंकाशो ज्ञेयो मन्त्रगणस्तु वै
ध्यानेन मनसा +++ न संशयः १३३
कालक्षेत्रं यदा गच्छेत् योगी मृत्युञ्जयेषिणः
संपुटं चिन्तयेच्चमुपरिष्ठाद्द्वितीयकम् १३४
एवं कृत्वा तु देवेशि अध्वानन्तु व्रजेत् सदा
लक्षैकं जपते ++++++++++++++ १३५

विषयस्य हनेन्मृत्युप्रतिरोधीवशेन तु
एष ते कथितो देवि चक्रमृत्युञ्जयं प्रति १३६
मुच्यते सर्वरोगैस्तु अमृतीशसमो भवेत्
पुनरेव प्रवक्ष्यामि दीक्षाञ्चक्रे वरानने १३७
जन +++++ क्षेपविवर्जिताम्
संहृत्य सर्वसंहारं विधिं कुर्यात्समासतः १३८
परमाक्षरेण देवेशि प्रोक्षणाभिरक्षणं स्मृतम्
पूज्यसंस्कारशुध्यर्थं पशूनां लंभनं तथा १३९
सर्वमनेन कर्तव्यं +++++++
क्रममनसालोक्य ध्यायेच्चैव यथाक्रमम् १४०
अग्ने चैव तु देवेशि पशुदेहे विशेषतः
ध्यात्वा चक्रं यथावस्थं कर्मकुर्याद्यथाक्रमम् १४१
पूर्वपत्रात्तु आरभ्य यावत्सर्वं समाप्यते
+++++++ त्यविचक्षणः १४२
हृच्चक्रे योजयित्वा तु होमं तत्र समारभेत्
शतं शतञ्च होतव्यं पूर्णाहुत्या क्रमेण तु १४३
नाडिमार्गेण संयोज्य यस्ते तु +++ विशेद्धनः
तत्र पूर्णाहुतिर्देया पुनरन्येषु योजयेत् १४४
पूरकेणैवमाकृष्य हृदि चक्रे प्रवेशयेत्
++ वकेनैव देवेशि +++ ळस्मृतः १४५
एवन्नाडीषु संयोज्यमानुपूर्वेण सुव्रते
एष यागविधानन्तु न दद्याद्यस्य कस्यचित् १४६
एक ++ कञ्च +++++++++
++ ज्वरत्यक्तो स्वशरीरेण सुव्रते १४७
देवैश्च समतां याति मत्समीपे न संशयः
एतद्गुह्यान्तरं सर्वमाप्रेमातुल +++ १४८

++++ देवी अतः परम्
अष्टपत्रं लिखेत्पद्मं मन्त्रं विन्यस्य यत्नतः १४९
हृच्चक्रे सर्वमेतत्तु पूर्वोक्तविधिमाचरेत्
यदिष्टं तं यजेन्मन्त्री सिध्यतो नात्र संशयः १५०
अविकल्पेन देवेशि स सिद्धिफलभाक् भवेत्
हृच्चक्रे देवता न्यासं कृत्वा पूर्वं वरानने १५१
मण्डलानान्तु विन्यासं पूर्ववत्कारयेत्प्रिये
एतद्गुह्यतमं देवि न देयं परिकीर्तितम् १५२
परीक्ष्य च दातव्यं न नास्तिकनिन्दके
तर्कानुमानबुध्या तु निगृह्यार्थीव शासनम् १५३
गृहीतं नैव सिध्येत तस्मात्तं परिवर्जयेत्
त्रिगुणस्सगुणोवाऽपि सर्वावस्थोऽपि देशिकः १५४
पूजनीयस्सदा +++ शिवतत्वविदैस्सदा
न्यासं पूर्वं मया प्रोक्तं सूत्र उत्तरसंज्ञिते १५५
तदेव तस्मिन् विज्ञेयं मुद्रास्ता एव कीर्तिताः
न कुर्यादन्यथा देवि आज्ञैषा पारमेश्वरी १५६
अविदित्वा तु यो मोहाद्विधिमेतदनुत्तमम्
मृत्युनाशनहेत्वर्थं स स्निग्धफलभाक् भवेत् १५७
आप्यायनविधिज्ञश्च न्यासयोगविधानवित्
नाडिसञ्चारतत्वज्ञः स मृत्युं विजयिष्यति १५८
दाहशोषपरिक्षीणः अर्धानेनापकामतः
धू ++++ वरानेन ह सुषिम्नाभिन्नमस्तकम् १५९
एवमादिविभागेन यः कश्चित्तत्त्ववेदिकः
स मुक्त इति विज्ञेयश्शेषाद्यात्मविडंबकाः १६०
तत्वानि यो विजानाति तत्वानां व्याप्तिरुत्तमम्
धर्माधर्मान्न लिप्येत स सर्वानुगृहे क्षमः १६१

ब्राह्मणक्षत्रियो वैश्यः शूद्रो वा तत्वविद्यदा
विभक्तिं नैव विद्येत यथाग्नावग्निरेव हि १६२
क्षीरे क्षीरं यथा न्यस्तो तोये तोयमिवार्पितम्
विभागो नैव विद्येत तत्वमीश्वरभावितम् १६३
यथा हि सरितस्सर्वास्सागराश्रयसंस्थिताः
विवेकन्तु न शक्यन्ते रसभावं पृथक्पृथक् १६४
तद्वद्वर्णाश्रमा देवि दीक्षितो यदि वा पशुः
शिवभावसमायुक्तो तुल्यमेतन्नसंशयः १६५
शिवतन्त्रं समाश्रित्य विभक्तिं यः करिष्यति
स पच्येन्नरो घोरेषु द्वात्रिंशन्नरकेषु च १६६
ब्रह्मणस्तु दिनाः पञ्च दिनाः पञ्च च केशवे
दिनत्रयन्तु रुद्रस्य प्रायश्चित्तीयते नरः १६७
तस्मात्सर्वप्रयत्नेनेत्यविवेकी सदा भवेत्
विवेकी गच्छतेऽधस्तात् अविवेकी ++ जेत् १६८
एतत्ते कथितं देवि तत्वानां व्याप्तिरुत्तमा
त्वया गुप्ततरं कार्यं न दद्या परदीक्षिते १६९
दशद्वादशभिष्षड्भिः त्रिभिर्वर्णामनुत्तरात्
अथवा सत्य एव स्यात् विदिताराधि ++ तो र्यदा १७०
+++++ शिववत्वं विनिर्दिशेत्
न लिखेत्पुण्यपापेभ्यो सत्यं देवि उदाहृतम् १७१
चिच्छक्त्यागमेचोक्तं विधिनानेन सुवृते
सर्वे ते प्रणवा ज्ञेयाः काममुक्तिफलप्रदाः १७२
एष ते मातृकायागः कथितस्तव शोभने
येन इष्टो इष्टं वा अ +++++++ १७३

इति निश्वासकारिकायां ज्ञानकाण्डप्रकरणे
द्वादशः पटलः

ईश्वरः
हृत्पद्मं संप्रवक्ष्यामि दशग्रन्थिष्ववस्थितम्
यथा सा साधना तत्र मातृका ++++ १
++++++++मसद्भावं सर्वव्यापीति विश्रुतम्
स एवं संस्थितो नित्यं देही देहत्वमागतः २
आपादतलमूर्धान्तं स्वेच्छया यः प्रवर्तते
स एव नालमित्युक्तं आधारं सर्वदेहिनाम् ३
अष्टपत्रं भवेत्पद्मं षोडशच्छदमेव वा
उभयोरेव जानीयात् संपुटं परमं महत् ४
पूर्वपत्रात्समारभ्य आदिवर्गन्तु विन्यसेत्
एकैकमक्षरं विद्यात् पत्रे पत्रे यथाक्रमम् ५
ककारादिभकारान्तान् केसरान्तान् विनिर्दिशेत्
मकारं कर्णिका ज्ञेया तस्य पद्मस्य मध्यतः ६
यकारादि क्षकारान्तान् पुष्करान्तान् विनिर्दिशेत्
एष पद्मविधिप्रोक्तो हृत्पद्मस्य विशेषतः ७
अङ्गुष्ठाद्यावन्मूर्धान्तमेवमेव विधिस्मृतः
विधिमेव सकृत् ज्ञात्वा न भूयो जन्मतां व्रजेत् ८
षट्पदास्वादलोभेन यथा पुष्पाणि जिघ्रति
एवं सर्वेषु पद्मेषु हृदिस्थो याति नित्यशः ९
यदेतद्धृतिपद्मन्तु अधोमुखमवस्थितम्
तस्य मध्ये तु चात्मानमधश्चोर्ध्वमवस्थितम् १०
अहर्निशास्तु देवेशि मध्यस्य क्रीडते प्रभुः
भुङ्क्ते तु विविधान् भोगान् धर्माधर्मैष्ववस्थितः ११
घटी यन्त्री यथा कश्चित् एकत्स्थः पूरयेद्बहून्
तद्वद्देहस्थितो देहो पूरके रेचकेऽपि च १२
योऽसौ ज्ञेयमिति प्रोक्तं सर्वेषां श्रूयते महत्

स एव चेतनाऽत्मस्थः चेष्टा ह्येतानि कारयेत् १३
स जीव + शति विज्ञेयस्सर्वेषाञ्च व्यवस्थितः
प्रेरकः सर्वभूतेषु इन्द्रियैश्च विशेषतः १४
शुभाशुभेषु सर्वत्र उभयोरपि धावति
धर्मिष्ठानान्तु धर्मिष्ठः पापिष्ठानान्तु पापकृत् १५
अविज्ञातः पशुस्सोहि विज्ञातः पतिरेव सः
एवं पशुपतिश्चायं सर्वप्राणिषु संस्थितः १६
शुद्धस्फटिकसंकाशं तारकेण तु लक्षयेत्
खद्योतमिव नाभाति प्रमाणमिच्छया स्मृतम् १७
स जीवः स पशुश्चैव स शिवो ज्ञेयमेव च
मनश्च चेतनश्चैव स एव परिगीयते १८
देव्युवाच
जीवं कथय देवेश पशुञ्च शिवमेव च
ज्ञेयं मनश्च चेता च कथयस्व विभागतः १९
ईश्वर उवाच
शुभाशुभेषु सर्वेषु जीवः संयुज्यते यदा
जीवन्ते सर्वभूतानि जीवस्तेनेह कीर्तितः २०
तमादि कालरुद्रान्तं पाशानैकस्तु पाशितम्
भ्रमते भ्रममाणस्तु पशुस्तेनैव कीर्तितः २१
अविज्ञातः पशुस्सोहि विज्ञातश्शिव एव हि
ध्यायते पूज्यते यस्मात् तस्माच्छिव इति स्मृतः २२
अगृह्यस्सर्वभूतेषु नामभिश्च विवर्जितः
अस्तीति भवना यस्मात् तस्मात् ज्ञेयमिति स्मृतम् २३
शुभाशुभेषु कर्मेषु सङ्कल्पं कुरुते सदा
मानयोन्द्रे यान्यस्ता +++ २४
++++ इति स +++ भावे व्यवस्थिता

प्रेरकस्तेषु सर्वेषु मनस्थः परमेश्वरः । इति २५
चितिस्वरूपपिराडेषु चेतनाभावमानतिः
स्पर्शितं वेदते यस्मात्तस्माच्चेता इति स्मृतः २६
देव्युवाच
अधोमुखन्तु यत्पद्मं कथमूर्ध्वमुखं भवेत्
अङ्गुष्ठाद्यावमूर्धान्तं नीत्वा शिवपदं व्रजेत् २७
तदहं श्रोतुमिच्छामि यथावत्त्वत्प्रसादतः
ईश्वरः
अष्टमेन हि तत्वेन जातवेदो द्वयेन च २८
अधोर्ध्वगतसंयुक्तमायतेन शिवं व्रजेत्
अधोमुखन्तु यत्पद्मं वर्तते नित्यमेव हि २९
अभेद्यं सर्वयोगीनां गुरुवाक्य बहिष्कृतम्
यथा च भेदमायान्ति अधः पद्मो वरानने ३०
तदहं संप्रवक्ष्यामि भेदामृतमनुत्तमम्
दशग्रन्थिविभेदन्तु क्षुरिकातो यदा भवेत् ३१
अथ ते कथयिष्यामि भेदं तस्य परापरम्
भास्करप्रभवे मार्गे ध्यातव्यं ज्योतिमराडलम् ३२
तदेव संमुखो मन्त्री मरणं परिकीर्तितम्
तत्तेजोऽन्तर्हितं कृत्वा स्वमार्गं पूरकेण तु ३३
मुखनासापुटे कर्णौ चतुष्टौ तु निमित्तकौ
शिखापञ्चसमोपेतं ध्यातव्यं योगिभिस्सदा ३४
स्त्रवन्तममृतं दिव्यं शिखामध्ये विचिन्तयेत्
निर्धूमाग्नौ पतत्येव शिष्यते च मुहुर्मुहुः ३५
एवं ते शोषमायान्ति अधः पद्मसमन्ततः
आपूर्य कुंभकेनैव चित्राकारं विचिन्तयेत् ३६
सुषिरं दृश्यते तत्र बीजं दीपस्य बोधिता

ततस्तेनैव मार्गेण शनैरेचक सुव्रते ३७
ततस्तु प्रथमां ग्रन्थि च्छेदयेच्छेदकेन तु
एवं क्रमेण देवेशि यावन्मूर्ध्नि समाहतम् ३८
ततो हुंकारं कुर्वीत ऊर्ध्वं वायुं सुरेचयेत्
वेगेनाक्षिपतस्तत्र मूर्छा कंपश्च जायते ३९
पतते मोहमापन्नो लब्धचेताश्च योगवित्
पुनराप्यायनं कुर्यात् मूच्छाकंपं विनाशयेत् ४०
अमृतस्यन्दिनी बिन्दुरीढायाः प्रवहेन तु
चिन्तयेत्प्लावयत्येवं तत आप्यायतेद्ध्रुवम् ४१
अधोमुखेन पद्मेन परिवृत्या च दीपिकाः
सिध्यते येन यो भिन्नं मार्गविद्बीजचिन्तकः ४२
अधोमुखेन तत्वेन सकलेन वरानने
एवमभ्यासतो देवि द्विमार्गं प्रवहेन तु ४३
एवमभ्यसतः शोष एवमाप्यायकेन तु
यदा निर्वेदमापन्नो दृष्ट्वा चञ्चलमात्मनः ४४
अनेकेन प्रकारेण आयामान्ते तु च्छेदयेत्
तदा निर्वाणमभ्येति छिन्नपाशनिबन्धनः ४५
इदं देवि न दातव्यं प्रयोगामृतमुत्तमम्
सप्ताहात्तु क्रमेद्वश्यं नात्रकार्या विचारणा ४६
निश्चितेन तु देवेशि शतायुरपि मुत्क्रमेत्
हृच्छिकारसमायुक्त उत्क्रमन्नात्रसंशयः ४७
कर्णान्निष्पीड्य हिक्कायां जिह्वा च परिवर्तयेत्
एष अन्ते प्रकुर्वीत अन्यथा न कदाचन ४८
अभ्यासं पूर्ववत्कृत्वा ज्ञात्वा उपरमेत्ततः
मृत्युलिङ्गं यदा ज्ञातं तदा एतत्प्रयोजयेत् ४९
क्रुद्धलब्धावमानेन कुर्या +++++

विद्या भावाऽथ गच्छेताः स +++ वर्तयेत् ५०
पद्मसूत्राणि सूक्ष्मन्तु नालं तस्य विचिन्तयेत्
अङ्गुष्ठाद्यावन्मूर्धान्तं तावत्पदमनामयम् ५१
ईश्वरेण सहायेन गन्तव्यं शङ्कितेन तु
मूर्तिध्यानं समाश्रित्य त्वा +++++ ५२
प्र ++++ यदा प्राप्तं सखायं परमं महत्
जीवन्तमयतां स्थाप्य गच्छेत्पदमनामयम् ५३
सूत्रेणेव मणिर्यद्वत् वेधयेत्कश्चिन्मानवः
तद्वत्तदात्मको योगी बिन्दुर्मणिरिव ग्रथेत् ५४
यत्तद्वित्रामितं सूक्ष्मं हृत्पद्मन्तु अधोमुखम्
पूरितं कुंभकेनैव तदा चोर्ध्वमुखं भवेत् ५५
ऊर्ध्वत्वं भावयेद्योगी शिखातालुप्रभेदिनी
सूर्यमण्डलमध्यस्था सोमश्चाग्नेश्च मध्यगाः ५६
स्थूलास्सूक्ष्मास्सुसूक्ष्माश्चान्तः करणवर्जिताः
स्थूलञ्चाक्षररूपेण सूक्ष्मं बिन्दुसमाश्रितम् ५७
सुसूक्ष्मं नादमित्युक्तं स नादोऽयं त्रिधा स्थितः
नादान्तर्निहिता शक्तिः शक्त्यातीतस्तु निष्कलः ५८
क्षरतेऽक्षभोगेन बीजसृष्टिरनेकधा
अक्षरप्रकृतिर्ज्ञेया तदतीतस्तु निष्कलः ५९
या सा कुण्डलिनी प्रोक्ता मया पूर्वमुदाहृता
निपतन्ति त्रिधा भूता प्रकृतिः सा परा मता ६०
साणुमात्रा हृदिस्थाने कर्णस्था द्विरणुस्मृता
जिह्वाग्रे त्रिरणं विद्धि निसृतां मातृकां विदुः ६१
चतुर्विधा या देवेशि लिख्यते याऽग्रकुण्डली
लिख्यते पठ्यते नैव अणुर्नादिन वेष्टितः ६२
स्वरार्द्धस्पर्शार्धञ्च शक्तिनाथोऽथ बिन्दुकम्

शिवतत्वन्तु बोद्धव्यं वर्णे वर्णे व्यवस्थितम् ६३
चारणात्स्पर्शनाच्चैव स्वस्वरं समनादितम्
शक्तिश्च शान्तता चैव बोद्धव्यमनुपूर्वशः ६४
उच्चारे कथितो ब्रह्मा अक्षरक्षरसंभवः
आत्मतत्त्वागतो येन आकरस्तेन चोच्यते ६५
स्पर्शे विष्णुस्समाख्यातो विद्यातत्वसमाश्रितः
मायया मोहयत्येष मकारस्तेन चोच्यते ६६
सकलस्तु भवेद्रुद्रो वर्णरूपीह्यधस्थितः
प्राणो भूत्वा हरत्यूर्ध्वं हकारस्तेन चोच्यते ६७
मद्लोर्लेपहीनस्तु झर्झरत्वं प्रपद्यते
बिन्दुहीनास्तथा वर्णा सुसरन्न प्रकाशयेत् ६८
हृत्कर्णतालुमूर्धान्तं नादस्थानं प्रकीर्तितम्
तत्रस्थं चिन्तयेद्योगी शिखां तालुप्रभेदिनीम् ६९
बिन्दुमध्यगतो नादः स तु नादः परापरः
शिवतेजोद्भवा शक्तिः वर्णे वर्णे व्यवस्थिता ७०
तेन दीप्तप्रभावञ्च वर्णा सिद्धिस्तु कामिकी
तत्वेन विततास्सर्वे तन्दुभिस्तु यथा पटः ७१
क्षीरभूते भवेद्वर्णा बिन्दुर्घृतमिव स्थितम्
घृतमथ्यसमो नादः शक्तिर्वीर्यमिव स्थितः ७२
तेजो भूतं परं तत्वं सर्वदोषविवर्जितम्
व्यापकस्सर्व++ नां गुरुवक्त्रात्तु लभ्यते ७३
देवी स्वरार्धं स्पर्शार्धं सुस्वरं समनादितम्
अनया देवि विज्ञातं परेण सह संयुतम् ७४
देवतानान्तु यत्स्थानं वर्णे वर्णे व्यवस्थितम्
तदहं श्रोतुमिच्छामि तत्वतो ज्ञातुमर्हसि ७५
ईश्वर उवाच

स्वरार्धे कथितो ब्रह्मा स्पर्शार्धेन तु केशवः
सुस्वरे च समाख्यातः तत्र रुद्रो व्यवस्थितः ७६
समशब्दे स्थितो गीशः स तु बिन्दुरुदाहृतः
आयते देवदेवेशि नादाख्यः स सदाशिवः ७७
शक्तिः परतरस्तस्य परेण सह संयुता
भागमेकं शिवस्थाने अङ्गेष्वेव द्वितीयकम् ७८
तृतीयं निष्ठमं तस्य येन वर्णास्फुटो भवेत्
चतुर्थन्तु ततो बाह्ये पञ्च षष्ठं तथैव च ७९
वर्णा देहं समाख्यातं यत्र सर्वे प्रतिष्ठिताः
अधुना देहगं देवि कथयामि यथा स्थिता ८०
स्वरोऽहं हृदयो देवि स्पर्शः कण्ठे समाश्रितः
तालुमध्ये समाख्यातं सुस्वराख्यं वरानने ८१
समत्वं यन्मया ख्यातं ललाटान्ते महेश्वरी
तस्योपरि शिखा व्योम नादाख्यस्स सदाशिवः ८२
स्वशक्तिकिरणैर्देवः परस्सर्वत्र संस्थितः
स्वदेहे देवि ज्ञातव्या देवता भवनाशना ८३
अर्धार्धेन विभागेन ज्ञात्वा मुह्यति बन्धनात्
एवं षट् त्रिविधं ज्ञात्वा पञ्च व्योमा परा स्थिता ८४
परस्तु परतो देव शक्तिभावं प्रकाशकम्
तस्य स्थानं न वक्तव्यं स सर्वत्र व्यवस्थितः ८५
त्यक्त्वा सर्वमिदं भावं संस्थितो गुरुवर्त्मनि
पञ्चव्योमपदातीतं यदा प्राप्यति तत्पदम् ८६
तदा व्याप्ता च भोक्ता च तेषां देवि भविष्यति
यदा गुरुमुखाद्देवि विज्ञातं पारमेश्वरम् ८७
तदा वर्णाश्च देवाश्च न किञ्चिदपि चिन्तयेत्
चिन्ताहीनश्च यो देवि स सर्वत्र व्यवस्थितः ८८

तेन युक्ताश्च देवाश्च नानासिद्धिफलप्रदा
तेन हीना न सिध्यन्ति न च यान्ति परं पदम्  ८९
तस्मात्तन्तु वरारोहे वेदितव्यं प्रयत्नतः
न च तेन विना सिद्धिः पूजयाध्वरकर्मणि  ९०
एवं सिद्धिप्रदो देवः स एव मुक्तिदस्सदा
पञ्च व्योमात्मके देहे शक्तिरूपेण भाव्यते  ९१
देवी
पञ्चव्योमेति देवेश न मया यच्च धारितम्
तदहं श्रोतुमिच्छामि भगवन् वक्तुमर्हसि  ९२
ईश्वरः
बीजयोनिसमायोगात् वर्ण इत्यभिशब्द्यते
योनिः पृथक्पृथक् बीजं व्योम इत्यभिधीयते  ९३
पृथक्पृथक् स्वरूपेण व्याप्य स्वस्थानमात्मनि
स्थितास्ते व्योमवद्देवि तेन व्योमेति कीर्तिताः  ९४
सर्वेषां व्याप्य देवेशि बहिरन्तश्च संस्थिताः
तेन सा देवि आख्याता व्योमव्यापी परश्शिवः  ९५
एवं ते ज्ञानिनः सर्वे परेण सह संयुताः
एवं ते ज्ञानिनस्सर्वे परेण सह संयुताः
तादृशं वर्णरूपेण देवदेवमुपास्यते  ९६
तेन ते देवतास्सर्वे काममुक्तिफलप्रदाः
वर्णयोगं यदा ख्यातं तत्स्थानालयभोगभुक्  ९७
सदेवावययुक्तस्तु विलयं दैवतैस्सह  ९८

इति निश्वासकारिकायां ज्ञानकाण्डे हृत्पद्मप्रकरणे
त्रयोदशः पटलः

देव्युवाच
भगवन् श्रोतुमिच्छामि मन्त्रस्यानित्यनित्यताम्
संयोगात्मैकमन्त्रेण कथं मोक्षो विधीयते १
ईश्वरः
संयोगात्मस्य मन्त्रस्य विदित्वा मोक्षमाप्नुयात्
पशुमाकृष्यमात्मस्थः प्रयाति परमं पदम् २
देव्युवाच
जिह्वोष्ठपुटसंयोगात् मन्त्रस्योच्चारमिष्यते
तेनानित्या महा देवः कथं नित्यत्वता भवेत् ३
कथं वाऽनित्यता तेषां भगवन् वक्तुमर्हसि
न संयोगाद्बहिर्मन्त्रो जिह्वोष्ठपुटवर्जितः ४
स्वयं नित्यस्थितौ चात्र तेन नित्यत्वतां नयेत्
इच्छाशक्तिर्महेशस्य मन्त्रात्मावस्थितस्य च ५
उत्तमाधममध्येषु त्रिस्थानावस्थभोगभुक्
उत्तमेष्वुत्तमं भुङ्क्ते मध्यमे मध्यमं तथा ६
हीने हीनं ह्यसौ देवो मन्त्रात्मा क्रीडयत्यसौ
देशिकत्वे समास्थाय पशुं गृह्य वरानने ७
भोगान् भुक्त्वा तु तत्त्वेषु स्थूलात्मा शान्ततां व्रजेत्
अधमो योगिभोगादिं भुञ्जते परमेश्वरः ८
तिर्यक् पञ्चविधञ्चैवमन्त्यभागांस्तथैव च
मध्यमे तात्विकं भोगं भुक्तन्तु परमेश्वरः ९
प्रकृतिञ्चादितः कृत्वा यावद्विश्वेश्वरं पदम्
तृतीयं उत्तरं भोगमिति वारितसर्वभुक् १०
स सर्वज्ञः परो देवः त्रिस्थानेष्वपि क्रीडति
क्रीडते मन्त्ररूपी सो वृश्चिके पन्नगेषु च ११
यस्य यस्य हि यद्वीर्यं मन्त्राणां परिगीयते

तेन तेन हि भावेन क्रीडन्ते परमेश्वरः १२
देव्युवाच
भगवन् श्रोतुमिच्छामि मन्त्रशब्दस्तु यादृशः
संशयो मे महादेव प्रसादी भव शूलधृक् १३
ईश्वर उवाच
मन्त्रशब्दन्तु सामान्यं बहवो मन्त्रजातयः
मातृकासंभवास्सर्वे नास्ति मन्त्रमतः परम् १४
पञ्चधा मन्त्रमुद्दिष्टा नवधा दशधा पुनः
वेदनीयास्तु ते सर्वे शिवतत्वानुवर्तिभिः १५
अपरश्च परश्चैव परेभ्योऽन्यपरस्तथा
परतो यन्मया प्रोक्तस्सर्वेषां व्यापकस्मृतः १६
सर्वव्यापी परो ज्ञेयः कारणः सर्वशक्तिमान्
एकाक्षरस्मृतो मन्त्रो द्व्यक्षरास्त्र्यक्षराः पराः १७
पञ्च षट् सप्तमाष्टौ च अन्ये ब्रह्माक्षरास्मृताः
बह्वक्षरा ये देवेशि मन्त्रास्ते संप्रकीर्तिताः १८
ह्रस्वा दीर्घा प्लुताश्चैव स्वरयुक्तिविसर्गजाः
संयोगेन विहीनास्तु न ते मन्त्राः प्रकीर्तिताः १९
तत्तत्पूर्वं मया ख्यातं देहं परमकारणे
तदेवादौ नमश्चान्ते संयोगं समुदाहृतम् २०
कूटस्थाश्चैव मन्त्राश्च मया पूर्वमुदाहृताः
संयोगेन विहीनास्तु मन्त्रशब्दबहिष्कृताः २१
प्रकृतिस्थं ह्रस्वमेवाहुः दीर्घं दीर्घेण भेदितम्
व्यापकेन समायुक्तं संपतन्तं विनिर्दिशेत् २२
अतीता बिन्दुनादेन परप्रकृतिसंस्थिता
स्वरमन्त्रं विजानीयाद्विसर्गेण विसर्गजाः २३
एवन्तु पञ्चधा मन्त्राः परमेशमुखोद्गताः

पञ्चधा संस्थितान् ज्ञात्वा ततः कर्म समारभेत् २४
हकारो मन्त्र उद्दिष्टस्सर्वेषां प्रभुरीश्वरः
प्रेरकस्सर्वमन्त्रेषु स्वशक्तिबलवर्धनः २५
समन्त्रीमन्त्रनमस्थो मन्त्रात्मा प्रभुरव्ययः
इति निश्वासकारिकायां ज्ञानकाण्डे
मन्त्रोद्धारमन्त्रनित्यत्वविवक्षा प्रकरणे चतुर्दशः पटलः

देव्युवाच
बिन्दुदेवं परं तत्वं सर्वतत्वसमुद्भवम्
श्रोतुमिच्छामि देवेश परं कौतूहलं हि मे १
कथं कस्मिं स्थिता स्तत्वा देवाश्चैव महेश्वर
तत्वं पदं परञ्चैव विदुस्तत्वे यथा स्थितम् २
तदहं श्रोतुमिच्छामि त्वत्प्रसादान् महेश्वर
ईश्वरः
शृणु देवि परं गुह्यं यत्त्वया परिपृच्छितम् ३
तदहं संप्रवक्ष्यामि बिन्दुदेवस्य निर्णयम्
अनक्षरमनुच्चार्यमव्ययं वृत्तलक्षणम् ४
ध्येयमप्रतिमञ्चैव बिन्दुतत्वमुदाहृतम्
बिन्दुभूतस्थितो यस्मात् शिवस्य परमात्मनः ५
दूरस्थः संस्थितो यस्मात् तस्माद्बिन्दुरिति स्मृतः
विद्यातत्वोपरि श्रीमान् संक्रान्तिर्द्वादशैर्युतम् ६
भुवः पतिस्स वै सूर्यः कालरूपी परश्शिवः
कालसंख्यार्थं देवेशि दीप्यते भुविचांबरे ७
अकालश्चैव सूर्यश्च स बिन्दुः स परश्शिवः
स देहस्तन्तु बोद्धव्य स्वगतं दृढगोचरम् ८
सोऽग्निस्तु वर्तुलीभूत्वा प्राणिनां हृदि संस्थितः

सर्वभूतं हृदिस्थोऽसौ ज्वलत्पावकवर्चसम् ९
अन्तरात्मा स विज्ञेयो जगच्चक्षुर्न संशयः
ह्रस्वस्तु दहते ध्यानदीर्घस्तु मोक्षदो भवेत् १०
प्लुतमूर्तिधरो बिन्दुस्सर्वलोकप्रकाशकः
विशतात् बिन्दुरूपाच्च विशेषानलविग्रहः ११
विश्वरूपमलत्वाच्च विलयाद्बिन्दुरुच्यते
विदन्ते येन तत्त्वांश्च देहमध्ये व्यवस्थितान् १२
वेदनाच्चैव तत्त्वानां देहे सर्वत्र संस्थिताः
लयं गमयते यस्मात् तस्माद्बिन्दुरिति स्मृतः १३
बिन्दुमध्यगतं सर्वं त्रैलोक्यं स चराचरम्
सृजन् संहरते विश्वं सदाशिवनियोगतः १४
योऽसौ ध्वस्ततमो बिन्दुः सर्वव्यापी महेश्वरः
क्षोभकस्सर्वभूतानां तारका इव चन्द्रमाः १५
चन्द्रमण्डलसंकाशं विद्युत्पुञ्जघनोपम्
तारकाचलिताकाशं बिन्दुदेवस्य रूपकम् १६
ओषधीनां रसो यद्वत् दीप्तिर्यद्वद्धुताशने
सोमेन सौम्यता यद्वत् कर्णिकायां समासतः १७
संभवस्स तु बीजस्य यो यन्नेत्रेषु दृश्यते
नेत्रमध्ये भवेदात्मा छायाजीवस्य दृश्यते १८
आत्मनो दृश्यते धाया चक्षुर्भ्यां ज्योतिमाश्रितः
क्षेत्रज्ञः स च वै विष्णुः पुरुषः पञ्चविंशकः १९
एकाक्षरं चतुर्भेदं चतुर्मात्रैरलङ्कृतम्
चतुष्कसृङ्कलातीतं बिन्दुं ज्ञात्वा शिवं व्रजेत् २०
यस्ततो दृश्यते शुक्लान्नेत्रयोः प्रान्तसंस्थिताः
आकारो ब्रह्मणो रूपं सात्विकं परिचक्षते २१
रक्तकृष्णा च या तत्र दृश्यते नयनस्थिता

ऊकारं वैष्णवं रूपं राजसं तत्प्रचक्षते  २२
यस्तत्र दृश्यते कृष्णमराडलं नयने स्थितम्
मकारं रुद्ररूपन्तु तामसं परिकीर्तितम्  २३
कृष्णस्वच्छञ्च यस्तत्र नेत्रमध्ये व्यवस्थितम्
स बिन्दुरिति विज्ञेयो यत्रात्मा दृश्यते स्थितः  २४
बिन्दुमध्यगतं सूक्ष्मं सुषिरं ज्योतिरूपिणी
दृष्ट्वाऽन्तं सर्वभूतात्मा स शान्तपददीपकम्  २५
++++ मत ++++ मृतलक्षकृत्
अथ ++++++ देवा विन्यस्य सुवृते  २६
ध्यातव्यं सततं देवि यमिच्छेत्तत्त्रिधा भवेत्
आकारः शुक्लवर्णस्तु ब्रह्मा सत्वगुणे स्थितः  २७
रक्तकृष्णं भवेद्विष्णुराजसं तत्प्रचक्षते
कृष्णन्तु रुद्रविषयं तामसं तत्प्रचक्षते  २८
कृष्णमच्छन्तु यत्तत्र मराडलं नयनान्तगम्
स बिन्दुरिति मन्तव्यो यत्रात्मा दृश्यते स्थितः  २९
स्वच्छमध्यन्तु यत्तत्र नेत्रान्तपदसंस्थितम्
स निष्कलो पराध्यात्मं परं ब्रह्ममिदं स्मृतम्  ३०
नेत्रा श्रुता तु या च्छाया भ्रुवोर्मध्ये विनिर्गता
बिन्दुदेवस्य तत्स्थानं परात्परतरं बृहत्  ३१
यस्मात्प्रवर्तते सृष्टिः स्वरवर्णकलात्मिका
यस्मिंश्च लीयते भूयः तद्बिन्दुरिति संज्ञितम्  ३२
यस्येच्छया विमुच्यन्ते पशवः पाशबन्धनात्
मन्त्रानलाज्यसंयोगात् तद्बिन्दुरिति संज्ञितम्  ३३
निवृत्तिस्थो ह्युदासीनो विद्यास्थः शब्दकारकः
प्रतिष्ठा सृष्टिरभवत् शान्तिस्थः सकले रणः  ३४
बिन्दुमध्यगतो नादो नादमध्यगतो ध्वनिः

ध्वनिमध्यगतस्तारः तारमध्यगतश्शिवः ३५
तत्र जातमशेषं हि तस्मिन्नेव लयं गतम्
नित्यास्ते निर्विकारिण्यो निवृत्तिस्तेन चोच्यते ३६
यतश्चराचरमिदं जगदत्रैव संस्थितम्
तिष्ठत्यलक्षितगुणा प्रतिष्ठा तूच्यते ततः ३७
पशूनामप्रबुद्धानां ईश्वरादिकलान्तकाः
यस्माद्वेदयते तस्माद्विद्येति विहिता कला ३८
क्षित्यानिलाग्नि वाय्वाद्यै रेखा भावो व्यवस्थितः
न लिप्यते सुसूक्ष्मत्वात् तस्माच्छान्तिरिहोच्यते ३९
यत्तत्सदास्ते विमलश्शिवशान्तविलक्षणः
सदाशिवाख्यमित्यस्मिन् नामानि परिगीयते ४०
एतैः कलैः कलायाढ्यो उद्भवक्षयकृच्छिवः
यत्तच्छिवाख्यमाख्यातं तत्त्वमप्रतिमौजसम् ४१
धूम्राग्रपटलाकारं विस्तीर्णं सर्वतो मुखम्
दृश्यते नश्यते चैव स्थूलं बिन्दुरिति स्मृतम् ४२
दीप्रताम्रनिभञ्चैव खद्योतसदृशद्युतिः
हरिकुङ्कुमसङ्काशो मध्यमो बिन्दुरुच्यते ४३
नेत्रमध्ये स्थिता दीप्तिः पूर्यते स्वेन तेजसा
शुद्धस्फटिकसङ्काशो बिन्दुः ज्ञेयःपरापरः ४४
दशदेवमयो बिन्दुः दश कर्मफलप्रदः
दशरूपञ्च बोद्धव्य सूक्ष्मात्सूक्ष्मतरं परम् ४५
सितं रक्तं तथा कृष्णं नीलमेघसमप्रभम्
पीतं रक्तञ्च पीतञ्च कपिलो धूम्रमेव च ४६
दशमं स्फटिकाभञ्च फलमेषां पृथक्पृथक्
+++++++ रणे श्वे ++++++++ ४७
पिशाचनाशने कृष्णं शिवेनोत्तममात्मना

सर्वग्रहविनाशाय नीलं वै परिकीर्तितम् ४८
मेघो व्याधिविनाशाय पीतरक्तञ्च मारणे
+++++++ चैव ++++++ ४९
सर्वकर्मकरो धूम्रस्फटिकाभस्तु मोक्षदः
श्वेतादीनान्तु सर्वेषां देवताः संप्रचक्षते ५०
अनन्तेशादितः कृत्वा शिखण्ड्यन्ताः प्रकीर्तिताः
कालाग्निरुद्रो नवमो दशमस्तु सदाशिवः ५१
इदं मुख्यं शिवाख्यस्य बिन्दुदेवस्य लक्षणम्
बोद्धव्यं साधकैः प्राज्ञैः मुनिभिः मोक्षकाङ्क्षिभिः ५२
शून्याख्यप्रथमो बिन्दुः परशून्यो द्वितीयकः
अतस्तृतीयमेवाहुः तत्वार्थं गहनं पदम् ५३
अक्षोभ्यः परमो बिन्दुः षष्ठो निरतिसंशयः
सप्तमं शून्यतरं स्यात् शून्याभासन्तथाष्टमम् ५४
निराभासस्तु नवमो दशमस्तु रभासकः
सुकान्तैकादशः प्रोक्तो द्वादशस्सुशिवः स्मृतः ५५
त्रयोदश सुनादस्तु ताराख्यश्च चतुर्दश
दशपञ्च वराभास ध्रुवो बिन्दुश्च षोडश ५६
दश सप्ताव्ययः प्रोक्तो विद्यातत्त्वव्यवस्थितः
अव्ययस्तु शिवो यस्तु एवमष्टादश क्रमात् ५७
वेदितव्यः प्रयत्नेन बिन्दुदेवः परापरा
निश्रेण्यात्त्वेकमूलेन आरोहेत्परमं पदम् ५८
देव्युवाच
कथं बिन्दोरनुच्चार उच्चारो वा कथं भवेत्
शून्याच्छून्यतरं शून्यमुक्तमष्टादश क्रमात् ५९
एवं नामविभागेन के तत्वाः परिकीर्तिताः
नेत्राश्रिता तु या च्छाया भ्रुवोर्मध्ये विनिर्गता ६०

कथं तस्य भवेल्लक्ष्म भगवन् वक्तुमर्हसि
ईश्वरः
शृणु देवि परं गुह्यं यत्त्वया परिपृच्छितम् ६१
तदहं संप्रवक्ष्यामि लक्ष्मामृतमनुत्तमम्
एक एव यदा देवि बिन्दुरित्यभिशब्दितम् ६२
अनुच्चारशिवो ज्ञेयः तदव्यक्तमिति स्मृतम्
वर्णहीनं न किञ्चित्स्यात् कूटस्थस्तेन चोच्यते ६३
वर्णसंयुक्तदेहस्तु ब्रह्मादिस्तंबगोचरः
प्रकृत्या जालगहनं सर्वमुत्पाद्य गच्छति ६४
एतदुच्चारमित्युक्तं बिन्दुदेवस्य सुन्दरि
तस्मादन्यैस्तु संयुक्तमुच्चरेत्सर्वकर्मसु ६५
दीक्षाकाले जपे होमे वर्णयागे तथैव च
बिन्दुयुक्तेन कर्तव्यं सर्वकर्मप्रसिद्धये ६६
शून्यशब्देन चाह्वानां यन्मया कथितं तव
पृथिव्यादि विभागेन ज्ञातव्यन्तु वरानने ६७
तस्य प्रसूतिमेकेन शोभने +++
शतं शतञ्च होतव्यं तत्वं तत्वेन सन्धयेत् ६८
षष्ठस्वरविनिर्मुक्तस्सप्ततत्वादिमस्तु यः
एकबीजेन होतव्यं सर्वाध्वानमशेषतः ६९
पूर्णाहुत्यस्तु दातव्याः प्रतिहोमं शते शते
सप्लुतोच्चारयेद्वर्णं बिन्दुयुक्तञ्च कारयेत् ७०
बिन्दुयुक्ते तदा नादं कर्तव्यं देशिकेन तु
तस्यान्ते तु पुनर्देवी पूर्णाहुत्यस्तु पातयेत् ७१
एवं सायुज्यमाप्नोति तत्वे तत्वेन संशयः
नेत्राश्रिता तु या च्छाया तस्या लक्षं वदाम्यहम् ७२
येन विज्ञातमात्रेण मुच्यते जन्मबन्धनात्

अन्यशास्त्रे तु यत्प्रोक्तं तत्सर्वं परिकीर्तितम् ७३
वार्ता तु कथ्यते देवि प्रत्यक्षञ्चाप्ययञ्चनम्
बिन्दुबिन्द्विति देवेशि वदन्ते सर्वयोगिनः ७४
ईदृशं नाभिजानन्ते प्रत्यक्षस्य तु दर्शनम्
खड्गस्याभिमुखेनैव विमार्गप्रवहेन तु ७५
दिव्यदृष्ट्या प्र+++ तेजोमण्डलमुत्तमम्
मुखमावृत्य तिष्ठेत लाक्षावर्णसमोपमः ७६
आदित्योदयसंकाशः कौसुंभरससंभवः
निर्धूमाङ्गारसदृशं पिण्डीकृतमिव स्थितम् ७७
अहन्यहनि यो देवि अभ्यसेल्लक्षमुत्तमम्
द्वादशार्धेन मासेन व्याधिभिश्च न पीड्यते ७८
अनग्निज्वलनञ्चैव ब्रह्महत्या विशोधनम्
कुरुते नात्र सन्देहः शिवतेजोपबृंहितः ७९
सतताभ्यासयोगेन षड्भिर्मासैस्तु सुवृते
जायते सर्वकामित्वं उद्देश्यं त्रिदशैरपि ८०
संवत्सरेण युक्तात्मा योगीन्द्रश्शिवभावितः
त्रैलोक्ये यत्प्रवर्तेत प्रत्यक्षं तस्य जायते ८१
लीलये तेजमध्ये तु देहेनानेन सुवृते
सृजन् संहरते विश्वं शिववत्स्वेच्छतां व्रजेत् ८२
तस्याऽपि तेजसो मध्ये यथा लक्षो भविष्यति
तथा ते कथयिष्यामि अधुना शृणु चान्यथा ८३
तत्तेजस्येव मध्ये तु शक्तिलक्षं यथा भवेत्
ज्ञातव्यं विदितं तैश्च शक्तिलक्षं सुशोभने ८४
एकं विज्ञप्तिमात्रन्तु द्वितीयं सिद्धिमिच्छताम्
लक्षाशीतमहालक्षं द्रुतलोहथकालवित् ८५
प्रत्यक्षेण यथा दृष्टं दिव्यदृष्ट्या तथैव च

प्रत्यक्षस्य प्रवक्ष्यामि योगसद्भावमुत्तमम् ८६
स्तनं निपीड्य वामेन अर्धहस्तं प्रसारयेत्
प्रसृता सर्वमङ्गुल्य एकां तत्र समुत्सृजेत् ८७
मध्यममञ्चैव देवेशि तत्र लक्षं समादधत्
तस्मिन्नग्रे तु संस्थाप्य अभ्यासादपकर्षयेत् ८८
एकदृष्ट्या तु ध्यातव्यञ्चलिते चलिते द्ध्रुवम्
शनैश्शनैस्तु तल्लक्षमाकर्षेन्मुखसंमुखम् ८९
शुक्लगोक्षीरसंकाशं प्रविशन्तं विचिन्तयेत्
सुशीतलमुखस्पर्शं अनौपम्यमनुत्तमम् ९०
लब्धमात्ररसन्देवि सिध्यते नात्र संशयः
मेधाकान्तिसमायुक्तो मासमात्रं न संशयः ९१
देहमस्य विशेषेण उत्पतेन्नात्र संशयः
शक्तिवत्सर्वगामित्वं भवते साधकेश्वरे ९२
अप्रविष्टेऽपि लक्षे तु सुभगः प्रियदर्शनः
सार्वशास्त्रस्य वेत्ताऽसौ वागीशेन न संशयः ९३
प्रत्यक्षस्येव लक्षस्य कथितं तव शोभने
दिव्यदृष्ट्या तु या सिद्धिरस्य संक्षेपतः शृणु ९४
निश्चलं दृश्यते देवि मानो ह्लादकरं नृणाम्
लक्षयीत महालक्षं सर्वसिद्धिप्रदायकम् ९५
त्रैलोक्ये यत्प्रवर्तेत प्रत्यक्षं तस्य जायते
अग्निवज्ज्वलते योगी जरामृत्युविवर्जितः ९६
यं यं स्पृशति हस्तेन यं यं पश्यति चक्षुषा
अग्निवत् ज्वलते सर्वं दुस्पर्शं त्रिदशैरपि ९७
भक्ष्याभक्ष्यैर्न लिप्येत शुपचानपि दीक्षयेत्
ब्रह्महत्यादिभिः पापैः नैवलिप्येत योगवित् ९८
त्रिस्थानावस्थितं बृन्दं शेषं मालेव लक्षयेत्

प्रत्यक्षे शुक्लपीतानि नीलकृष्णसितानि च ९९
एवमादीनि वर्णानि शुक्लमध्ये तु लक्षयेत्
सूत्रेणैव मणिर्यद्वद्वेधितः भ्राजते शुभे १००
एवं भ्राजति सा माला नादतन्तुस्युतानि तु
एष ते तत्त्वसद्भावं तव देवि उदाहृतम् १०१
अधुना कथयिष्यामि बिन्दुलक्षणमुत्तमम्
तस्य मण्डलमध्ये तु ललाटस्योपरि स्थितः १०२
जलबुद्बुदसंकाशं स्वच्छस्फटिकनिर्मलम्
धूम्रवर्णन्तु देवेशि अनेककिरणोज्वलम् १०३
अहन्यहनि वर्धेत लक्षमेतद्वरानने
मासमात्रेण योगीन्द्रो यां दिशामवलोकयेत् १०४
विद्युच्च शिवसंकाशं पश्यते नात्र संशयः
स्रवन्तञ्चिन्तयेद्बिन्दुं तुर्यचारेण योगिनः १०५
घण्टिकातालुमार्गेण हृत्पद्मे वितते शुभे
एतन्मृत्युञ्जयार्थाय ध्यातव्यं योगिभिस्सदा १०६
इडायाः पवहेनैव सर्वमाप्यायते ध्रुवम्
विविधेन वरारोहे सर्वसिद्धिकरः स्मृतः १०७
एतल्लक्षपरं दिव्यं सर्वसिद्धिकरं भवेत्
दूरश्रवणविज्ञानं मननञ्चावलोकनम् १०८
जायते नात्र सन्देहे देहेनानेन सुवृते
पूर्वोक्ता यानि रूपाणि सर्वाण्यस्मिन् प्रतिष्ठिता १०९
दृष्टलक्षेण देवेशि सर्वसिद्धिकरः स्मृतः
सिद्धयः सन्ति सर्वत्र तत्त्वालोकेषु सुवृते ११०
इदं देवि न दातव्यं ज्ञानसद्भावमुत्तमम्
दुर्विदग्धे शठे क्रूरे अन्यायपथवर्तिने १११
देयन्दान्ताय शान्ताय शिवभक्तिरताय च

शिववर्त्मन्यते यस्तु आचार्यं तत्वपारगम् ११२
शिवाद्गुरुतरी भक्तिः यस्य नित्यं गुरोस्सदा
तस्य देयमिदं ज्ञानं अन्यथा न कदाचन ११३
देव्युवाच
चतुष्कं यं महादेव गगत्सर्वं चराचरम्
कथयस्व यथान्यायं कलाध्वानं मम प्रभो ११४
ईश्वरः
कलाध्वानं प्रवक्ष्यामि तत्समासेन मच्छृणु
निवृत्या च यथा सृष्टिः प्रतिष्ठाया यथा भवेत् ११५
विद्या ++ संप्रवक्ष्यामि शान्त्याश्चैव समासतः
शान्त्यतीतञ्च देवेशि कथयामि समासतः ११६
निवृत्यायास्तु होतव्यं पृथिव्यादिरनुक्रमात्
प्रकृत्यन्ते तु देवेशि तस्य सृष्टिरुदाहृता ११७
पौरुषं त्वादित्तः कृत्वा माया तत्वमपश्चिमम्
प्रतिष्ठायास्तु होतव्यं दीक्षाकाले महेश्वरी ११८
विद्यान्तु आदितः कृत्वा यावत्तत्वं सदाशिवम्
विद्याया होमयेन्मन्त्री दीक्षाकाले शिवाध्वरे ११९
शान्त्यायाश्चैव होतव्यं शिवतत्वं यथाक्रमम्
शान्त्यतीतेन देवेशि दद्यात्पूर्णाहुतिं क्रमात् १२०
ओंकाराद्दीपनं कृत्वा नमस्कारमलन्तथा
ह्रस्वहंसो निवृत्तिः स्यात् प्रतिष्ठा दीर्घभेदिता १२१
विद्याबिन्दुसमायुक्ता कर्तव्या देशिकेन तु
विसर्गेण समायुक्ता शान्तिर्वै परिकीर्तिता १२२
हंसोकारसंमायुक्तवौषडन्तसमन्वितम्
अर्धेन्दुनादसंयुक्तमूकारेण समन्वितम् १२३
एतद्देवि समाख्यातं शान्त्यतीतस्य कारणम्

तेन पूर्णाहुतिं दद्यात् शिवसायुज्यमिच्छताम्  १२४
निवृत्याष्टत्रितत्वानि होतव्यानी तु देशिकैः
प्रतिष्ठायान्तु सप्तैव होतव्यानि समाहितैः  १२५
विद्यायां त्रीणि तत्त्वानि विद्यापूर्वाणि होमयेत्
उपरिष्ठाच्छिवं तत्वं शान्त्यायां समुदाहृतम्  १२६
एतद्देवि कलाध्वानं सृष्टिव्याप्तिरुदाहृता
एवं ज्ञात्वा तु मुच्येत मोचयेच्च न संशयः  १२७
देव्युवाच
अक्षराश्चैव देवाश्च सर्वे बिन्दुसमाश्रिताः
बिन्दुभिः द्युतिनादेन स नादः केन भिद्यते  १२८
ईश्वर उवाच
तस्य पुष्करमध्ये तु बीजजीवमुदाहृतम्
मृणालतन्तुसूत्राभं नादशून्येन भिद्यते  १२९
देव्युवाच
निष्कलः कथितो देव बिन्दुदेवो महेश्वरः
तस्याहं श्रोतुमिच्छामि कथं सकलनिष्कलम्  १३०
पुनश्च संशयो देव बिन्दुदेवो महेश्वरः
कथयस्व महेशान भेदं तस्य परापरम्  १३१
ईश्वरः
शृणु देवि परं गुह्यं यथा सकलनिष्कलम्
तदहं संप्रवक्ष्यामि बिन्दुदेवस्य शोभने  १३२
पञ्चाशत्तत्वसंभूतिः बन्धमोक्षप्रबन्धकृत्
स्थितः संहारतत्वेऽस्मिन् व्यक्तरूपं स्वयंभुवः  १३३
योगपीठस्थितो देवः सकलः परिकीर्तितः
तदतीतं पुनर्देवि निष्कलं कथितं तव  १३४
देव्युवाच

तस्य देहः किमात्माऽसौ किं बीजैर्विदितोच्यते
एतदिच्छामि विज्ञातुं भगवन् वक्तुमर्हसि १३५
ईश्वरः
ईशानादिवशोक्ते तु मन्त्रशब्दे तथा परे
इज्यते गुणमाहात्म्यात् सर्वतत्वादितो महान् १३६
चतुर्दश स्वरातीतं कलातीतमतीन्द्रियम्
नपुंसकैः सह ज्ञेय अक्षरन्तु त्रिपञ्चकम् १३७
त्रिपञ्चकपरोऽन्यस्तु बिन्दुत्वे मुक्तषोडशी
स शिवः सकलो ज्ञेयः स शिवः सृजते कलाम् १३८
बिन्दुरन्तेन संरुद्धश्शब्दकूटविनिस्नुतम्
बिन्दु विजृम्भते ग्रन्थ्या ततः शब्दसमुद्भवः १३९
पञ्च शङ्घातनिष्यन्दं बीजयोनिसुवासितम्
शक्त्यंबुनाऽभिषिक्तस्तु बिन्दुतेजोङ्कुरो महान् १४०
देव्युवाच
बिन्दुतेजेति किन्नाम कोऽसौ बिन्दुरिहोच्यते
ईश्वरः
तदहं संप्रवक्ष्यामि त्वत्प्रसादान्महेश्वरि १४१
एष ते भगवान् बिन्दुस्सर्वलोकस्य गामिकः
नादमध्यावसानोऽसौ नोत्पत्तिप्रलयात्मकः १४२
नक्षत्रं न च वा बीजं कर्ता तस्य न विद्यते
न क्षीयते न चाल्पोऽपि न निन्द्यो वर्धते क्वचित् १४३
अव्यक्ताव्यक्तसंस्थानं सुसूक्ष्मो न च सूक्ष्मवान्
वायुवद्भ्रमते नित्यं मूरिभिर्दशभिस्तथा १४४
अष्टलोकजगत्पालः पङ्कजेक्षमंबुना
स एष भगवान् बिन्दुस्सर्वलोकजगद्गुरुः १४५
कल्पक्षयकरश्चराडस्ससप्तद्वीपादिपूर्णकः

सप्तार्णवावशेषोक द्वादशार्कनिपातनः १४६
रसातलास्वालकं ++ भुजङ्गाङ्गविमर्दनम्
इहैकाण्डं जगत्कृत्स्नं मृत्पिण्डमिव संस्थितम् १४७
सूक्ष्मेण योगतुलया चराचरमिदं जगत्
चिबुकार्धार्धकक्षेव मणिवत्तुलयोच्छिवः १४८
संसारघटिवद्यन्त्रं भ्रामयन्मायया जगत्
स कालस्स च वै मृत्युस्स इन्द्रो वरुणश्शशी १४९
सोऽनलो नील आदित्य आकाशश्च क्रमेण तु
स ब्रह्मा स च वै विष्णुरुद्रईश्वर एव च १५०
ह्री श्री स्मृतिधृतिश्चैव मेधाकान्तिस्सरस्वती
प्रकृतिः पुरुषश्चैव नियतिः काल एव च १५१
माया विद्या च ईशोऽयं बिन्दोस्सर्वमिदं जगत्
वेदं सांख्यञ्च योगञ्च बोद्धमार्हतं तथा १५२
यानि कानि च शास्त्राणि सर्वे बिन्दोर्विनिसृताः
सर्वं बिन्दुमयः ज्ञेयं चित्तं चैतन्यमाकृतिः १५३
सर्वामरमयं श्रेष्ठं सर्वशास्त्रधुरन्धरम्
अप्रमेयश्च सूक्ष्मश्च अव्यक्तश्च सनातनः १५४
चलते स्पन्दते शेते भुञ्जते जाग्रतेऽपि च
शिवभावितधर्माणां बिन्दुदेवस्सदात्मकः १५५
अर्धनारी विभक्ताङ्गो तदा ते सकलस्मृतः
लीनांशनात्मयोगेन तदा सा निष्कलस्मृतः १५६
इति निश्वासकारिकायां पञ्चदशः पटलः

देव्युवाच
भगवन् श्रोतुमिच्छामि नादशब्दस्य निर्णयम्
स्थूलसूक्ष्मविभागेन द्विप्रकारं प्रकीर्तितम् १

कथं स्थूलं भवेन्नादस्सूक्ष्मं वाऽपि महेश्वर
कथं शरीरे ज्ञातव्यं तत्वतः क्रथयस्व मे २
ईश्वरः
शृणु देवि परं गुह्यं यत्त्वया परिपृच्छ्रितम्
तदहं ते प्रवक्ष्यामि नादज्ञानमनुत्तमम् ३
योऽसौ घोषस्सुसंपूर्णः श्रूयते देहमध्यतः
प्रकृतिस्तत्र संभूता महाजालपरिच्छदा ४
तस्य घोषस्य मध्ये तु स्थितं तत्र निवेदयेत्
पुरुषस्तत्र सञ्जातो गुणातीतो निरञ्जनः ५
तृतीयन्तु महच्छब्दं स्थितं घण्टानिनादवत्
तस्मिन् रुद्रस्समुत्पन्नः प्रभुस्त्रैलोक्यनायकः ६
योऽसौ शान्तस्समाख्यातश्शब्दः परमकारणम्
कोपिप्रदण्डप्रतीकाशा ज्योत्स्नाकरमिव स्थितः ७
तस्मिन्नीशस्समुद्भूतस्तेजो राशिर्महात्मनः
योऽसौ सिद्धः शिवस्सूक्ष्मः सुशान्तस्सर्वतोमुखः ८
अप्रमेयो ह्यनुच्चार्यो नादात्मा स तु कीर्तितः
लयस्थानन्तु तत्त्वज्ञैः स एव परिकीर्तितः ९
लयातीतं परो देवो निरूपाख्यो निरामयः
ज्ञात्वैवं मुच्यते ज्ञानी मुञ्जानो विषयानपि १०
एतद्ज्ञानं परं गुह्यं नाख्यातं यस्य कस्यचित्
देव्युवाच
कोऽसौ नादः किं प्रमाणः किं रूपः क्षरितः कुतः ११
किमर्थं केन चैवाऽयं ईरितः संप्रवर्तते
ईश्वर उवाच
ममैषा परमा मूर्तिः नादसंज्ञा वरानने १२
चिन्त्यते योगिभिर्नित्यं अपुनर्भवकाङ्क्षिभिः

नास्य प्रमाणं व्यापित्वान्मुक्तेः समुपलभ्यते १३
अनादित्वात्संभवश्च नित्यत्वान्नियतिर्न च
यथा संवेत्यनुच्चार्य शब्दाक्षरविवर्जितम् १४
संप्राप्यते सुखेनैव तदुपायं ब्रवीमि ते
अङ्गुष्ठाभ्यां छादयित्वा साधकश्रवणावुभौ १५
ततश्शृणोति तन्नादमंबुदप्रतिमस्वनम्
अस्य संश्रवणाद्देवि नादस्यायतलोचने १६
परमभ्येति निर्वाणं छिन्नपाशनिबन्धनः
ममात्मीयमिदं सूक्ष्मं शरीरं नादसंज्ञितम् १७
पशोः पाशोपनोदाय प्रकाशीकृतमद्भुतम्
ततः परतरध्येयं योऽन्यः प्रत्युपदिश्यते १८
न चैतदप्रसन्ने तु मयि देव्युपलभ्यते
परमे तस्य वीर्यं यत् अनुच्चार्यमनामयम् १९
सम्यक् यस्संविजानाति तन्मयत्वं स गच्छति
एष ते कथितः सम्यक् नादः परमदुर्लभः २०
सांप्रतं शृणु यत्रायं लयमायात्यनिन्दितम्
पदमेतदतिक्रम्य चतुर्थं तुर्यसंज्ञितम् २१
पञ्चमं पदमाकाशं लक्षयेत्समवस्थितम्
तच्चाचलमनिर्देश्यमनन्तमजमव्ययम् २२
अनादिमध्यनिधनमेकमप्रतिवृत्तिमत्
निष्प्रपञ्चमनस्वान्तमतीन्द्रियमनामयम् २३
विस्तीर्णमव्यवच्छिन्नमध्यान्तं सर्वतोमुखम्
निष्तूयं विमलं वृत्तमुत्तुङ्गव्यापिनद्ध्रुवम् २४
सदाशिवाख्यमाकाशमीदृग्गुणमुदाहृतम्
जगद्बीजमिदं सूक्ष्मं परमाकाशमव्ययम् २५
नादोऽत्र लयमायाति निवृत्तं कार्यसंक्षये

पदमेतीच्छान्तिलयं गतो ह्यत्रापि संख्ययः २६
तदिच्छया भवन्त्येते पुनश्शब्दशरीरिणः
ततस्ते शब्दतनवोश्चक्रवर्ति पदे स्थिताः २७
लोकानुग्रहकर्तृत्वं प्रकुर्वन्ति पतीच्छया
तेऽधिकारं ततः कृत्वा कालस्यास्य परिव्ययात् २८
अप्राप्यमात्मकं भावं यान्ति शून्यमदं पुनः
इति निश्वासकारिकायां षोडशः पटलः

शक्तिलक्षणम्
देवी
शक्तिं शिवमहादेव कथयस्व विशेषतः
किमन्या कारणे शक्तिः अनन्या वा प्रकीर्तिता १
अन्यानन्यतया वाऽथ एतत्पृच्छामि संशयम्
यदि नान्या भवेच्छक्तिः तयोर्ब्रूहि यदन्तरम् २
अथवाऽन्या भवेच्छक्तिः शिवस्तस्मादकारणः
अनन्यान्यत्वभावेन अस्तिनास्तीति संशयः ३
प्रत्ययान्तानि शास्त्राणि संशयात्मा विनश्यति
तस्मान्निस्संशयो ब्रूहि अगोप्यं परमेश्वर ४
ईश्वरः
अनन्या कारणे शक्तिः अधिष्ठातृत्वलक्षणा
सर्वज्ञा चेतना शुद्धा सर्वतत्वप्रकाशिका ५
सर्वतत्वेषु तत्रस्था तांस्तान् भावान् प्रकाशयेत्
गुणतो दोषतश्चैव शुद्धाशुद्धेषु प्राणिषु ६
तथा सर्वेषु भूतेषु तत्त्वभावेन्द्रियेषु च
सर्वेष्वनुगतां शक्तिः नित्यं सर्वेषु तिष्ठति ७
दाहकत्वं यथा ह्यग्नौ शैत्यभावश्च वारिषु

अ +++ नात्वे षट् वर्तन्तेऽथ चेश्वरशक्तयः ८
पृथिव्यो धारणं यद्वत् सूर्ये यद्वद्गभस्तयः
आकाशे चावकाशित्वं तत्त्वदीश्वरशक्तयः ९
पृथिव्यान्तु यथा गन्धो रूपं तेजो जले रसम्
स्पर्शोऽनिलेंबरे शब्दस्तद्वदीश्वरशक्तयः १०
क्रिरणा इव सूर्यस्य मणीनामिव रश्मयः
शक्तिशक्तिमतोस्तद्वदनादित्वमिहोष्यते ११
रत्नाग्निद्युतिसोमाद्या अविभक्ता रवेर्यथा
तेजो लोका स्वदेहस्थास्तथा शक्ति परे शिवे १२
अविभक्तं विभक्तञ्च धर्माधर्मित्वलक्षणम्
धर्मिणः स्वेच्छया धर्मं प्रवृत्तिमधितिष्ठति १३
अभावे धर्मिणी धर्मप्रसिद्धिमुपगच्छति
धृते धर्मिणि धर्मोऽसौ सत्कारणमिहोच्यते १४
इति निश्वासकारिकायां सप्तदशः पटलः

देव्युवाच
अद्याऽपि संशयो देव ज्ञानं ज्ञेयं महेश्वर
कथयस्व अशेषन्तु तत्वभेदं परापरम् १
कथं शरीरे चेष्टानि तत्त्वाः कुर्वन्ति देहिनाम्
कथञ्च शयने तत्वा विदन्ते स्वप्नवारिणः २
तिष्ठतो गच्छतो वाऽपि ब्रुवतो हसतोऽपि वा
श्वसने कस्थिता स्तत्वा दीर्घप्राणे चरे स्थिताः ३
तस्य मध्यावसाने च के तत्वाः परिकीर्तिताः
नृत्यतो गायतश्चैव मन्युदः करुणोत्सुके ४
अनिमित्ते च के तत्वा निरीक्षे चैव के स्थिताः
एष कर्मसु सक्तानां प्राणत्यागेषु का गतिः ५

केन वा प्रेरितास्तत्वाश्चेष्टां कुर्वन्ति तद्वद
विज्ञायन्ते कथं तत्वा अष्टधा नवधा स्थिताः ६
कथं वर्गान्तवर्गेषु समन्तत्वं समं रसः
अन्तः करणहीनाश्च यथा देहे प्रतिष्ठिताः ७
एतद्गुह्यं महादेव कथयस्व प्रसादतः
ईश्वर उवाच
शृणु देवि परं गुह्यं देहे तत्वा यथा स्थिताः ८
यथा चेष्टाञ्च कुर्वन्ते परेणाधिष्ठितास्तु ते
श्रूयतां ज्ञानसद्भावं तत्वभेदं परापरम् ९
उदात्तं व्याकुलं चित्ता रविसंविक्रमस्तथा
हर्षोन्मादश्च संमोहः कथितं सुरसुन्दरी १०
सकले सरसं प्रोक्तं ज्ञातव्यं तत्त्वचिन्तकैः
ऊर्ध्वेधरोनुभावश्च वामदक्षिणतस्तथा ११
आकर्णान्निश्चलश्शान्तः कथितं निष्कलं परम्
वाग्वक्त्राधरनिक्षिप्तमनिमित्तनिरीक्षणम् १२
प्रहसन् हृद्गतो भावं परभासे कथितेष्टधा
एवं वै अष्टधा ज्ञात्वा एतद्वै शून्यलक्षणम् १३
हृद्यतास्वादतस्तालुः कासो श्वासः प्रलंबिका
हुंकारमनसंयुक्तिः कलाढ्यः कथितोऽष्टधा १४
मधुरं हलाहलं भासं भीतं सन्त्रासकंपितम्
मन्युकारुण्यसंयुक्तं मुखसंस्थमुपलक्षयेत् १५
बलनं भङ्गुरं देवि व्यावृत्तञ्च सुरेचितम्
अनलानिलनिक्षिप्तं गेयं झङ्कारसंयुतम् १६
क्षपणान्नाममुद्दिष्टं कथितं ज्ञानमुत्तमम्
आघुर्मितं विघूर्मितं सुषुप्तं सुप्तलक्षयेत् १७
स्वप्नाभिघातसन्तानं निबोधस्तु सुशोभने

क्षयान्तस्य गुणाह्येते ज्ञातव्या स्तत्वचिन्तकैः १८
सौम्यस्थिरगतिश्शीघ्रं वल्लनञ्चालनं तथा
हुंकारं जर्भरवाक्यञ्च कराठोष्ठ्ये निगमाष्टकम् १९
व्यापित्वं कथितं देवि स्वरसञ्च निबोध मे
उदाने सकलो देवो व्याकुले निष्कलं परम् २०
चिन्ताशून्ये विजानीयात् हृद्भेदः कथितो मया
रहस्ये तु कलासारं विक्रमेव मलं स्मृतम् २१
हर्षे क्षेपमित्युक्तं ज्ञातव्यं ज्ञानवेदिना
क्षयमन्तं वरारोहे उन्मादे चावधारय २२
कराठोष्ठ्यन्तु ततो मोहे एतद्वै प्रथमाष्टकम्
ऊर्ध्वे सकलसंयोगं निष्कलं धारकंपितम् २३
निराभं शून्यमित्युक्तं प्रेक्षितव्यं प्रयत्नतः
वामे कलेश्वरं तत्वं दक्षिरो भुजमालिनम् २४
ग्राकर्णे क्षपणो देवि ज्ञातव्यं हृत्प्रयोगतः
क्षयमन्तं वरारोहे निष्कलो देहलक्षितः २५
शान्ततत्वे मम प्रोक्तं द्वितीयं भेदलक्षणम्
सकलं वक्त्रमार्गे तु वाममार्गे तु निष्कलम् २६
शून्यमाधारविक्षेपे स्वभावाभावकल्पितः
ग्रनिमित्ते कलाढ्यस्तु निरीक्षे समलस्मृतः २७
क्षपणं हसिते ज्ञेयं मनसे वेव लक्षयेत्
हृद्गतक्षयमन्तस्थ उद्भासे कथयामि ते २८
कराठोष्ठ्यप्रभुरीशानस्संस्थितो नास्ति विक्रमः
त्रिविधेन तु विज्ञेयं ज्ञानभेदे मलाष्टकम् २९
कथितं तु वरारोहे तृतीयं भेदमुत्तमम्
हृद्याता सकलो देवो निष्कलस्यादलक्षितः ३०
तालुशून्यं विजानीयात् स्वभावे भावलक्षयेत्

कलाढ्यो भासिते विद्यात् खमले श्वासकंपिते ३१
प्रलंबे क्षपणं देवि ज्ञातव्यं स्वरितीरितः
क्षपितन्तु वरारोहे हुंकृतेन तु लक्षयेत् ३२
नमयुक्तस्तथा देवि कण्ठोष्ठ्यः परिकीर्तितः
चतुर्थं भेदमेतत्तु कथितं सुरसुन्दरी ३३
मधुरे तु वरारोहे सकले शाश्वता गतिम्
गलानन्तपदं विद्यात् हास्ये शून्यार्थलक्षितम् ३४
भीते कालेश्वरं ज्ञेयं त्रासिते खमलं स्मृतम्
कंपिते क्षपणं प्रोक्तं कथितन्त्वनुपूर्वशः ३५
क्षयमन्यो स्थितं तत्वं कारुण्यममृताष्टकम्
पञ्चमं भेदमेतद्धि कथितं त्वनुपूर्वशः ३६
चलने त्रिपदाधारं भङ्गुरे निष्कलं परम्
व्यापिते शून्यमित्याहुः एष ते भुजमालिनम् ३७
खमलानिलविक्षेपे क्षपणेनन्तरे स्थितम्
पृथग्भावस्सदा ह्येते बोद्धव्यास्त्वपराजिते ३८
क्षयमन्तं वरारोहे गेहे तन्तुविधारय
झङ्कारस्वरसंयुक्तं कण्ठोष्ठ्यं सुरसुन्दरी ३९
कथितान्यनुपूर्वेण षड्भेदास्संप्रयोगतः
अघूर्मिते कलाधारं विघूर्मे निष्कलात्मकम् ४०
सुषुप्ते शून्यमित्याहुः स्थगितमुपलक्षयेत्
स्वप्ने तु कलनात्कालं स्वप्नान्ते समलं स्मृतम् ४१
विघाते क्षपणा देवि सन्ताने क्षयमन्तकम्
कण्ठोष्ठ्यन्तु विबोधे तु सुभेदः सप्तमः क्रमात् ४२
सौम्ये सौम्यगतिं प्राहुः स्थिरे वै निष्कलं परम्
शीघ्रं शून्यं विजानीयात् स्वगतमुपलक्षयेत् ४३
वल्गने कालतत्वाख्यं चालने समलं स्मृतम्

हुंकारे क्षपणो देवः सर्वमेतद्विपारयेत् ४४
क्षयान्ते झर्झरं प्रोक्तं शुभाख्ये उपलक्षयेत्
वाक्ये स्थूलपदे शुभ्रे कण्ठोष्ठ्यः सर्वतस्थितः ४५
एतद्भेदाष्टकन्देवि तत्वभेदामलं परम्
तत्वं विज्ञायते सम्यक् विधिपूर्वेण निष्कलम् ४६
एवं विज्ञानभेदज्ञो मोक्षन्तस्य न संशयः
हंसाख्ये बिन्दुनादञ्च अर्धचन्द्रे निरोधिका ४७
व्यापिनी त्यूर्ध्वगामी च शक्तिश्शान्तपदं महत्
अक्षरे चाक्षरं सर्वं बोद्धव्यमनुपूर्वशः ४८
एवं यो वेत्ति तत्त्वेन स भवेत्तत्परा गतिः
एवं वै ह्यष्टधा भेदं व्याख्यातं तव शोभने ४९
नवधा तु पुनः पश्चात् कथयिष्ये यथा भवेत्
इति निश्वासकारिकायामष्टादशः पटलः

ईश्वर उवाच
अतः परं प्रवक्ष्यामि शब्दज्ञानमनुत्तमम्
वाक्यस्थं हृदयस्थन्तु ददाने वैव संस्थितम् १
त्रिस्थाने सकलो देवः पाशबन्धक्षयं करः
शिवञ्चानुगतं विद्या विद्याराज्ञान्तु विक्रमः २
श्वसनेऽनुगतं देवि निष्कलन्तु विनिर्दिशेत्
अपाकप्रभवं दिव्यं नाभिकर्णान्तवर्जितम् ३
शून्यमध्यगतं नित्यं सर्वान्तः पाशमोक्षकम्
कर्णनाभ्यन्तरे तालुं पद्मनालानुकुञ्चितम् ४
कलाढ्यन्नाममुद्दिष्टं सर्वाकारकारकम्
उभौ तौ तत्क्षिपत्तत्वं शान्तत्वं सकलैस्सह ५
मनो लयैस्सदा चिन्त्यमखिलं खपदैस्सह

ऊर्ध्ववाहमनौ गारं प्रस्फुरन्तं समासतः ६
सुप्रयुक्तं सुशान्तञ्च क्षपणोपाशबन्धहृत्
हृत्पद्मेनाभिदेशन्तु कर्णतालुकमध्ययोः ७
अन्ते ह्येतेषु स्थानेषु क्षयः पाशान्तकः शुभः
उदाने निश्चलस्थाने सर्वस्थाने सुलोचने ८
सर्वशब्देन भोक्तव्यं कूटस्थं शब्दमष्टमम्
एतच्छब्दाष्टकं देवि हिताय समुदाहृतम् ९
निश्रेयन्नच दातव्यं ज्ञानन्नास्ति अतः परम्
अनादिनिधनाभावदुर्लक्षं शून्यभावना १०
तस्मात्सर्वप्रयत्नेन भावाभावेन लक्षयेत्
तेनेदं ज्ञातं सुश्रोणिर्यस्य भावेन मस्थितिः ११
अभावरक्षणार्थाय भावजाल्पे मया कृतः
अभावस्य परित्यागी भावोपगतचेतसः १२
ताबद्भ्रमति संसारे यदा भावन्न विन्दति
श्रुतिस्मृत्यर्थवाक्यैश्च काव्यालङ्कारशोभनैः १३
चिन्तया शब्दशास्त्राणां संमूढो यात्यथोगतिम्
अभावश्शून्यतां याति शून्यञ्चाभाव उच्यते १४
अभावो मोक्ष इत्युक्तो बन्धनं भावकल्पना
अभावेन सदा शून्ये मनो निश्चलतां गतम् १५
ततो निर्वाणगो देही निलयं यात्यनामये १६
अपदपदमगम्यं शुद्धनिर्वाणशून्य-
मुपरिविततव्योमं व्यापिनञ्चिन्तयामि ।
येनाभ्यस्तसशून्यन्न पुनरिह नरो जायते गर्भबाह्ये
सञ्छिन्नं पाशजालं प्रकृतिविरमते सृष्टिभावे निकृतः १७
एकान्तं शून्यभूतं पशुकलरहितं पश्यनिर्वाणशून्य-
न्निर्मुक्ताशेषबन्धैः कथितमिहपदं पश्य निर्वाणबन्धैः १८

इदं शून्यमिदं शून्यं शून्याच्छून्यं परापरम्
शून्यादपि च यच्छून्यन्तच्छून्यन्तु निरामयम् १९
इति निश्वासकारिकायां ज्ञानकाण्डे
एकोन विंशति पटलः

देव्युवाच
वेदसांख्यपुराणज्ञा पाञ्चरात्रेतिहासयोः
योगिनश्च तथा चान्ये कुपथेष्वपि ये स्थिताः १
कुचक्रेण मोहयित्वा तु स्वदेहं दर्शयन्ति ते
तेऽपि चात्र ब्रुवन्त्यैव गतिरत्र कुतोऽन्यतः २
पक्षपातो भवेदेषो मोक्षः सर्वत्र वा भवेत्
एवं मे संशयो देव यत्सत्यं तद्ब्रवीहि मे ३
ईश्वर उवाच
अहं त्वञ्च विशालाक्षी मूलं सर्वजनस्य तु
मातृका शिवरूपेण बुद्धिसंभवपादपम् ४
आब्रह्मस्तंबपर्यन्तं जगत्सर्वं चराचरम्
मम बीजोद्भवास्सर्वे तव योनिविनिर्गताः ५
वेदाद्याः पञ्च ये प्रोक्ताः महाज्ञानानि भूतले
संस्कृतं प्राकृतञ्चैव अपभ्रंशानुनासिकम् ६
दिव्यादिव्यञ्च यत्किञ्चित् वाङ्मयं त्वत्प्रसूतिजम्
त्वं सदा दर्पिणी देवी अहंकाररता सदा ७
विकारास्तव जायन्ते यतस्सर्वं प्रतिष्ठितम्
अविकारं ततो लोको मद्विकारमपासितम् ८
मूलज्ञानविमूढास्ते ते यान्ति न परां गतिम्
मुञ्जतां षड्रसाहारं म्रियन्ते सर्वजन्तवः ९
मृतसञ्जीवनी मूलं भक्षयित्वा न मृयन्ति ते

मृत्पिण्डेषु घटो यद्वत् तन्तुष्वेव पटो यथा १०
शक्तिरूपास्थिता वर्णा व्यक्तिं यान्ति शिवेच्छया
देव्युवाच
मूलज्ञानं जपित्वा तु युक्ता ध्यायन्ति योगिनः ११
सर्वकामसमृद्धास्तु शिवकामं विशन्ति ते
प्रवृज्य लभ्यते मोक्षश्चर्ययाथ महेश्वर १२
सन्तोषेण लभेन्मोक्षो यदज्ञानवृतैस्तथा
ज्ञानेन लभ्यते देव तद्ज्ञानस्य प्रकाशकः १३
उपासनञ्च देवेश ज्ञानं ज्ञेयो यथा भवेत्
तन्ममाचक्ष्व देवेश अत्र मे संशयो महान् १४
ईश्वरः
प्रवृज्यावृतचर्याभिस्सन्तोषं नियमेन च
क्षपणाच्चैव देहस्य मोक्षमिच्छन्त्यबुद्धयः १५
शीतवातप्रतापाग्नि दशका दशकानि च
क्षुत्पिपासी तथा वर्षी मोक्षार्थी सुबुधस्सहेत् १६
ब्रह्मचर्यं तपोदानं दयाक्षान्तिरहिंसितम्
नेतद्वै जननं वाक्यं जगव्द्याप्तिं न मुक्तये १७
दानेन न भवेन्मोक्षस्तपोभिर्वेदयज्ञतः
मोक्षो नवति ज्ञानेन देही निर्मुक्तकेवलम् १८
संयतेन्द्रियचित्तोऽपि किं कुर्याज्ज्ञानदुर्लभम्
विनीतरथमारूढरचक्षुरिव सारथिः १९
देव्युवाच
ये वेदवादिनो विप्रास्सांख्यज्ञा योगवेदिनः
पञ्चरात्रिविदो ये तु अन्यैः पापादुकैस्सह २०
ते ब्रुवन्ति महादेव तेषां ज्ञानं वदाम्यहम्
अग्निरग्नौ यथा क्षिप्तं तोये तोयमिवार्पितम् २१

मृत्पिराडे दराडपाषाराव्निस्सुखं निष्प्रचेतनम्
निर्वाराम्स्स तु विज्ञेयः सुखदुःखविवर्जितम् २२
एतत्ते देव ग्राख्यातं मया तु विदितं यथा
ईश्वर उवाच
सर्व क्लिष्टास्तथात्यन्तं मोक्षतत्वमजानतः २३
ग्रहं ते कथयिष्यामि शृरा मोक्षस्तु यादृशम्
जीवनाशो भवेद्यत्र निस्सुखं निष्प्रचेतनम् २४
मृत्पिराडपिराडवन्मोक्षो न तु मोक्षस्स उच्यते
तेषां मायोदरो मोक्षस्स चैतन्यमवस्थया २५
शिवावर्ग इवातिष्ठेत् सुषुप्तद्वैतवर्जितः
ग्रवमानेन मोक्षेरा चेतनारहितेन तु २६
पर एवं स सारोऽपि विषयासक्तचेतसः
ग्रस्मिन् शैवे महाज्ञाने विज्ञाननगरे शुभे २७
प्रभुः सर्वज्ञचेता च व्यापी सूक्ष्मः शिवोऽव्ययः
पति भावसमत्वं वै भवते ज्ञानिनः स तु २८
सर्वज्ञः परिपूर्णश्च सर्वगोप्यव्ययो भवेत्
दुःखानामागमो नास्ति सुखं तत्र निरन्तरम् २९
सर्वालयश्च शान्तश्च मोक्ष इत्यभिधीयते
चेतनाभावयोर्मुक्तिः न तु संमोहमोचिताः ३०
चेतनो व्याप्यसंमूढो मोक्ष इत्यभिधीयते
शिवो निरञ्जनो भूत्वा तिष्ठते रागवर्जितः ३१
स्वाधीनवृत्तिः यः प्राज्ञः सुखासीनः सुखप्रदः
ग्रशरीरी शरीरी वा स्वेच्छया च भवत्यदौ ३२
स्थूलात्स्थूलतरो भूत्वा सूक्ष्मात्सूक्ष्मतरस्तथा
ऐश्वर्यं सर्वलोकेषु भुञ्जते च यथा सुखम् ३३
ग्रप्रतीघातकास्ते वै रागलोभविवर्जिताः

शिवज्ञानं परं प्राप्य निर्गुणं सर्वकामिकम् ३४
असमे माहात्मको भूत्वा सृजत्यात्मानमात्मनि
सर्वं व्याप्य प्रतिष्ठन्ते सर्वभूतेष्ववस्थिताः ३५
न चास्या विदितं किञ्चित् नचादृष्टं नचाश्रितम्
अप्राप्य सर्वलोकेषु नागतिश्च कदाचन ३६
पतिभावेन तत्वानां विषयान् गृह्णते सदा
प्रकृतेर्ये विकारास्तु निर्गुणं गुणमेव च ३७
कारणाद्विधृतं भूत्वा गृह्णते विषयान् स्वकान्
ये चैश्वर्यगुणास्सर्वे शिवे तिष्ठन्ति शाश्वते ३८
दीक्षितेष्वपि ते चैव तत्सर्वं तत्त्ववेदिषु
अप्रमेयबलोपेतस्सर्वज्ञः खलु सर्वदः ३९
सर्वकृत् सर्वयोगेशः शिवतुल्यस्तु संस्मृतः
दूराच्छ्रवणविज्ञानमननञ्चावलोकनम् ४०
मनोबुद्धिरहंकारं कारणाकारवर्जितः
स्वाधीनस्सर्वकार्येषु प्रवृत्ते बलिसूदनः ४१
धारकः प्रेरकश्चैव अधिष्ठाता कले रणः
दमनः सर्वभूतानां मनश्चोन्मन एव च ४२
सर्वेभ्यश्च सर्वात्मा सर्वेशश्च महागतिः
अजरश्चामरश्चैव अक्षयः क्षोभकारकः ४३
गर्भजन्मजरादुःखं ये केचिद्वन्द्वजा गुणाः
अज्ञानसंभवाह्येते सुखञ्चैकञ्च केवलम् ४४
काष्ठमध्ये स्थितो यद्वत् मथितो निर्मलोऽनलः
स शान्तसमये प्राप्ते न भूयो विशतेऽरणिम् ४५
घृतभावं समापन्नं न भवेद्दधिता पुनः
सम्यक् ज्ञानं विदित्वा तु पशुत्वं न भवेत्पुनः ४६
इति निश्वासकारिकायां ज्ञानकाण्डे विंशति पटलः

देव्युवाच
अप्राप्य परमां सिद्धिं दीक्षितो ज्ञानसंयुतः
विदित्वा शास्त्रसद्भावं मृत्युदुःखैश्च पीड्यते १
प्रत्ययं किं भवेत्तस्य क्रियमाणेषु जन्तुषु
अप्रत्यक्षा गतिर्देव ब्रूहि मे परमेश्वर २
ईश्वरः
व्यङ्गुलोर्ध्वन्तु तत्स्थानं यत्रासौ वन्दने भवेत्
स शूलो वायुवेगेन दक्षिणस्तनकोपरि ३
जनो नामेन चात्मेन सप्तरात्रे च शृणवति
ह्रस्वदीर्घप्लुतञ्चैव साधारितसकौशकम् ४
स्पन्दनादिकलेत्कालं यावन्मासं स्वपक्षकम्
अष्टाभेनैव संयुक्ततन्त्रिणी अमृतं स्मृतम् ५
नन्दा भद्रा जया रिक्ता पूर्णा चेति त्रिरावरा
लौकिकास्तेषु विज्ञेया शिवतीर्थ्यानु मे शृणु ६
अमृता तु तिथिः पूर्वं प्रकृत्या च द्वितीयकम्
अभिजिच्चैव नक्षत्रं तस्योपरि जयन्तिका ७
ब्रह्मविष्णुमयौ ऋक्षौ मुहूर्तः पिङ्गलस्मृतः
ध्रुवतारागणज्योत्स्ना चक्रवत्परिलेलिहेत् ८
लेलिहेत शिवा भाति उदितामितजां रविः
तदा मृत्युवशं याति पूर्णाब्दे तु न संशयः ९
एवं ज्ञात्वा तु मेधावी अमृतेऽहनिकारयेत्
दानं जपं ततो ध्यानं तत्सर्वं मोक्षदं भवेत् १०
अभिजित्संज्ञनक्षत्रे जयत्यां रुद्रवैष्णवे
यत्किञ्चित्कुरुते कर्म तत्सर्वं मोक्षसिद्धिदम् ११
मुहूर्ते पिङ्गले चैव यत्कर्म कुरुते नरः
ज्ञात्वा वारं तिथिञ्चैव तत्सर्वं सिद्धिमोक्षदम् १२

सत्यासत्यमयौ वारौ ध्रुवञ्चैव तृतीयकम्
अमृतेन तु संयुक्तं आभ्यां त्वेकेन मोक्षदम् १३
जपेन ध्यानयोगेन सिद्धिरेकाह्निका भवेत्
एवं वै योविजानाति रहस्यमिदमुत्तमम् १४
स भवेच्छिवतुल्यस्तु शिवेन सह मोदते
मृतं कायं न शीर्येत एतत्प्रत्ययमुत्तमम् १५
इति निश्वासकारिकायां ज्ञानकाण्डे
एकविंशतितमः पटलः

देव्युवाच
त्वया सृष्टाः पुरा देव विधानेषु वियोजिताः
यजन्ति विप्रा यज्ञैस्तु मूर्यष्टकसंयुताः १
कर्तृभिर्विविधैश्चैव दक्षिणाभिश्च भूरिशः
तेऽपि कस्मान्न मुच्यन्ति मन्त्रैस्तैरेव दीक्षिताः २
वर्णान्नयन्ति सायुज्यं यदि सत्यं प्रभाषसे
वर्णैरेवचिता वेदास्तेऽपि कस्मान्न मुक्तिदाः ३
ईश्वरः
आहुः प्रणवमित्येके मकारमपरे विदुः
शतार्धाक्षरविन्यासं पुरुषं बिन्दुविग्रहम् ४
कला षोडशकं कश्चित् चन्द्रमाश्चामृतद्युति
वृक्षगुल्मलतानान्तु ओषधीनां स संभवः ५
अमृतामृतवच्छ्रीमान् सर्वभूतभृतां वरः
यकाराक्षरमित्येके प्राणाद्या विश्वतो मुखम् ६
सर्वेषु सर्ववित्कर्ता यत्र वा संप्रवर्तते
रकारमनलञ्चात्र प्रपदन्ति विपश्चितः ७
संहारः सर्वतत्त्वानां कालाग्निरिव विश्रुतम्

अन्नपानेन्धनो भोक्ता स जीवात्मेति चोच्यते ८
इन्दुमन्ये प्रशस्यन्ति सुरासुरनमस्कृतम्
विभूरिति इमं प्राहुः तच्छक्रमवपूजितम् ९
नमः पूर्वन्ति ते सर्वे लकारं परमं पदम्
अमृतस्यन्दकुन्दाभं चन्द्रांशुसमशीतलम् १०
प्राणदं प्राणिनान्नित्यवारुणं बीजमुत्तमम्
अथाहुरपरे केचिद्व्योमबीजमनुत्तमम् ११
आश्रयस्सर्वभूतानामाकाशमवकाशदम्
केचिदाहुरयं श्रेष्ठ शतार्धार्धे व्यवस्थितम् १२
मकारं परं तत्त्वमूर्ध्वबाहुरयं स्थितः
त्रैविद्य वृद्धास्तद्वन्ति पुरुषं द्वादशाक्षरम् १३
सोऽग्निर्यज्ञपतिर्यज्ञो वषट्कारस्वधा च सः
सकलोन्तकमादित्यं यत्पुरस्तात्प्रकाशते १४
अकारपरञ्जाग्रत् सर्ववर्णप्रवर्तकम्
ऋग्वेदाहवनीयोऽग्निः सात्विको गुण उच्यते १५
अकारस्सर्वभूतानां पार्थिवं ब्रह्म कीर्त्यते
उकारो विष्णुदेवत्यं राजसं द्रवलक्षणम् १६
यजुर्वेदमयो ह्येषा दक्षिणाग्निरिति स्मृतः
स्वप्नोन्तरात्मा इत्येवं वदन्ति परमं पदम् १७
मकारं रुद्रदेवत्वं तामसं परिकीर्तितम्
साम वै गार्हपत्याग्निस्तामसं गुणलक्षणम् १८
सुषुप्तं पदमित्याहुः तमेव परमं पदम्
हकारममात्रो वै तुर्यं तत्परमं पदम् १९
अथर्ववेदमन्त्रात्मा सञ्जीवः सर्वदेहिनाम्
गुणातीतः परं शान्तिं यज्ज्ञात्वाऽमृतमश्नुते २०
आकाशममलं दिव्यं सर्वगं प्रभुरव्ययमिति

तुर्यातीतं परं ब्रह्म पदं ++++ सदात्मकम् २१
इदं साक्षाच्छिवं केचित् दशात्मा बीजसंपुटम्
आलयं सर्वविद्यानां विद्यालयमिति स्मृतम् २२
तत्राप्यन्ये प्रभाषन्ते त्रितत्वाक्षरभाषितम्
दश लक्षेश्वरं केचित् तारकं ज्ञानमाश्रिताः २३
षण्णवदीश्वरं केत्रापाशहानं तथैव च
शतार्धबीजसंहारं कारणं परमं मतम् २४
कारणं सर्वभूतानां नादमाहुः सदाशिवम्
स एव पञ्चधावस्थः शिवः सकलनिष्कलः २५
तथान्ये कल्पयन्त्यस्मिन् शिवज्ञानविदो जनाः
भुजङ्गकुटिलाकारं अनुच्चार्यमनामयम् २६
प्रथमं सर्वशास्त्राणां लिख्यते न च पठ्यते
इत्यञ्जलिनमस्कारजपध्यानविवर्जितम् २७
गन्धरूपरसस्पर्श शब्दादि करणोज्झितम्
नियुक्तमनसङ्कल्प स एव परमं पदम् २८
ब्रह्माविष्णुस्तथा रुद्र ईश्वरश्शिव एव च
पञ्चधा पञ्च दैवत्यं प्रणवं परिकीर्तितम् २९
एकमात्रो द्विमात्रश्च त्रिमात्रोभ्यधिकस्तथा
अर्धमात्रार्धसंस्थश्च पञ्चधा विग्रही शिवः ३०
एवमादिषु संमूढा देवज्ञाः सांख्यवादिनः
ज्ञानपादेन संमूढाः निश्चयं नाधिगच्छतः ३१
परतत्वविहीनास्ते आद्योत्पत्तिविवर्जिताः
ऋच एव मन्त्रव्यापित्वं नविजानन्ति मोहिताः ३२
पुराणवेदगर्वेण स्मृतिना च तथैव च
स्थूलभावसुवृष्टात्मा पशुज्ञानरता नराः ३३
दूषयन्ति शिवज्ञानं शैवं सर्वा शिवापहम्

दुष्यन्ति परपक्षाणि स्वपक्षपरिनिष्ठिताः ३४
वर्णव्याप्तिमजानन्तः तत्वव्याप्तिं तथैव च
परतत्त्वमजानन्तः स्थूलज्ञानफलेप्सवः ३५
एतस्मात्कारणाद्देवि तस्मिन् वर्णा न मुक्तिदाः
अनिश्चितमतास्सार्वे विवदन्ति परस्परम् ३६
दूष्यन्ति तथाऽन्योन्यं वादजल्पवितण्डकै
इति निश्वासकारिकायां ज्ञानकाण्डे ज्ञानविभ्रमप्रकारो नाम
द्वाविंशतितमः पटलः

देव्युवाच
प्रधानात्मेशतत्वानां कर्मैकं सहजं स्मृतम्
किमर्थं सृष्टिमीशानः कुरुते सा प्रधानजम् १
कृतकृत्यः पशुश्चायं कथं भवति शङ्कर
प्राधानिकं शरीरं वा किं विधं पारमार्थिकम् २
लक्षणं बुध्यमावस्य प्रबुद्धाबुद्धयोः कथम्
प्रधानपुरुषेशानं कर्तृत्वं कस्य कीदृशम् ३
संप्राप्य कललावस्या मास्ते वा पुरुषः कथम्
किमर्थं बन्धनं वाऽपि को वा बन्धः सुरेश्वर ४
किं स्वरूपो भवेद्बन्धो को वा बन्धेन बध्यते
किं प्रकृत्या सह पशुः युज्यते स वियुज्यते ५
तत्वानाञ्च कथं सृष्टिः क्रियाभेदश्च कीदृशः
स गुणान्निर्गुणञ्चैव योगभेदञ्च तत्वतः ६
सर्वमेतत्पुनर्देव ममाचक्ष्व यथाक्रमम्
ईश्वरः
देव्यनादिभवा पङ्के सन्निमग्नाश्शरीरिणः ७
नौरिवोत्तरणायेदं त्रितत्वमुपदिश्यते

कथितं तव देवेशि प्रधानगुणमुत्तमम् ८
निर्गुणास्त्वणवो मूर्तास्सर्वगोप्यवशोऽव्ययः
अधोवृत्तिरतृप्तात्मा गुणभुक् पाशगोचरः ९
अमीशः पशुकर्ता च साज्ञनोज्ञः परस्तथा
असर्वविदसंपूर्ण उदासीनः पुमान् स्मृतः १०
ईदृशं लक्षणं वस्तु स भवेदप्रबुद्धता
निर्गुणस्सर्ववित्कर्ता स्वतन्त्रस्सर्वगोचरतः ११
परिपूर्णोऽक्षरः शान्तः सूक्ष्मोजः परमो तनुः
बुध्यमानः समाख्यातं लक्षणं परमेश्वरी १२
नित्यप्रबुद्धशुद्धात्मा कारणो मतिविग्रहः
अनन्तो निश्चलश्चैव नित्यतृप्तो निराश्रयः १३
कूटस्थः पशवो नाथः सर्वनाथो मितद्युतिः
अनादिरेको निष्कंपः चेतनो सर्वभृच्छिवः १४
प्रबुद्ध एव विख्यातस्तृतयस्तु सुलोचने
प्रधानमेक सर्वत्र क्षेत्रसंज्ञमचेतनम् १५
सर्वेषाञ्च पुमानेकः क्षेत्रभुक् चेतनः स्मृतः
अचेतनत्वादव्यक्तो न स्वयं संप्रवर्तते १६
चेतनोप्यस्वतन्त्रत्वात् संयोगमुभयोरपि
अनयोर्भावयोर्योगं संमोहकरणं महत् १७
प्रलयोत्पत्तिरूपेण स्थितोऽनादिरलक्षितौ
चेतनाचेतनत्वञ्च द्वावप्येतावनीश्वरौ १८
बहुधा भेदमायान्ति विभिन्नाक्षरणेच्छया
ईश्वरस्तदधिष्ठाय प्रधानपुरुषद्वयम् १९
भावानुत्पाटयामास तत्वानामनुपूर्वशः
नामार्थमीक्ष्य कुरुते सृष्टिमीशः प्रधानजाः २०
पशुपाशविमोक्षार्थबारांभोयमुदीर्यते

सहजैरञ्जितः पाशैः केवलोप्यवशः पशुः २१
नाशाव्यक्ततत्वानाञ्चेत्रभावमबोधित
सदस्मादप्रबुद्धत्वात् अव्यक्तगुणसंश्रयात् २२
प्राप्य तद्भूतमश्नाति सुखदुःखफलोदयम्
रक्तोप्यनुग्रहं कर्तुं केवलस्येश्वरः पशोः २३
न करोत्येव सहसा कृतनाशाय वै प्रभुः
यस्मात्कारणहीनत्वान्न वेत्ति पुरुषात्मनि २४
तस्मात्कारणसंयोगं करोत्यस्य महेश्वरः
अव्यक्तमाहुः करणं कार्यञ्च दश लक्षणम् २५
तत्करोत्यन्यवशगः पुरुषार्थमनेकधा
तत्र विज्ञानमात्रन्तु पुरुषार्थः प्रकीर्तितः २६
पुरुषस्सकलाद्युक्ततत्वसंज्ञो विधीयते
तत्वज्ञानाद्धि निश्शेषं क्षयमायाति बन्धनम् २७
बन्धक्षयाच्च न पुनः संसारं प्रतिपद्यते
संसारविनिवृत्तस्य पुरुषस्यापि न च्युतिः २८
भवत्येकान्तिकसुखः स्वतन्त्रश्चैव जायते २९
इति निश्वासकारिकायां त्रयोविंशतितमः पटलः

ईश्वरः
अथ संक्षेपतः सम्यक् त्रितत्वपरिनिर्णयम्
प्राणिनामनुकंपार्थमद्भुतं संप्रकाश्यते १
यत्तदव्यक्तमित्युक्तमुच्यते व्यक्तमिन्द्रियम्
स्वसंवेद्यमसंवेद्यमव्यक्तं गम्यतेऽर्थतः २
तदात्मकानि भूतानि पञ्चभूतात्मकञ्च तत्
भूतप्रसूति नानात्वमेकत्वञ्च निगद्यते ३
यस्सदाशिवपर्यन्तः पार्थिवाद्यश्च संग्रहः

तत्सर्वं प्राकृतं प्रोक्तं तत्वविद्धिरनेकशः ४
प्राकृतान्यवितत्वानि दिव्यादिव्यविशेषणम्
शुद्धाशुद्धं न गीयन्ते नात्मरूपस्वभावतः ५
शुद्धिमायान्ति तत्वानि विज्ञानप्राकृतान्यपि
शुद्धानि च निबध्नन्ति अज्ञानिषु शरीरिषु ६
अज्ञानिनस्तु सत्कार्ये सन्निविष्टास्तु सत्क्रियाः
तत्वानि शुभरूपाणि निबध्नन्ति शरीरिणाम् ७
यद्विकारमयं किञ्चित् तत्वमित्युपदिश्यते
तत्प्राकृतमसंदिग्धं अर्थविद्धिरुदाहृतम् ८
व्यापित्वात्सूक्ष्मव्यक्तत्वात् अनुत्पाद्यगुणादपि
शून्यमिच्छन्ति बहवः परमात्मानमव्ययम् ९
प्राणमन्योग्निरपरे तथेन्दुरपरे जनाः
प्रपदन्ति परं ब्रह्म बोधयन्ति परस्परम् १०
कार्यमुद्दिश्य भूतानां स्वभावगुणगौरवात्
न सम्यगुपचारार्थमुक्तन्न परमार्थतः ११
एकद्वित्रिचतुःपञ्च गुणाः प्रागनुपूर्वशः
शून्यादीनां विशेषाणां ऋषिभिः परिकल्पिताः १२
एकमेवामितगुणं शून्यमुक्तमिहाव्ययम्
तत्परापरभेदेन गीयते द्विविधः पुनः १३
यतः प्रवर्तते शब्दं तत्परं शून्यमुच्यते
शब्दतन्मात्रमुद्भूतं तदादिपरमं पदम् १४
एकतत्वनयोर्भेदं व्योमयोः कृतमन्तरम्
मायानिगूढपरमं परमायाविवर्जितम् १५
न च शुद्धं नचाशुद्धं शुद्धाशुद्धविवर्जितम्
सहजैरञ्जितैः पाशैः शून्यमव्यक्तरूपिणम् १६
स्थूलास्थूलतरैर्भावैः भावाभावविग्रहः

यदेतमभिसंख्यातमाकाशमजमव्ययम् १७
क्षीरभावात्मकमिदं शब्दरूपं प्रवर्तते
शब्दाच्च कायसंसिद्धिः हेतुराकाशलक्षणम् १८
विद्याविद्यास्वरूपेण द्विविधः संप्रवर्तते
विद्या देहं करोतीति पुरुषाव्यक्तवेदनम् १९
विपरीतञ्च संमोहः भावभावहते नृणाम्
ज्ञानरूपोऽपि वर्गार्थं विपरीत ++ माश्रयम् २०
शब्दप्रकाशयत्येष विहितं प्राणिनां द्विधा
यतश्शब्दगुणं शून्यं बोधयत्येष मोहिनाम् २१
करोत्यन्यस्य शुद्धित्वमशुद्धित्वञ्च गीयते
मन्त्रात्मकं जगदिदं मन्त्रशब्दमयं स्मृतम् २२
शब्दशून्यात्मकं प्रोक्तं शून्यञ्चाव्यक्तसंज्ञितम्
तस्मादुत्पन्नमात्रस्तु मन्त्रानिलसमीरितः २३
श्रोत्रयो व्यक्तिमायाति तस्मात्तत्स्थूलकं स्मृतम्
शून्याद्यच्छन्दरूपन्तु उद्दिष्टममितौजसम् २४
एतत्सगुणमित्युक्तमशुद्धं वा परं शिवम्
एवमन्योन्यवितथा भूतानि स्वगुणैस्सह २५
क्रमात्संभावमायान्ति भावान् सन्दर्शयन्ति च
स्थूलभावेन महता सूक्ष्मेण च समन्ततः २६
व्याप्यव्यापकरूपेण स्थितान्येकान्यनेकधा
सर्वतत्त्वमयो ह्येष समभावमयस्तथा २७
पञ्चभूतात्मकं पिण्डं प्राकृतं समुदाहृतम्
स्थितो यस्सर्वजं ज्ञानमेष पिण्डः प्रतापवान् २८
भूतात्मकं समुद्दिष्टं सुभोगरतिहेतुकम्
पञ्चभूतात्मकं पिण्डमिदमव्यक्तसंज्ञिकम् २९
सर्वभावोद्भवं मत्वा बन्धनात्प्रविमुच्यते ३०

## इति निश्वासकारिकायां चतुर्विंशतिः पटलः

देव्युवाच
भगवञ्च्छ्रोतुमिच्छामि प्रबुद्धाबुद्धबुद्धयोः
सप्तकोटिमहातन्त्र नोक्तं पूर्वं हि मे वद १
कथन्त्वप्रबुद्धो ज्ञेयः प्रबुद्धश्च कथं भवेत्
बुध्यमानस्य वेदस्य यथातथ्येन मे वद २
शृणु देवि परं शुद्धं अशुद्धं गुणसंवृतम्
पौरुषं गीयते तत्वमभवं भवगोचरम् ३
अमूर्तमप्रबुद्धत्वात् भोगैर्मायात्मकैरिदम्
क्रोडतेऽव्यक्तसंयोगात् बालक्रीडनकैरिव ४
अचेतनञ्चेतनेन निर्गुणेन गुणात्मकम्
व्यक्तमव्यमेतेन तेनाप्येतत्समावृतम् ५
न क्षीयते क्षीयमाणे जायमानेन जायते
पौरुषै व्यक्तजैर्भावैस्सहात्मीयैरिवा व्ययः ६
अजातमक्षीणमिदं पुरुषं पुरुषा भुवि
वदन्ति जातमित्येवं कृतञ्चाकृतबुद्धयः ७
अन्य एव क्षयं याति प्राप्नोत्यन्यस्तु वेदनाम्
अन्योऽत्र दुःखनिर्मुक्तः प्रभुस्तिष्ठत्यलक्षितः ८
अप्रबुद्धः प्रबुद्धश्च बुध्यमानस्तथैव च
त्रिधा रूपः पशुरयं भवत्येकोप्यनिन्दिते ९
आत्मानं प्रकृतिञ्चैव न हि वेदयतेऽन्तरम्
अप्रबुद्धस्तदा प्रोक्तः तत्वविद्भिरयं पशुः १०
पुरुषोऽव्यक्तविज्ञातः बुध्यमानोऽभिधीयते
नित्यबुद्धः प्रधानेश पुरुषाधीश्वरः स्मृतः ११
प्राकृतैरप्रबुद्धत्वात् गुणैर्बध्नाति चात्मनः

ततः प्रवर्तते रागस्तत्संगादशुभं पशोः १२
रागानुरञ्जितः पश्चाद्विषयाननु सेवते
तत्प्रसक्तस्सतान्येव विचरन्त्यत्र चिन्तया १३
ध्यायतस्तस्य विषयान् अहन्यहनि केवलम्
अभिभूय बलं कार्श्यं अनिवार्यः प्रवर्तते १४
ततः कामाभिभूतस्य क्रोधो भवति दारुणम्
प्रवर्तते विमूढस्य बुद्धिनाशस्तु देहिनः १५
प्रवर्तते बुद्धिनाशादक्षानादि चतुष्टयम्
अज्ञानसंगात्पुरुषोः प्रयात्यव्यक्तसंश्रयम् १६
अव्यक्तसंश्रयाज्जन्म पुनः कर्म च दारुणम्
प्रवर्तते मोहसंगात् निर्गुणस्यापि देहिनः १७
प्रगुणैर्गुणसंभूतैर्भाविभिर्भूतविग्रहः
प्रयात्यूर्ध्वमधश्चैव घटयन्त्रवदच्युतः १८
कोऽहं किमात्मकश्चैवं कर्ता कार्यमथापि वा
बलवान् गीयते पापैः कोऽत्र दुःखानि कस्यचित् १९
देव्युवाच
किं हेतुकं सुखं दुःखं अकस्मादुपयुज्यते
बालयौवनवृद्धादिरूपाण्येतानि कस्य वा २०
जायते म्रियते कोऽत्र जायते वाऽपि वर्तते
को वा गृहं समुत्सृज्य शरीराण्यपगच्छति २१
एतत्कार्यमशेषेण भगवन् वक्तुमर्हसि
ईश्वरः
एतानि कथयिष्यामि माययापहृतः पुमान् २२
मोहयत्यज्ञानसंसर्गात् पश्यन्नपि न पश्यति
व्याधिजन्मजरामृत्यु दुःखाया सपरिच्छदः २३
जानन्नपि स मूढात्मा नोद्वेगमुपगच्छति

एवमव्यक्तजैर्भावैः गुणैरप्यनुरञ्जितः २४
बलाद्विकोशमन्योऽपि हीयते मायया बलात्
जायते वर्धते चैव दुःखाया स परिच्छदः २५
रज्वा च विरूपत्वं स्थूलात्मा स विनश्यति
एतदप्रतिबन्धस्य पुरुषस्य गुणान्तरम् २६
सांप्रतं शृणु वक्ष्यामि बुध्यमानगुणोदयम्
अज्ञत्वमस्य सहजं ईशानुग्रहचोदनात् २७
विबुध्यमानभावोऽयं देहिनस्संप्रवर्तते
तत्प्रसङ्गादयं धीमान् महानिद्रागतव्यथः २८
पशुरालोकयत्यग्रे संसारार्णवमव्ययम्
उष्णोदकसुसंपूर्णमाशापाशोर्मिसंकुलम् २९
महामोहतरं गाढ्यं रागबुद्बुदसंवृतम्
इच्छाद्वेषादिकलुषं समनोऽथ शीतलम् ३०
कामोग्रस्वादुविस्सं क्रोधनिर्घोषभीषणम्
योन्यावर्तसमाकीर्णं मायानिविडकर्दमम् ३१
व्याधिजन्मजरामृत्यु भृमनकनिषेवितम्
सुखदुःखभयं काले वेलापरिच्छदम् ३२
पशुहंसकुलैर्व्याप्तं प्रकूजद्भिरितस्ततः
रक्तमांसकफा+शुक्लं क्रमादन्नात्प्रवर्तते ३३
शुक्लाद्भवन्ति भूतानि तस्मादन्नमयं जगत्
तदन्नं पिण्डकवलैः ग्रासैरक्तन्तु देहिभिः ३४
अन्तस्थूलाशये पूर्णप्राणस्थापयते क्रमात्
भुक्तपीततदाहारं अतस्तत्कुरुते द्विधा ३५
संप्रविश्यान्नमध्ये तु पृथगन्नं पृथग्जलम्
अग्नेरूर्ध्वं जलं स्थाप्य तदन्नञ्च जलोपरि ३६
ज्वलनोर्ध्वं स्वयं प्राणः स्थित्वाऽग्निं धमते शनैः

वायुना धाम्यमानोऽग्निरत्युष्णं कुरुते जलम्  ३७
तदन्नमुष्णतोयेन समन्तात्पच्यते पुनः
द्विधा भवति तत्पक्वं पृथक्किट्टं पृथग्रसम्  ३८
कर्णाक्षिनासिकाजिह्वादन्तशिश्नागुदानखाः
मलाश्रयाः कफस्वेदविण्मूत्रा द्वादश स्मृताः  ३९
हृत्पद्मप्रतिबद्धास्तु सर्वनाड्यस्समन्ततः
तासां मुखे पुनस्सूक्ष्मं प्राणस्थापयते रसम्  ४०
रसेन तेन ता नाडीः प्राणः पूरयते पुनः
प्रतर्पयति संपूर्णास्तास्वदेहं समन्ततः  ४१
ततस्तन्नाडिमध्यस्थं शरीरोष्णेन तादृशम्
पच्यते पच्यमानञ्च भवेत्पाकद्वयं पुनः  ४२
त्वङ्मज्जास्थिसमन्ताच्च स्नायुश्चैव प्रजायते
रक्तलोमानि मांसञ्च केशमेदस्तथैव च  ४३
नाड्यो वसाऽथपूयश्च मज्जापि च कफस्तथा
एतदन्नात्समुद्भूतं शुक्लञ्च प्रसवात्मकम्  ४४
इति निश्वासकारिकायां पञ्चविंशतिः पटलः

ईश्वरः
शुक्लञ्च रससंयुक्तं यस्माद्देहस्य संभवम्
ऋतुकाले यदा शुक्लं निर्दोषं योनिसंस्थितम्  १
तदा तद्वायुना घृष्टं स्त्रीरक्तेनैकतां वृजेत्
विसर्गकाले शुक्लस्य जीवः कारणसंयुतः  २
यस्य यस्याशयात्पाकात् भोक्तुर्भोगाय सर्पते
स तत्रैव रतिं याति प्राक् तनेनोपरञ्जितः  ३
प्रविचारक्षमो वाऽपि नोद्वहेत्तं विचारितम्
तच्चित्तः तन्मयो भूत्वा भुङ्क्ते भोगान् बुभुक्षितः  ४

अतीत्य जीवं भावानां उच्छ्राय पतनं तथा
संसृतः प्रविशेद्योनौ कर्मभिन्नैर्नियामतः ५
तच्छुक्लं रक्तमेकस्थं एकाहात्कललं भवेत्
पञ्चरात्रेण कललं बुद्बुदाकारतां व्रजेत् ६
बुद्बुदं सप्तरात्रेण मांसपेशी भवेत्तदा
द्विसप्ताहाद्भवेत्पेश्याद्रक्तमांसं तदा दृढम् ७
बीजस्येवाङ्कुराः पेश्याः पञ्चविंशति रात्रिभिः
पुनश्च मासमात्रेण पञ्चधा जायते तु सः ८
ग्रीवा शिरश्च स्कन्धौ च पृष्ठवंशस्तथोदरम्
मासद्वयेन सर्वाणि तमसस्संभवन्ति हि ९
त्रिभिर्मासैः प्रजायन्ते सर्वाङ्गव्यक्तसन्धयः
मासैश्चतुर्भिरङ्गुल्य प्रजायन्ते यथाक्रमम् १०
मुखं नासा च कर्णौ च मासैर्जायन्ति पञ्चभिः
दन्तपङ्क्तिस्तथा जिह्वा जायन्ते तु नखादयः ११
ओष्ठौ कपोलौ जायन्ते षण्मासाभ्यन्तरेण तु
वायुर्मेढ्रमुपस्थञ्च नाभिश्चैव प्रजायते १२
सन्धयश्चैव सर्वाणि मासैर्जायन्ति सप्तभिः
अङ्गप्रत्यङ्गसंपूर्णं शिरः केशसमन्वितम् १३
विभक्तावयवस्सर्वं पुनर्मासाष्टकेन तु
पञ्च पञ्चार्थसंयुक्तः परिपक्वस्स तिष्ठति १४
मातुराहारवीर्येण षड्विधेन रसेन तु
नाभिमूलनिबन्धेन वर्धते स दिने दिने १५
ततः स्मृतिं लभेज्जीवः संपूर्णोऽस्मिन् शरीरके
सुखदुःखं विजानाति निद्रास्वप्नं पुराकृतम् १६
मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः
नानायोनिसहस्राणि मया दृष्टानि जायता १७

अधुना जातमात्रोहं प्राप्तसंस्कार एव च
तत्र श्रेयः करिष्यामि येन गर्भो न संभवेत् १८
गर्भस्थः चिन्तयन्नैवमयं गर्भाद्विनिर्गतः
अध्येष्यामि शिवज्ञानं संसारविनिवर्तकम् १९
एवं स गर्भदुःखेन महता परिपीडितः
जीवः कर्मवशादास्ते मोक्षोपायमचिन्तयन् २०
यथा गिरिवराक्रान्तः कश्चिद्दुःखेन तिष्ठति
तथा जरायुषा देही दुःखी तिष्ठति वेष्टितः २१
पतितः सागरे यद्वा तद्दुःखं भवति दारुणम्
गर्भोदकेन सिक्ताङ्गः तथान्ते व्याकुलः पुमान् २२
लोहकुंभे यथा न्यस्तः पच्यते क्वचिदग्निना
गर्भकुंभे तथा क्षिप्तः पच्यते जाठराग्निना २३
सूचीभिरग्निवर्णाभिर्भिन्नस्य च निरन्तरम्
यद्दुःखमुपजायेत गर्भे ह्येष गुणं भवेत् २४
गर्भवासात्परं वासं कष्टं नैवास्ति कुत्रचित्
देहेन दुःखबहुलं सुघोरमिति संकुलम् २५
इत्येतद्गर्भदुःखं हि प्राणिनां परिकीर्तितम्
चरस्कराणां सत्यानां गर्भे दुःखं महत्स्मृतम् २६
गर्भात्कोटिगुणं दुःखं योनियन्त्रप्रपीडनात्
मूर्धा च जायते तीव्रा जायमानस्य देहिनः २७
त्रिभिश्च कोटिभिश्चाण्डेश्छन्नस्तन्निद्राद्यकूपकैः
शरीरं स्थूलसूक्ष्माणि दृश्यादृश्याभिरन्वितम् २८
तावतीभिश्च नाडिभिः कोटिभिस्तत्समन्वितम्
प्रस्वेदमशुचिर्याति रन्तस्थं स्त्रवते बहिः २९
इति देहगृहञ्जातं नित्यस्यानित्यमात्मनः
अविशुद्धं विशुद्धस्य कर्मभिस्तस्य निर्मितम् ३०

गर्भमासे महद्दुःखं योनियन्त्रप्रपीडनात्
बाल्ये च दुःखमज्ञानात् कौमारे गुरुशासनात्  ३१
यौवने कामरोगात्तु दुःखमीर्ष्या यथा पुनः
कृषिवाणिज्यसेवादिगोरक्षाद्यैश्च कर्मभिः  ३२
वृद्धभावे च जरया व्याधिभिश्च प्रपीडितः
मरणे च महद्दुःखं प्रार्थनायां ततोऽधिकम्  ३३
राजाग्निजलदायाद्यैः चोरशतृभयं महत्
अर्थस्यार्जनरक्षा वा दुःखन्नाशे व्यये पुनः  ३४
कार्पण्यं मत्सरं दभ्रस्तृणव्याधिभयं महत्
अकार्ये संप्रवृत्तिश्च दुःखं वैतीन्धने सदा  ३५
अन्योन्यातिशयं दुःखमन्योन्याभिभवे पुनः
अन्तर्बहिः प्रकोपश्च दुःखं राज्ये महीभृताम्  ३६
अनित्यता प्रभावानां उच्छ्रायाः पतनं तथा
अन्योन्यमहिमां चैवान्योन्यस्यापि भक्षणम्  ३७
अन्योन्यातिशयैः पातैः संभवा भोगसंप्लवाः
छिन्नभिन्नोपि शस्त्रैश्च व्याधिभिश्च प्रपीडिताः  ३८
दुःखेन त्यजते देहं न विरागी कथञ्चन
गात्रं स्वं भिन्नमप्यस्त्रैर्विकलञ्चेन्द्रियैरपि  ३९
नोत्सहेत परित्यक्तुं तद्भावगुणरञ्जितः
रागञ्च रञ्जकं कस्य विषयानन्दलक्षणम्  ४०
येन युक्तं क्षयं यान्ति तिर्यङ्मानुषदेवताः
नौषधीर्न धनादानं न माता न च बान्धवाः  ४१
शुक्नुवन्ति परित्रातुं नरं कालप्रपीडितम्
साधयान्तं तपो जप्यं योगसिद्धिर्महात्मभिः  ४२
कालमृत्युवशं प्राप्य जीर्यते सालसैर्नरैः
सुसाधनतपोजप्यैः योगसिद्धैर्महात्मभिः  ४३

कालमृत्युरपि प्राज्ञैः जीर्यते नालसैर्नरैः
हातातमातहा कान्ते क्रन्दत्येवं सुदुःखितैः ४४
मराडूक इव सर्पेण पीड्यते मृत्युना जनः
बान्धवैस्तु परिष्वक्तः प्रियैश्च परिवारितः ४५
निश्वसन् दीर्घमुष्णाञ्च मुखेन परिशुष्यता
चतुरन्ते च खड्वायां परिवृत्य मुहुर्मुहुः ४६
समूढः क्षिप्यते श्यंगानूहस्तापादावितस्ततः
खट्वात्तु वाञ्छिते भूमिं भूमेः खट्वां पुनर्महीम् ४७
विवस्तृस्त्यक्तलज्ञश्च मूलविष्ठानुलेपितः
याचमानश्च सलिलं शुष्ककराठोष्ठतालुकम् ४८
चिन्त्यमानस्तु वित्तानि कस्यैतानि मृते मयि
पञ्चाङ्गैः खिन्नमानश्च कालपाशेन कर्षितः ४९
मृयते पश्यतामेव गले घुरघुरायते
जीवस्तृणजदूकेव देहाद्देहं विशेत्क्रमात् ५०
योहमस्मिन् मलाकीर्णे रमामि क्षणभङ्गुरे
नानाव्याधिसमाकीर्णे विषयोरग+षिते ५१
मदोन्मादैः विमुच्यन्ते विनयाचारतस्करैः
कामक्रोधभवैस्तापैः मुहुर्मुहुरतापितः ५२
अत्यन्ते केशबहुले जराव्याधिभयाकुले
चिन्ताशोकसुसंपूर्णे अहो देवि सुदुःखितः ५३
चर्मापिनद्धे दुर्गन्धवसाशोणितकर्दमे
विरामूत्ररेतस्संपूर्णे कथमत्र रमाम्यहम् ५४
दर्पणेषु यथा च्छायां चित्रे रूपं यथा स्थितम्
अनर्थानि मनोज्ञानि तद्वदेतच्छरीरकम् ५५
महामायोर्मिसन्ताने त्रैगुरायावर्तसङ्कुले
तत्वग्राहसमाकीर्णे प्लवोदज्ञानसागरे ५६

एतमर्णवमालोक्य भयाद्विह्वलतां गतः
सुचिरं दीर्घनिश्वासमुत्सृज्य परिवेद्य च ५७
अहो जगत्यज्ञत्वं सन्निमग्नमनागमम्
पुत्रागारादिकैश्वर्य व्याकुलीकृतमानसः ५८
त्वमाता त्वपिता चैव त्व दाराणि सुताः त्व वै
त्वचार्थाः त्व च मित्राणि बान्धवाः त्व गृहाणि वै ५९
मोहोऽयमस्य जगतः केनापि विहितः पुरा
पुत्रदारकुटुंबार्थाः शतृवत्प्रतिभान्ति मे ६०
यदात्मना तु तं कर्म वाङ्मनः कायसंभवम्
तस्यानुसदृशं भुङ्क्ते फलमेकोऽन्यजन्मनि ६१
इतश्चेतश्च वित्तानि कर्मणा येन केनचित्
एषामाश्रित्य भोगाय कल्पितास्तेन दुःखिताः ६२
ये बान्धवाः प्रियास्तस्य धर्मराजनिकेतनम्
सहाया न भवन्त्येते नानुगच्छन्ति गच्छताम् ६३
जन्तुरेकस्तु म्रियते जायते चैक एव हि
एकः सुकृतमश्नाति तथा दुष्कृतमेव च ६४
विदित्वैवमसंमूढः कालोदरगतं जगत्
वैराग्यमपरमास्थाय मृगयत्यात्मनो गतिम् ६५
केनोपायेन संस्कारमिदमत्युग्ररूपिणम्
सन्तरिष्ये सुखेनाहमचिरादशुभार्णवम् ६६
दानयज्ञतोपोन्यासवैराग्यज्ञानवृत्तयः
नैरिवोत्तारणायेदं संसारांभोनिधे स्मृतः ६७
यत्फलं दानयज्ञादि कर्मणा समुपार्जितम्
तदस्याप्युपभोगेन क्षयमायात्यशेषतः ६८
तदस्याप्युपभोगेन क्षयमायात्यशेषतः
यज्ञात्स्वर्गफलावाप्तिः तत्क्षयात्पुरा गतिः

कर्मतः स्वर्गतो यस्मात् तस्मादावर्तनं पुनः ६९
एवमादिगुणोपेता दानज्ञानादिकर्मणा
संप्रदृष्टा गतिरियं सर्वे ते क्षयधर्मिणः ७०
तपः सम्यक् सुतप्तस्य स्वर्गमेव परं फलम्
+++++++ बहवः क्षयमत्र विशारदाः ७१
क्षयमायाति विज्ञानं कर्मसन्यासमव्ययम्
सन्यस्तमप्यविज्ञानादुप++++++ ७२
++++++ मवाप्नोति न्यासकर्मरतस्सदा
वैराग्यवृत्तिरपरा ज्ञानवृत्तिस्तथा परा ७३
महदन्तरमर्थज्ञैः अमरैरप्युदाहृतम्
++++++++ गुणलक्षणाः ७४
प्रधानाश्रयमापन्नः पुनरायात्यधोगतिम्
ज्ञानादपुनरावृत्तिः भवेत्तदपि कारिणी ७५
दानादि वैराग्यान्ताच्च कर्मणे ++++
++++++ सर्वाः निष्फलश्चाप्यशेषतः ७६
क्रियाश्च वेदविहिता गीयन्ते चतुरः क्रमात्
स कामा कामितफला न्यासयोगादिलक्षणाः ७७
यत् +++++++++++++++++++
+++++++++++++++++ स्मृताः ७८
दानयज्ञव्रतादीनि देवताया यदाग्रतः
कर्माणि विनिवेद्यन्ते सा तु सन्यासिकी क्रिया ७९
योगमारुह्य यत्कर्म +++++++++
यास्समुद्दिष्टाश्चतस्त्रस्त्रिगुणात्मिकाः ८०
फलमासां प्रवक्ष्यामि पुनरप्यनुपूर्वशः
यत्किञ्चिदार्जितं पुण्यं हिंसा पू +++ ८१
++++ फले संभोगात् क्षयमागते

शेषवृत्ती गुणमयी तिष्ठत्येकाप्यविप्लुता  ८२
शेषवृत्तिवशात्सर्वे ततस्ते फलभो ++++
++++++++++++ सर्वजन्तवः  ८३
शरीरेणोपभुञ्जन्ति तादृशेनैव कर्मणा
स्वर्गे वा नरके वाऽपि यत्र यत्र यथा तथा  ८४
कृतानां कर्मणां ++++++++++++++
+++++त्तक्रियारंभास्सक्ताः कर्मफलेषिणम्  ८५
येऽप्यसङ्कल्पितफला विधिकर्म सवैदिकम्
सन्यासं ये प्रकुर्वन्ति कृताना ++++  ८६
++++ महिंसायां प्रलीयते
अव्यक्ते वा परिक्षीणे गुणे नाशेन विद्यते  ८७
गुणैश्चैवा परिक्षीणे कथमे मोक्षे ++++
+++++++++++++ योगभेदं समासतः  ८८
द्विविधस्तु भवेद्योगः सगुणो निर्गुणस्तथा
स्थूलसूक्ष्मविभागेन शिवेन परमात्मना  ८९
स प ++++++++++
निर्गुणं योगं प्राप्य सगुणेन मुमुक्षवः  ९०
प्राप्नुवन्त्येव साम्राज्यं गुणैः शातिशयैः पुनः
मुक्त्वा शातिशयान् भोगान् अन्ते तत्र गुणात्मिकान्  ९१
व्रजन्त्यनिच्छमानाश्च पुनरप्यधमां गतिम्
विद्यायोगेन सिद्धानां दुःखं सातिशयात्मकम्  ९२
यदधः पातो भवति अतः कष्टतरं नु किम्
तस्मात् सातिशयं योगं स विद्याकल्पनायुतम्  ९३
गुणं पाशात्मकं योगमिष्यते न विमुक्तये
अधुना कथयिष्यामि विद्यायोगस्य निर्णयम्  ९४
निरालंबेऽपि देवेशि शृणुष्व कथयामि ते

त्रिसरेणुभ्रमो वायुरेणुकः परिकीर्तितः ९५
चतुर्भिरणुकैर्मात्रैः अर्धमाना अणुद्वयम्
मनोवस्थमणुं विद्यात् वाक् स्थाने च अणुद्वयम् ९६
जिह्वाग्रे त्र्यणुकं विद्धि निसृतां मातृकां विदुः
ह्रस्वदीर्घप्लुताख्यस्तु मात्रात्रयमुदाहृतम् ९७
प्लुतातीता पुनर्देवी चतुर्थां शः प्रकीर्तितः
एकमात्रं वदेच्चाषो द्विमात्रं वायसो वदेत् ९८
त्रिमात्रस्तु मयूरो वै एषा मात्रा विकल्पना
घण्टानादान्तसंस्थन्तु विरामो यः प्रकीर्तितः ९९
तद्विनादन्नदेन्नाद्वं हृदिस्थं कण्ठसंपुटे
हृद्गतेनैव भावेन अनादीनादमव्ययम् १००
यदा विभाव्यतेऽव्यक्तमर्धमात्रं ततस्मृतः
मनसा चिन्तयेद्यावद्धृदिस्थन्नाभि भाषते १०१
अर्धमात्रार्धमित्युक्तमिति शाखस्य निश्चयम्
यदेतदक्षरन्नाम अर्धमात्रार्धसंस्थितम् १०२
विद्यायोगस्स विज्ञेयो मुक्तियोगस्ततोऽन्यथा
स विद्यस्य तु योगस्य निर्णयं समुदाहृतम् १०३
मोक्षे हेतुरिति ज्ञानमेतदभ्युपगम्यते
एतत्प्रधानिकं सर्वं सांख्यज्ञानार्थदर्शनम् १०४
एवं ज्ञात्वा तु देवेशि आचार्यमिदमब्रवीत्
भगवंस्तीव्रसंसारादज्ञानावर्तसंकुलात् १०५
त्रायस्व मामनुगतं शरण्यं शरणागतम्
त्वत्प्रसादादहं सर्वं विज्ञानामृतमुत्तमम् १०६
ज्ञातुमिच्छाम्यशेषेण यथावद्भवनाशनम्
पुरुषाव्यक्तयोरेवं अन्तरं ज्ञानचक्षुषा १०७
ज्ञात्वा कैवल्यगुणभुक् कथयस्व प्रसादतः

## इति निश्वासकारिकायां ज्ञानकाण्डे षड्विंशतिः पटलः

ईश्वरः
वक्ष्ये नित्यप्रबुद्धस्य गुणोदयमतः परम्
यथा तस्य मतिर्देवि जायते परमे पदे १
विचार्य निपुणो भूत्वा तत्वत्रयमहामतिः
तत्वातीतं यदान्वेषी गुरुशुश्रूषणे रतः २
मोक्षमिच्छति योगेन लिङ्गं संगृह्यते पुनः
लिङ्गहीनेत्वगमनं तस्माद्देवि न सिध्यति ३
इन्द्रियार्थै यथा चित्तं नित्यं गच्छति देहिनाम्
तया चैवेन्द्रियातीते तस्य नैकाकृते पदे ४
मनो न गोपमाज्ञेयं रूपं गृह्णाति सर्वतः
नीयते च यदा रूपं गच्छते +++ तदा ५
नानाभावं भवेत्क्षीणे स्वभावे केवले स्थिते
तदा निवर्तते देवि अन्यथा न निवर्तते ६
मनो निवर्तते रूपान्न वक्तुं शक्यते क्वचित्
न तत्र कथयोत्किञ्चित् को वा पृच्छति सुन्दरि ७
मन्तव्यं तत्परं ब्रह्म सङ्कल्परहितं यदा
सङ्कल्पञ्चैव वाचा च तस्मात्प्राज्ञः परित्यजेत् ८
शिष्याचार्यस्य संबन्धात् ज्ञात्वा तन्न निवर्तते
तत्रैव तु रतिं नित्यं बुद्धिः प्रज्ञा स्मृतिर्मतिः ९
अनुच्चार्यमसंदिग्धं स्वरवर्णविवर्जितम्
शिवं शान्तं परं सूक्ष्मं यो वै वेत्ति स शैववित् १०
अक्षरादिषु सर्वेषु क्षरेष्वक्षरतः क्रमात्
ये वदन्ति ततो मूढाः न ते शैवस्य पारगाः ११
पञ्चाशाक्षरनिर्मुक्तं क्षराक्षरविवर्जितम्

बिन्दुनादं परित्यज्य मन्त्रग्राममशेषतः १२
दन्तोष्ठतालुजिह्वाया स्पन्दनं यत्र दृश्यते
अक्षरत्वं कुतस्तस्य क्षरत्वे वर्तते सदा १३
यावदुद्गिरते वाचा यावख्यो प्रवर्तते
तावत्तत्सकलो ज्ञेयो निष्कलस्तु ततोऽन्यथा १४
यत्किञ्चित् चक्षुषा ग्राह्यं श्रवणाच्छ्रूयतेऽपि वा
सर्वमेतदनित्यन्तु स देवासुरमानुषम् १५
अक्षरेषु कुतो मोक्ष आकाशे कुसुमं कुतः
सिकतासु कुतस्तैलं शशशृङ्गे धनुः कुतः १६
इति देवि समाख्यातं प्रबुद्धस्य तु लक्षणम्

इति निश्वासकारिकायां ज्ञानकाण्डे
सप्तविंशतितमः पटलः

देव्युवाच
सकलो निष्कलश्चैव तथा सकलनिष्कलः
सूक्ष्मो भिन्नकलश्चैव शिवो ज्ञेयोऽथ पञ्चधा १
कीदृशस्सकलो देवो निष्कलश्चैव तत्र तु
तृतीयं भेदमाख्या हि यथा सकळनिष्कलम् २
सूक्ष्मो भिन्नकलश्चैव भेदानि कथयस्व मे
ईश्वरः
एतत्ते कथयिष्यामि पञ्च भेदात्मकं शिवम् ३
येन विज्ञातमात्रेण न पुनर्जन्मतां व्रजेत्
व्योमव्यापी परो देवः पञ्चमन्त्रो महेश्वरः ४
अष्टत्रिंशत्कलाविद्धो अ आमज्योतिरूपवान्
सकलश्चेति यः प्रोक्तस्वयं देवो ह्युमापतिः ५
सकलप्रकृतिस्थो हि प्रेरके च सदा पुमान्

व्यापयेद्भुवनं सर्वं व्यापयेत्सर्वदेहिषु ६
अवस्थितश्च सर्वत्र तेनासौ सकलस्मृतः
अविकल्पसमो भावो यत्र मन्त्रेण युज्यते ७
मन्त्राक्षरपदैः सर्वैः सकलस्तेन शब्द्यते
स्थूलसूक्ष्मेषु भूतेषु स्थितस्सर्वशरीरिणाम् ८
प्रधानपुरुषव्यापी तेनाऽसौ सकलस्मृतः
व्यापित्वात्सकलो देवाः कलातत्वं प्रकीर्तितम् ९
कलानां निलयो यस्मात् तेनाऽसौ सकलस्मृतः
सकलः कुरुते सृष्टिं मन्त्रसिद्धिं प्रयच्छति १०
नाशयेत्सर्वविघ्नानि मुक्तिमन्ते करोति सः
अप्रमेयोह्यनिर्देश्यो नौपम्यो रूपवर्जितः ११
सर्वतत्वपरः सूक्ष्मो निष्कलस्तत्र उच्यते
देहतत्वपरिच्छिन्ने निनादः सर्वदेहिनाम् १२
नादकलयाऽतीतस्सर्वो निष्कल उच्यते
सकलेन विनिर्मुक्तो बिन्दुनादविवर्जितः १३
व्योमस्थं निष्कलं तत्वं वाच्यावाच्यविवर्जितम्
विद्याविद्याविनिर्मुक्तं निष्कलं परमं पदम् १४
व्योम्नि स्फटिकसंकाशं जरामृत्युविनाशनम्
मनसा मोक्षसिध्यर्थन्निष्कले तु लयं कुरु १५
बिन्दुनादात्मकञ्चैव दृक् श्रोत्रेन्द्रियगोचरम्
दृश्यऽत्रार्धविमलं ज्ञेयं सकलनिष्कलम् १६
निष्कलं तद्विजानीयात् रूपं सकलनिष्कलम्
ओंकारशब्दतन्मात्रं श्रूयते कथ्यते न च १७
न च दृश्यति रूपेण ज्ञेयं सकलनिष्कलम्
सकलं योजयित्वा तु निष्कलं योज्यते यदा १८
तदा विचक्षणैर्ज्ञेयं शिवं सकलनिष्कलम्

देहस्थः सकलो ज्ञेयो निष्कलो देहवर्जितः १९
क्रियायोगादि गम्योऽसौ ज्ञेयः सकलनिष्कलः
चतुर्थमाकाशमयं नादातीतमतीन्द्रियम् २०
सदाशिवाख्यममलं रूपं सूक्ष्ममिहोच्यते
परमाणुसुसूक्ष्मत्वात् भावितव्यं निरामयम् २१
अत्यन्तगहनं सूक्ष्मप्राणातीतमलक्षणम्
परमाणुसुसूक्ष्मोऽसौ हृदि मध्ये व्यवस्थितः २२
प्रेरते च जगत्सर्वं स वै सूक्ष्मः प्रकीर्तितः
मन्त्राक्षरपदैरग्रैर्वियस्थं पश्यते सदा २३
ज्ञानयोगप्रकाशार्थं तज्ज्ञेयं सूक्ष्मदर्शनम्
पापक्षयाच्च योगाच्च ध्यानस्योपचयात्तथा २४
हृज्ज्योतिर्मध्यसंलीनं शिवं सूक्ष्मं स पश्यति
सर्वान्तस्थस्समाधिस्थ अन्तः करणगोचरः २५
नेत्रैः न दृश्यते सूक्ष्मं योगिभिस्तदुपास्यते
भूजलाग्न्यनिलाकाश राज्येन्दुरविरूपवान् २६
स शिवः सर्वधर्मात्मा स तु भिन्नकलो भवेत्
अकारादिक्षकारान्तं रूपं मन्त्रकलात्मकम् २७
विद्यते यस्तु बहुधा सकलो भिन्न उच्यते
मन्त्राक्षरपदैः यस्मात् पदार्थैः संस्थिता मतिः २८
भिन्नार्थवाचकैश्शब्दैः विद्याभिन्नकलश्शिवः
एवन्तु दशधा ज्ञेयं पुनर्ज्ञेयन्तु पञ्चधा २९
सप्तधा च चतुर्थाष्टौ चतुर्भिः पुनरेव च
शिवस्साङ्गोऽथ गायत्री सद्याद्याः पञ्च चापरे ३०
विद्येशा लोकपालास्ताभिन्नैकं सकलं शिवम्
भिन्नावस्थमिदं ज्ञात्वा योजयेत्सुसमाहितः ३१
भिनत्तिपाशसंघातं तेन भिन्नकलस्मृतः

एष ते कथितो देवि पञ्चवस्थः परश्शिवः ३२
ज्ञात्वैवं मुच्यते पाशैश्शिवं याति स चाव्ययम्
इति निश्वासकारिकायां अष्टाविंशति पटलः ३३

देव्युवाच
सार्वज्ञादिगुणादेव गीयन्ते सर्वतश्शिवे
तदहं श्रोतुमिच्छामि भगवन् वक्तुमर्हसि १
ईश्वरः
पशुं पाशान् तथा तत्वान् उद्भवं प्रळयं तथा
सर्वज्ञानादिदेवेशि सर्वज्ञस्तेन सोच्यते २
सर्वैश्वर्यसुसंपूर्णास्सर्वाश्रयनिराश्रयः
सर्वगः परिपूर्णश्च परितृप्तस्स उच्यते ३
अनादित्वात्स्वभावश्च सर्वात्मा दृढगोचरः
स्वशक्त्या बोधयेद्यस्मात् तस्माद्बोधः प्रकीर्तितः ४
उत्पादयेज्जगत्कृत्स्नं त्रैलोक्यं स चराचरम्
स्थितिनाशश्च देवेशस्वतन्त्रस्तेन सोच्यते ५
नित्यत्वादजरत्वाच्च सर्वज्ञत्वाच्च शङ्करः
योगैरव्याहतत्वाच्च अलुप्तस्तेन सोच्यते ६
अनादिमध्यनिधनं परं वेत्ति कश्चनम्
शक्तेरव्याहतत्त्वाच्च अनन्तस्तेन सोच्यते ७
एते ह्यङ्गा महेशस्य वेदितव्याः प्रयत्नतः
मुच्यते सर्वपापेभ्यः शिवं याति अनामयम् ८
इति निश्वासकारिकायां ज्ञानकाण्डे एकोनत्रिंशत्पटलः

देव्युवाच
षड्वर्णरहिते त्येवं यत्त्वयोक्तं महेश्वर

तन्ममाचक्ष्व देवेश वर्णो हीनं यदा भवेत्
ईश्वरः
शृणु देवि परं गुह्यं यत्त्वया परिपृच्छितम्
तदहं ते प्रवक्ष्यामि यत्सुरैरपि दुर्लभम् २
पञ्चधा देवदेवेशि वेदितव्यं प्रयत्नतः
वर्णभेदस्तु ज्ञातव्यं तत्त्वभेदञ्च तत्वतः ३
वायुभेदं पुनस्तस्य देवदेवस्य कीर्तितम्
देवतावस्थाभेदञ्च पञ्च भेदास्समासतः ४
एभि भेदैर्यदा हीनो देवदेवे जगद्गुरुः
तदा तु कथितो देवि षड्वर्णरहितश्शिवः ५
देव्युवाच
वर्णभेदः कथं देव तत्वभेदश्च शङ्कर
वायुभेदं पुनस्तस्य देवतावर्णभेदनम् ६
एभिर्हीनं यदा देव सद्भावं तस्य कीदृशम्
तन्ममाचक्ष्व देवेश अत्र मे संशयो महान् ७
ईश्वरः
एतानि कथयिष्यामि यद्यथा तु वरानने
तद्गतस्तन्मयो भूत्वा शृणु एकाग्रमानसा ८
वर्णभेदं मया ख्यातं तच्छृणुष्व वरानने
वर्णैर्गुप्तं विलुप्तञ्च तद्यथा कथयामि ते ९
अकारेण विलुप्तेन ओंकारश्शिववर्जितः
तेन देवि विलुप्तेन पञ्चमेन समन्वितः १०
पञ्चमेन यदा हीनष्षष्ठस्तत्र प्रकीर्तितः
षष्ठहीनं यदा देवि मकारस्तत्र दृश्यते ११
तेन हीनं यदा देवि कथं चन्द्रनिभो भवेत्
यदा तेन विहीनस्तु षड्वर्णरहितश्शिवः १२

सकलस्य तु तत्वस्य वर्णैर्हीनस्तु निष्कलः
न लोपेन वरारोहे यस्मिन्वक्रहलाकृतिः १३
तत्वे हीनं यदा देवि तस्यैव कथयामि ते
सप्ततत्वादि देहेऽस्मिन् मया पूर्णमुदाहृता १४
षड्भिस्तत्वैः विहीनस्तु कर्तव्यः परमेश्वरः
पञ्च तत्वा स्थिता ह्यूर्ध्वमयश्चैव व्यवस्थितः १५
तैर्विहीनं यदा देवि षड्वर्णरहितो भवेत्
आयुभेदं पुनस्तस्य कथ्यमानमिदं शृणु १६
यस्मिन् यस्मिन् स्थिता स्ते वै श्रूयतान्तु यथाक्रमम्
उदानस्संस्थितो ह्यूर्ध्वे अपानोऽधो व्यवस्थितः १७
प्राणो मध्यगतस्तत्र व्यानस्सन्धानगोचरे
समानस्सर्वगस्तत्र व्यापी तेषां धनञ्जयः १८
एभिस्सर्वे यदा हीनो देवदेवो जगद्गुरुः
तदा तु कथितो देवि षड्वर्णरहितश्शिवः १९
ब्रह्माविष्णुस्तथा रुद्र ईश्वरश्शिव एव च
शक्तिनादेन तु यदा हीनं तैर्विहीनस्तु निष्कलः २०
सितरक्तपीतकृष्णं स्फटिकाभं मनोरमम्
एभिर्वर्णैर्यदा हीनं षड्वर्णरहितो भवेत् २१
एभिर्वर्णैर्यदा हीनो बिन्दुरेको व्यवस्थितः
तदान्तौ परमं शान्तं वर्णरूपविवर्जितम् २२
न स्वरव्यञ्जनं तत्र न रूपं नैव भावना
न मनो विद्यते तत्र चिन्ता तत्र न विद्यते २३
न तत्र विद्यते किञ्चित् यजनो नात्र गम्यते
देव्युवाच
अद्याहं देव जानामि जीवितञ्च सुजीवितम् २४
किञ्चिद्दोढूयते चित्तं तन्ममाचक्ष्व शङ्कर

व्यञ्जनस्वरनिर्मुक्तं वर्णरूपविवर्जितम्  २५
त्वया देव समाख्यातं कथं विज्ञायते प्रभो
ईश्वरः
गुकपारं परादेवि संप्रदायमिवोदितम्  २६
न चाद्य कथयिष्यामि गुरुवक्त्रकलामृते
यथा येन च भावेन भावज्ञः कथयेद्गुरुः  २७
तत्तथा तु न चान्योस्ति श्रद्धातव्यं हि शोभने
यथा च भावमाभावे भावं भावति शोभने  २८
तथा ते कथयिष्यामि निवृत्तिं येन यास्यसि
इति निश्वासकारिकायां तृंशत्पटलः

देव्युवाच
बहुचित्तमिदं ज्ञानं निश्चयो नोपपद्यते
तदेकं वचनञ्चिन्त्यं येन श्रेयोऽहमाप्नुयाम्  १
ईश्वरः
ज्ञानन्तु बहुधा व्यस्तं लोके समुपदिश्यते
ज्ञेयन्तव्यतिरिक्तान्य ज्ञाने ज्ञेयं विधीयते  २
शिवश्च केवलश्शुद्ध अशुद्धश्चाक्षरैः सह
शुद्धा स्वाभाविकी मूर्तिः अयत्नादेव जायते  ३
नहि गोशब्दमात्रेण पयसः प्राप्तिरिष्यते
विशेषस्तु मधुक्षीरो पलानि अमृतादिभिः  ४
उत्तैरपि न संस्पर्शादोष्ठाभ्यां गायते फलम्
ईश्वरः
मुक्त्यर्थन्तु प्रशंसन्ति ज्ञेयं धर्मप्रवेदिनः  ५
विज्ञानात्तु गुणावाप्तिः संस्पर्शादिव धातवः
रसेन्द्रेणैव लोहानां कालिका स्पर्शवेधिना  ६

हारिताग्निसंयोगाद्धेमत्वं प्रतिपादितम्
स्पर्शवत् ज्ञानमुद्दिष्टं अग्निवज्ज्ञेयमिष्यते ७
हारितं परमेशान पशूनां पाशकालिका
स्वकारणगुणावेशात् तन्मयत्वं प्रपद्यते ८
लभन्ते योगिनस्सर्वे विज्ञानान्तुल्यतां तथा
स्वेषु स्वेषु तदैश्वर्य कारणं तुल्यधर्मताम् ९
अवाप्नुवन्ति सर्वत्र विज्ञानात्परमार्थतः
विज्ञानात्तु विशीर्येत त्रिविधं बन्धनञ्च यत् १०
विशीर्णबन्धनो जन्तुरिच्छाशक्तित्वमाप्नुयात्
इच्छाशक्तिगुणा व्याप्त्या न जन्तुर्दुःखभाक् भवेत् ११
सर्वकारणधर्मत्वं लभते नात्र संशयः
देव्युवाच
शिवस्य परिपूर्णस्य अध्वानन्तु कथं भवेत् १२
कीदृशन्तु शिवाध्वानं तत्त्वतः कथयस्व मे
आकाशस्य यथा नोर्ध्वं न मध्यं नाप्यधः क्वचित् १३
देवं सर्वगतो देवो अध्वानन्नैव विद्यते
पशुभावाद्यदातीत्य पतिभावेन तिष्ठति १४
तत्तस्य गमनं नाम सर्वगे गमनं कुतः
उन्नमत्वं शिवत्त्वञ्च प्रयातीत्युपचर्यते १५
संबोधो गमनन्नाम सर्वगे गमनं कुतः
देव्युवाच
सर्वव्यापीति देवस्तु कथ्यते मम शङ्कर १६
पक्ष एव विरुद्धोऽयं कथं निस्संशयो भवेत्
पत्रे पुष्पे फले तोये यदि सर्वत्र विद्यते १७
स्वगाङ्गकृन्तनं दुःखं कथं पूजा विधीयते
स्थावरे जङ्गमे चैव बीजाद्येषु च सर्वतः १८

स्वकाङ्गो दहनं दुःखं कथं होमेषु युज्यते
पत्रपुष्पफलादीनां यदि तत्र न विद्यते १९
अव्यापित्वं तदा तस्य सर्वव्यापी कथं भवेत्
अव्यक्ते व्यक्तता नास्ति रूपवर्णत्ववेदिनाम् २०
व्याहृतं यदि गृह्णाति दत्तं भोगवाञ्छया
व्यक्तरूपं शरीरन्तु व्यक्तं वै कृतकात्मकम् २१
कालेनैव विनश्यन्ते ये ये विग्रहरूपिणः
सर्वव्यापी भवेद्देवः पूजा देहः प्रशस्यते २२
लिङ्गपूजाविधिर्देव न चेष्टा मम रोचते
प्रतिघाते विलक्षन्तु आकाशं सर्वतोमुखम् २३
शिलास्तंभजलैः कुड्यैः पर्वतैश्च निवार्यते
यदेतत्प्राक् समुद्दिष्टमाकाशमजमव्ययम् २४
तद्वदीश्वरमव्यक्तमस्वतन्त्रमचेतनम्
पराधीनमकर्तारमज्ञं प्रसवधर्मिणम् २५
व्याप्यमव्यापकं क्षोभ्यं ग्राह्यं सगुणमुच्यते
विकारिणं सातिज्ञेयं व्यक्तमव्यक्तलक्षणम् २६
असर्वज्ञत्वमेतस्य योनिभूतमुदाहृतम्
एष धर्मः समुद्दिष्टः शून्यस्यानीश्वरत्वता २७
ईश्वरः
विदित्वा तु पुनर्देवी न मोहमुपयास्यसि
न तथा तु परं तत्वं व्यापयन्तं निवार्यते २८
जलदर्पणमध्ये तु छायारूपं यथा विशेत्
नोत्सरेन्न च भिद्येत तद्वद्देवो विरोचते २९
व्यापिनश्चाविरोधी च नावरुध्यति केनचित्
सोन्तर्बहिस्थितो यो वै न च कुत्रचिदाश्रितः
अनुमानन्नचोपम्यं न च तस्यास्ति यन्मम ३०

स्वभावनिर्मलश्शुद्ध अनुत्पन्नमलाञ्जनः
न शक्यं किञ्चित्तस्याथ प्रवक्तुं गुणलक्षणम् ३१
ततस्तोये यथा चन्द्रो दृश्यत्याकाशसंस्थितम्
तद्वत्सर्वगतो देवस्सूक्ष्मत्वान्नोपलभ्यते ३२
स च योगेन दृश्येत प्रत्यक्षं जलचन्द्रवत्
क्षीयते वर्धते चन्द्र अस्थिरो विषमश्चलः ३३
विकारित्वमुपायाति उत्पन्नश्शशलाञ्छनः
अमायी निर्विकारी च बहिरन्ते च संस्थितः ३४
समायी बिंबसंक्रान्तो खे स्थितो न तु तज्जले
मलनेऽपि स्वदेहे तु दृश्यते परमेश्वरः ३५
उपदेशेन देवेशि प्रत्यक्षं जलचन्द्रवत्
यथा शरीरमध्येऽपि प्रत्यक्षः परमेश्वरः
विद्यमानो न दृश्येत तथा पत्रफलादिषु ३६
स्वभावेन हि तत्रस्था खे तु दृश्यति चन्द्रमाः
उपदेशेन देवेशि प्रत्यक्षं सर्वतस्थितः ३७
पत्रपुष्पफलादीनां मलत्वान्न च दृश्यते
यथा त्वं देवि संमूढा असंग्राह्ये व्यवस्थिताः ३८
मणौ तोये यथादर्शे दृश्यन्ते रश्मिमालयः
एवं पत्रेषु पुष्पेषु दृश्यते परमेश्वरः ३९
पत्रपुष्पफलादीनां बीजाद्येषु च सर्वतः
सूक्ष्मत्वात्संस्थितस्तत्र दृष्ट्वा तन्नविकल्पना ४०
पत्रपुष्पफलादीनां बीजाद्येषु च सर्वतः
विद्यमानोऽपि तेष्वेव सूक्ष्मत्वान्न तु विद्यते ४१
दह्यमानेषु बीजेषु सूक्ष्मत्वान्न तु दह्यते
तेजोग्निमणिकांसानां आकाशे दर्शने तथा ४२
आपशस्त्राभिपाकेन न हि वेदोऽत्र दृश्यते

एवं पत्रफलादीनां बीजाद्ये प्रसवेषु च ४३
सूक्ष्मत्वाद्देवदेवस्य च्छेददाहो न दृश्यते
सर्वतः पाणीचरणं सर्वतोऽक्षिशिरोमुखम् ४४
सर्वव्यापि स्वरूपेण तत्वं सर्वगतं यतः
तस्मात्तन्न विकल्पेत अविचारेण शोभते ४५
प्रत्यक्षे दृश्यमाने तु हेतुस्तत्र न कारणम्
सर्वाभासन्निराभासमरूपसर्वरूपकम् ४६
नैकदेशस्थितत्वाच्च तस्य आवाहनं कुतः
सर्वव्यापि शरीरे स्वे पठ्यते वर्णसंहरौ ४७
योगपीठस्य शब्देन तथा पूर्वस्थितेन तु
यतस्वदेहे पठितो निरोधोऽस्य कुतस्मृतः ४८
सर्वसान्निध्य शब्देन स्वतनौ पठितो यतः
सान्निध्यकारणञ्चैव विरोधञ्च न विद्यते ४९
एवमेतानि रूपाणि तथान्यानि शिवस्य तु
विधिसामग्र्यहेतौ तु कीर्तिता हीनशासने ५०
आवाहनञ्च देवेशि क्रियात्मकविसर्जनम्
नचैतदर्थवादस्तु विधिवादः प्रकीर्तितः ५१
विधिवादं समासाद्य देवा ब्रह्मपुरोगमाः
ऐश्वर्यमतुलं लाभममरत्वञ्च शाश्वतम् ५२
भुक्तिमुक्तिपदं शास्त्रं शैवं नाम महात्मने
नहि दोषो विशोधो वा उभयार्थप्रसिद्धिदः ५३
देव्युवाच
रथ्यापुरुषवद्दोषो भवतीति शिवेन्यथा
प्रदेशिनीति वृत्तिः स्यान्न तु सर्वगता विभोः ५४
ईश्वरः
लक्षालक्षमयो देवः शिवः परमकारणः

अर्चायां लक्षणोपेतं जपयोगे तथैव च ५५
मनोबुद्धिरहंकारमन्तः करणसंज्ञितम्
तदेव स्थानमित्युक्तं मनो बुद्ध्यादिकल्पितम् ५६
सङ्कल्पबुद्धिरहितमहंकारविवर्जितम्
स्तुत्यादिविधिनिर्मुक्तं परापस्थमिदं स्मृतम् ५७
स तु सर्वगतो देवी लक्षालक्षविवर्जितः
देव्युवाच
यदि सर्वगतो देवस्सर्वावस्थोष्ववस्थितः ५८
तस्मात्स्थानविकल्पस्तु न तत्कुर्यान्महेश्वर
उभयार्थप्रसिध्यर्थं शैवं ज्ञानमुदाहृतम् ५९
सर्वव्यापि महेशानो मुक्तौ को दोषमावहेत्
ईश्वरः
सर्वङ्गतेषु भगवान् नहि देहेषु पूज्यते ६०
लिङ्गेऽथवान्यत्र शुभे संपूज्यो भगवान् शिवः
आवाहनमनुध्यानं मनो भुक्ति निरोधनम् ६१
शिवेन सह संयोगं चिन्तयेन्मनसा धिया
अर्चयेत् सकलं देवं जपेत्सकलनिष्कलम् ६२
ध्यायेज्ज्योतिर्मयं सूक्ष्मं कलाभिन्नं तु तर्पयेत्
व्योम्नि स्फटिकशुद्धाभं जरामृत्युविनाशनम् ६३
मनसा मोक्षसिध्यर्थं निष्कलन्तु लयं कुरु
स्नाने तु निर्मलो मन्त्री जपात्सिद्धिर्न संशयः ६४
पूजायां सन्निधावेव होमेनैव फलप्रदः
ध्यानेन सर्वगं देवं योगयोगित्वमाप्नुयात् ६५
व्रतेन कायशुद्धिः स्यात् दीक्षायां मुक्तिरिष्यते
आवाहनं स्थापनञ्च सान्निध्यं सन्निरोधनम् ६६
विधौ स्थितानि नामानि कर्मणां कथितानि तु

न चैवावाप्यते कश्चिन्न च कश्चिन्निवेश्यते ६७
निरुध्यते न देवेशि सान्निध्यं क्रियते न च
व्यापी मन्त्रस्वरूपेण चिन्तयन्ति परं शिवम् ६८
तदा वाहनमित्युक्तं क्षमस्वेति विसर्जनम्
इति निश्वासकारिकायां एकत्रिंशत्पटलः

देव्युवाच
मनो हि चलते नित्यं प्रवह्लञ्चलते बलात्
समाधिस्थोऽपि देवेश कथं तिष्ठति निश्चलः १
ईश्वरः
कर्मसन्यासयोगञ्च मतियोगं महत्तथा
योगः पञ्चविधः प्रोक्तः पुनरावृत्तिलक्षणः २
पुनरावृत्तियोगेन ये सत्ता वरवर्णिनी
तेषां हि चलते नित्यं कर्मासक्तमनस्सदा ३
देव्युवाच
कर्मयोगञ्च संयासं मतियोगं महत्तथा
एतेषां श्रोतुमिच्छामि भगवन् वक्तुमर्हति ४
ईश्वरः
अभिमानात्मकं योगकर्मशब्दाभिशब्दितम्
तदव कृतकृत्यः सन् न्यस्ते सन्यास उच्यते ५
सह तैश्चैव वैराग्यं संयोगः प्रकृतेर्जयः
अतीत्य प्रकृतौ ह्यष्टौ वर्तन्ते पुरुषेश्वरा ६
चत्वारः कथिता योगा महद्योगं यथा भवेत्
उपर्युपरि वर्तन्ते योगिनो योगवर्धनौ ७
तथैव च प्रलीयन्ते योगधर्मास्वकर्मसु
द्वैतभावार्थसंसिद्धा पुनः सृष्टिं व्रजन्ति ते ८

अणिमादिगुणा लक्षाद्रूपादिग्रहणात्मिकाः
निरोधाद्योगसंसिद्धिः मोक्षस्तेषां न विद्यते ९
अणिमादिगुणान् प्राप्य अङ्गविङ्कान् महेश्वरान्
नासौ सायुज्यमाप्नोति न भवेद्यावदेकता १०
ओंकारतत्पराधे तु रेचके पूरके स्थिताः
न तेषां तु परं स्थानं आत्मेन्द्रियनिषूदनात् ११
प्रणवो वायुरधो नाडी उदानोर्ध्वं व्यवस्थितम्
एतत्संशययोगीनां गतानां पुनरागमः १२
गमागमनसंयुक्तनिरुद्धाग्रन्थिपञ्जरे
विद्या योगात्मिका देवि विद्याभावाधिगच्छतः १३
भवान्तरयुगापेक्षि स विद्यस्योपजायते
अवश्यावेश्ययोगित्वात्ते तु व्याप्यमुदाहृतम् १४
ये केचित्कारणाभावान्न ते मुक्तास्तदात्मकाः
न योगी युञ्जका कश्चिन्न च चक्षुर्निमीलितम् १५
नासाग्रवीक्षणञ्चैव न तु योगं प्रशस्यते
देव्युवाच
सावलंबेह्यनित्यत्वं निरालंबेपि शून्यता १६
पक्षद्वयेऽपि दोषोऽस्ति किं तद्ध्यायन्ति योगिनः
ईश्वरः
यथा शिशुरकिञ्चिज्ज्ञो मूढोप्युक्ता न शायितः १७
परतत्त्वमजानन्तः पुरुषा बालकोपमाः
अज्ञायमाने तज्ज्ञानं ज्ञाते सत् ज्ञेयमिष्यते १८
ज्ञेयोद्भवञ्च विज्ञानं विज्ञानं तत्तदात्मकम्
देवी
यथा तज्ज्ञेययोगेन मनस्थास्यति निश्चलम् १९
एतन्मे निश्चितं ब्रूहि अत्र मे संशयो महान्

ईश्वरः
मनस्तु कथयिष्यामि चतुर्भेदसमायुतम्  २०
यन्न कस्यचिदाख्यातं तदद्य कथयामि ते
सात्विकं राजसञ्चैव तामसञ्च विशेषतः  २१
कथयामि समासेन योगभेदक्रमेण तु
चतुर्थन्तु महद्योगं अनौपम्यमनामयम्  २२
तानि प्रवक्ष्यामि मनसं मनसे चेष्टितानि तु
येन विज्ञातमात्रेण उन्मनत्वं स गच्छति  २३
संशिष्टश्च स्वलीनश्च विक्षिप्तो गतिरागतिः
मनश्चतुर्विधं प्रोक्तं भेदं तस्य इमं शृणु  २४
न मनो नापि मन्तव्यो नमन्ता च न विभाव्यते
स्वलीनो विषयैर्मुक्ता एकीभूतस्सुषुप्तवत्  २५
विषयान् गृह्णमानोऽपि ज्ञेयत्वमधिगच्छति
न च तैर्युज्यते ज्ञातस्संशिष्टस्स तु उच्यते  २६
अज्ञानात् गच्छते ज्ञानं ज्ञानादज्ञानमेव च
चलते यस्य दौर्बल्यात् तस्याऽसौ गतिरागतिः  २७
ज्ञानेन शिष्यते यस्मात् इन्द्रियार्थपरायणः
त्रिकालमातलो नित्यं स तु विक्षिप्त उच्यते  २८
स्वलीनश्चोत्तमस्तत्र गुणातीतो निरामयः
मध्यमस्स तु विज्ञेयो संशिष्टस्सात्विकः स्मृतः  २९
अधमश्च फलक्षुद्रो राजसो गतिरागतिः
तामसः स तु विक्षिप्तः चतुर्थो ह्यधमो मतः  ३०
गुणात्मकः समुद्दिष्टो मनः प्रायश्च देहिनाम्
निर्गुणत्वेऽधिकत्वेन यत्र लीनो भविष्यति  ३१
एकीभावगतश्शान्ते स्वकालेनैव गृह्यते
सुषुप्तादधिकत्वेन चेति नात्र विशेषणम्  ३२

न शक्यन्ते तदाख्यातुं न च तस्य तु धारणा
न चान्यो ज्ञापकस्तत्र यावन्नस्वतस्वयम् ३३
मनसंश्च सुलीनश्च यत्सुखं ह्यात्मसाक्षिकम्
योगावस्था परा ह्येषा प्राहुर्योगविदो जनाः ३४
यदा मनः परे तत्वे लब्धलक्षो निलीयते
तदाह्यशेषविज्ञानं विनाशमुपगच्छति ३५
यस्य सर्वगतो भावः स बाह्याभ्यन्तरे स्थितः
चलितोऽपि मनस्तस्य चलित्वा यास्यते कुतः ३६
ज्ञानं तत्वार्थसंबोध आत्मध्यानप्रकाशता
ज्ञेयं सर्वसमत्वञ्च ध्यानान्निर्विषयं मनः ३७
निराधारो निर्विकल्पः सर्वालयविवर्जितः
निर्गुणो लक्ष्यरहितः शिवयोगः प्रकीर्तितः ३८
मतः कोष्ठिणतो यस्य अन्तस्थः सुसमाहितः
यथा वायुः सुशीघ्रोऽपि मुक्त्वाऽकाशं न गच्छति ३९
ज्ञेयं विक्षिप्तचित्तस्य विषस्थोऽपि निश्चलः
भुङ्क्ते तु विषयान् सर्वान् नासौ लेह्यलेपकः ४०
यस्य सर्वगतो भावो ज्ञेयावस्थो निरन्तरः
कायानुबन्धिचलिते नाऽसौ चलति निश्चलः ४१
यस्या ज्ञेयमिदं सर्वं मनस्त्वभ्यस्य निश्चलः
एवं योनिजितो धीरैस्स गत्वा किं करिष्यति ४२
क्षीरक्षये यथा वत्सः स्तनान्मातुर्निवर्तते
रागक्षये तदा पुंसां मनश्शीघ्रं निवर्तते ४३
चलाचलशरीरार्थं चित्तवृत्तिरपेक्ष्यते
स च त्यागी शरीरस्य सुरुद्धो न भविष्यति ४४
इच्छाद्वेषौ सुखं दुःखं विरागो ज्ञानमेव च
त्रयोदश विधस्तेन करणं निश्चलीकृतम् ४५

स्वभावाच्चलमन्यत्तु चलं वा केन चाल्यते
निश्चलं न कदाचित् स्यात् अयुतस्य युतस्य वा ४६
देव्युवाच
प्राणाद्या वायवः पञ्च मनः पञ्च च देवताः
पुर्यष्टकं च तन्मात्रं बुध्यहंकारमेव च ४७
एभिस्तु व्याकुलीभूत्वा वायवो मनसा युताः
चलते तु सदा देवि सुखदुःखेन मोहिताः ४८
सुखदुःखमयो मोह अनेन चलते मनः
यस्य तुल्यसुखं दुःखं मनस्तस्य सुनिश्चलम् ४९
देव्युवाच
अक्ष्णान्निमीलनञ्चैव नासाग्रस्य तु वीक्षणम्
न योगी युञ्जकश्चैवार्थतस्तु त्वया विभो ५०
सावलंबं निरालंबं न योगमुभयात्मकम्
कथं योगं महादेव ज्ञेयस्य कथयस्व मे ५१
ईश्वरः
न योगकरणञ्चात्र आधारालंबनं न च
हृद्यातिनासिकाग्रस्य वीक्षणान्न निमीलनम् ५२
किञ्चिदाभासमात्रन्तु ज्ञात्वा तु परमां तनुम्
प्रतिपूरितवद्वायुः सूक्ष्मेण सुषिरेण तु ५३
गता न ज्ञायते यद्वत् ज्ञेययोगं तथैव हि
देव्युवाच
वायुपूर्णशरीरन्तु दृतिवल्लक्ष्यते प्रभो ५४
कृतकेन तु कर्तव्यं किं बाह्यकृतकात्मकम्
कृतकस्य तु अध्वानं ज्ञातव्यं सर्वथा विभो ५५
ज्ञेयस्य कृतकं नास्ति अध्वानं न च कल्पना
एतन्मे संशयं देव यत्सत्यं तद्ब्रवीहि मे ५६

ईश्वरः
अनाख्ये यस्य तत्वस्य निर्गुणस्य यशस्विनी
गुणवद्ग्रहणं कृत्वा कथयेत्परमेश्वरम् ५७
किञ्चिदाभासमात्रन्तु क्रतू कथयेच्छिवम्
प्रक्रमाध्वानमार्गन्तु उच्चारकरणानि च ५८
स्थातव्यन्तु वरारोहे परित्याज्यमशेषतः
एवं स निर्जितो तिष्ठेत् मनो दुर्जयचञ्चलम् ५९
चलते न कदाचित् स्यात् ज्ञेयावस्थो भवेत्सदा
अनिर्जितो यथा मल्लो दर्पणीकुरुते बहून् ६०
निजितं तिष्ठते धीरः तथा ज्ञेयविदां मनः
न हि गन्ता भवेत्कश्चित् गन्तव्यञ्च न विद्यते ६१
गमागमननिर्मुक्तो घटाकाशेव तिष्ठति
घटसंवृतमाकाशं नीयमानमितस्ततः ६२
घटो निर्याति नाकाशं शिवो ह्येवं नभोपमः
कदलीसारवद्देहं वृतं तत्वदलैस्स्थितम् ६३
तस्मात्तत्वदलत्यागी व्ययवद्भवते तदा
निराकारात्मविज्ञाने भावनागतचेतसः ६४
मोक्षोल्पीयस्य नोत्कण्ठः स मोक्षमधिगच्छति
मोक्षो नाम स विख्यातो स इरिरो निराकृतिः ६५
अचिन्त्यो निर्गुणो मोक्षो न तु मोक्षो लयान्वितः
न मोक्षस्य भवेत्तस्मात् न चाध्वानं कदाचन ६६
सर्वत्र विगता दृष्टिः स मोक्षो मोक्षवादिनाम्
बाहुशो यस्तु वैराग्यं आत्मा निर्व्यापितस्तु यैः ६७
तेषामन्योऽपि नास्त्यत्र गत्वा निरुपपत्तिकम्
एवमन्येऽपि ये केचित् निर्वाप्यन्ते विरागिताम् ६८
तथा तेऽपि गमिष्यन्ते निर्वाणं प्रथमं यथा

यथा शिलाश्रितं तोयं क्षपितं सूर्यरश्मिभिः  ६९
तथा निर्वापितो ह्यात्मा गतो निरुपपत्तिकम्
न तत्तोयगतं भूम्या न च तत्रैव तिष्ठति  ७०
न च तत् केनचित् पीतं गतो निरुपपत्तिकम्
एवं ग्राह्यात्मवैराग्यं यदुक्तं गुरुणा हितम्  ७१
गताध्वानमयं भावं तदेकन्तु सनातनम्
का ह्याशा मोक्षवादीनां यत्र सर्वे क्षयं गताः  ७२
एतदत्यन्तवैराग्यमपि सत्वसुखावहम्
यन्नास्ति तत्र सन्तोषं प्रायः कश्चित्करिष्यति  ७३
स मुक्तो निर्विकल्पस्तु सविकल्पस्तु बध्यते
नदीनां सागरं प्राप्य नामरूपं निवर्तते  ७४
ते तत्र न विजानन्ति परस्परविशेषणम्
न चान्यो जायते तत्र उदकस्य विशेषणम्  ७५
तत्र क्षयं गता नद्यस्सदप्येको महोदधिः
एवं नद्युपमो देही निर्वाणं सागरोपमम्  ७६
निर्ममास्ते तु तिष्ठन्ति सागराश्रितसिन्धवः
तिष्ठते निश्चलत्वं हि तृप्तिस्थं तस्य जायते  ७७
सुखदुःखं न संवेति गृह्णाति शिवजान् गुणान्
अभावे भावमालंब्य भावं कृत्वा निराश्रयम्  ७८
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्
अभावे भावमाश्रित्य भावलीनोप्यशङ्कितः  ७९
विभुरिति समन्तव्यो नात्र कार्या विचारणा
अभावस्य कुतो भावः निष्कलस्य महात्मनः  ८०
अमने अव्यवस्थानं निर्वाणं तस्य तत्पदम्
यस्य जाग्रे प्रलीयन्ते सर्वे भावास्सुषुप्तवत्  ८१
पर्याप्तं तस्य विज्ञानं त्रिपदं ते न लङ्घितम्

पूर्वको ह्यक्षरो ज्ञेयः सुरेचितमनक्षरम् ८२
कुंभकेन तदा ज्ञेयं क्षराक्षरपरश्शिवः
सर्वं त्यक्त्वा समाधिस्थ अन्तः करणगोचरम् ८३
ततस्तु पश्यते नित्यं योगिभिस्तदुपास्यते
गुरूपदेशनिर्दिष्टं संप्रदायं यथा स्थितम् ८४
स बाह्याभ्यन्तरे सूक्ष्म अनादि शिव अव्ययः
देव्युवाच
पितृयानपथं देव देवयानं तथैव च ८५
निश्चयं श्रोतुमिच्छामि पथद्वयविशेषणम्
इश्वरः
पितृयानेन गच्छन्ते इष्टापूर्तरता दिवि ८६
ते तत्र अनुभुंजन्ते यदत्र सुकृतं कृतम्
कृतक्षये निवर्तन्ते पुनर्जायन्ति भूतले ८७
पानरोधक्षये पत्रं यथा गत्वा निवर्तते
पथं चान्द्रमसं सर्वं मिडा तस्य तु सारथिः ८८
पितृयानेति विज्ञेयं स पथे यज्ञयाजिनाम्
क्षीयते वर्धते चन्द्र अस्थिरो विषमश्चलः ८९
पितृयानप्रपन्नस्य गतिस्तस्यापि ईदृशी
देवयानपथे सूर्यः सुषुम्ना तस्य सारथिः ९०
तं भित्वा गच्छते योगी दक्षिणेनाऽनिवर्तकः
सर्वभूतात्मभूतानां साधूनां तत्वदर्शिनाम् ९१
सर्वकामान्निवृत्तानां स पथोभ्यासयोगिनाम्
न ते भूयो निवर्तन्ते देवयानेन योगिनः ९२
तस्मात्सर्वं परित्यज्य दक्षिणेन प्रपद्यथा
एवं पथं विदुर्देवि पितृयानं समासतः ९३
देवयानात्पथो नास्ति श्रूयतां येन हेतुना

पथेन गम्यते यत्र यत्किञ्चित्परिकल्पितः ९४
अत्र धातामनिर्देश्यं पथो भवति कीदृशः
यथाऽध्वानञ्च योगञ्च सर्वतन्त्रं न विद्यते ९५
शिष्यप्रबोधनार्थाय एवं शास्त्रेषु चोदितम्
तन्मानार्थमिदं वाक्यं देवयाने यथा तथा ९६
सर्वव्यापित्वगमनं पथ्या भवति कीदृशः
यत्र गम्यति तन्नास्ति न च तत्र पथा क्वचित् ९७
नास्ति योगगतिस्तत्र सर्वलक्षात्परं पदम्
गतिर्नावर्तते वश्यं सुदूरेष्वपि योगतः ९८
देवयाने पथे नास्ति तेनाऽसौ न निवर्तते
यः कश्चित्पितृयानेन पथेन तु गतो नरः ९९
निवर्तते सुदूरोऽपि यत्र यानं समाश्रितः
देवयानेन सो गत्वा सर्वपापैर्विवर्जितः १००
भोक्तव्यञ्चैवमैश्वर्यमाशापाशविवर्जितम्
करणञ्चैव संज्ञा च अहङ्कारं तथैव च १०१
निवर्तते यतस्सर्वं कथं तत्र विभज्यते
ऐश्वर्यं चोदितं शास्त्रे अल्पसत्वमनौपमम् १०२
निराभासे तथैश्वर्यं न कदाचिद्भविष्यति
यस्येश्वरोऽपि नैराश्यं निराशं संप्रशस्यते १०३
त्यक्तं येन जगत्सर्वं आत्मा भोक्तव्य एव च
आत्मार्थे सर्वकार्याणि आशाभूतः प्रवर्तते १०४
आत्मत्यागः कृतो येन तस्याशा कस्य कारणे
तावद्बध्यति संसारे यावदाशा न मुञ्चति १०५
आशाच्छेदः कृतो येन स मुक्तः सर्वबन्धनैः
अतीतानागतञ्चैव वर्तमानं तथैव च १०६
अथात्मा स्थावरान्तत्वसर्वज्ञानादिकृत्रिमम्

जातं नास्ति तथाऽवश्यं ग्रजातञ्च विशेषतः १०७
एवं नैराश्यभावेन महामोहं त्यजिष्यति
ग्रजातत्वादजो नास्ति जातं नास्त्यविनाशकम् १०८
चतुर्विधञ्च यज्ज्ञानम् तदेव कृतकं स्मृतम्
काममूलो महावृक्षः संसारस्तीक्ष्णकराटकः १०९
सिच्यते रागतोयेन फलग्राहेरा वर्धते
कामरागन्न +++ स जिष्यति परिडतः ११०
वृक्षोपमन्तु संसारं सर्वमुन्मूलयिष्यति
प्रागुक्ताङ्गबलं सर्वं विद्युद्दर्शनसन्निभम् १११
यो ह्यज्ञः पर्युपासीत स मृत्युः पर्युपास्यते
तस्माच्छिद्रं पवित्रञ्च क्षेममङ्गुलमेव च ११२
स्वस्ति शान्ति शिवं तस्य हृदयं यस्य निष्प्रभम्
पातालस्सप्तलोकान्तः सर्वमेतद्विभीषिका ११३
भगनाशाशून्यमंत्रेरा ते स्मृता मन्त्रवादिनः
न हुतं न च वा दत्तन्न परत्र नचैहिकम् ११४
नचात्र बध्यते कश्चित् न च कश्चिद्विमुच्यते
बन्धव्यो बन्धनञ्चैव तथा चैवान्यबन्धकः ११५
दाता प्रतिगृहीता च तथा दातव्यमेव च
ग्रग्निदर्भाश्च मन्त्राश्च होता होतव्यमेव च ११६
यत्र शून्यन्निराभासं कुतस्तत्र इमे स्मृताः
ग्रग्निहोत्रादयो यज्ञा वेदाश्च ऋषयस्तथा ११७
ग्रसुराः पितरो देवाः सर्वे ह्यपरमार्थिकाः
सर्वे मन्त्रात्मका देवा देवो मन्त्रगरास्मृतः ११८
दैवं पैत्रञ्च यज्ञाश्च सर्वे तिष्ठन्ति मन्त्रतः
तत्र मन्त्रारिण वर्तन्ते तत्र ज्ञेयं सुनिष्कलम् ११९
तस्मात् मन्त्रोदितं सर्वं विद्यादपरमार्थिकम्

सर्वे धर्मा विरुध्यन्ते परमार्थस्य निश्चयात्  १२०
नैतद्ग्राह्यं गृहस्थानां ज्ञानमेतत्तु नैष्ठिकम्
न च नास्ति क्रिया यज्ञा अस्तित्वे च फलप्रदाः  १२१
फलञ्चात्मा प्रियैस्त्यक्तः तेषां तेनास्ति सुन्दरी
ना पृष्ठः कस्यचिद्ब्रूयात् न चान्यायेन पृच्छितः  १२२
अन्यायैः पृच्छिते यस्तु न ब्रूयात्तस्य पृच्छतः
विदितो योगसद्भावे तदाक्षमपुनर्गृही  १२३
अपुनर्गृहवासेति येनोक्तं तस्य भाषयेत्
विरागे निश्चयो यस्य ज्ञेयस्य प्राङ्निवेदयेत्  १२४
पुत्रदारकुटुंबेषु सक्तं सर्वमिदं जगत्
तस्य त्यागः कृतो येन तद्विरागस्य लक्षणम्  १२५
अनौष्ठिकेन वक्तव्यं गोष्ठिकामे कुटुं बिने
सस्पृहे चावरक्ते च दुष्टचित्तेऽजितेन्द्रिये  १२६
तव देवि मम ख्यातं मम भक्तेति सुन्दरि
तस्मात्सन्यासिनं मुक्त्वा नाख्येयं कस्यचित्त्वया  १२७
देव्युवाच
मत्सरीत्वं महादेव समत्वं यन्न पश्यति
सिद्धान्ते ब्रूहि को दोषो गृहस्थानां प्रकाशते  १२८
श्रुतिस्मृत्युदितो मार्गो धर्मकामार्थसंयुतः
सिद्धान्ते केवलं ज्ञानं धर्मकामार्थवर्जितम्  १२९
धर्माद्यास्तत्र हीयन्ते तेषाञ्चैव प्रकाशते
न सिध्यते च तत्कार्यं तस्यारंभो निरर्थकः  १३०
दद्याद्यो विमलं वेद्या अदत्त्वामलशोधनम्
ओषधीन्नैव सिध्येत मतिग्रस्तस्य देहिनः  १३१
तद्वद्दोषो भवेद्देवि गृहस्थानां प्रकाशते
न दोषोयमियद्ब्रूहि श्रूयतां केन हेतुना  १३२

ऐहिकामुष्मिकान् भोगान् यो भुङ्क्ते तु वरानने
कदाचिद्यजते यज्ञं तेन यज्ञो विदूषितः १३३
अभोज्यं भोक्तुकामस्य अनर्थकमिदं भवेत्
विधियज्ञप्रमाणस्तु सस्पृहस्य न युज्यते १३४
त्यागात्संसिध्यते ज्ञेयः सस्पृहस्तु न सिध्यति
गृहस्थस्य परित्यागो न कदाचिद्भविष्यति १३५
ऐहिकामुष्मिकान् तृष्णान् त्यक्त्वा त्यागी भविष्यति
गृहस्थोऽपि परित्यक्तुं ऐहिकं नैव शक्यते १३६
वित्तहीने गृहस्थत्वं न कदाचित्प्रसिध्यति
उपादानन्तु वित्तस्य सर्वोपायेन कारणम् १३७
तृष्णाञ्चाशेषतः त्यक्त्वा वैराग्येन यदा स्थितः
पञ्चसु नादृतैर्दोषैः गृहीणां गृह्यते तदा १३८
गृहस्थत्वं भयं घोरं लोभा ++ जेष्यति
न स त्यजति संसारलोभमोहतमो व्रतः १३९
यथा सर्वं परित्यज्य तथेदं श्रुतिरब्रवीत्
ईशावास्यमिदं सर्वं यत्किञ्च जगतां जगत् १४०
तेन त्यक्तेन भुञ्जीथा माहृथाः कस्यविद्धनम्
तद्गृहस्थस्य किं बाह्यमस्मिन् लोकेप्यवस्थितम् १४१
यत्रासक्तो दयां त्यक्त्वा भूतग्रामं जिघांसति
तस्मात्सुन्दरि तस्यापि गृहे मुक्तिर्न दृश्यते १४२
न च संयासयोगेन इच्छाद्वेषस्य वर्जनात्
न माया मत्सराद्युक्तो गृहस्थोऽपि न सिध्यति १४३
त्यागहीना न सिध्यन्ति पक्षद्वयविडंबकाः
प्रवृत्तिश्च निवृत्तिश्च द्विविधं कर्म कीर्तितम् १४४
अन्तः करणहीनस्य न किञ्चिदपि सिध्यति
लोकस्य सर्वतो मौनी समश्शान्तः समाहितः १४५

सर्वमात्मवशं पश्येद्भूतग्रामे चतुर्विधे
देव्युवाच
नोपकाराय यत्किञ्चित् न चान्यो जायते गुणः १४६
मौनभावेन देवेश तस्मान्मौनं निरर्थकम्
ईश्वरः
उपकारकृतस्तेन परेषां हितकाम्यया १४७
येन निर्वापितो ह्यात्मा वैराग्यं गृह्यते यतः
अनेन हेतुना दुःखं शरीराद्विनिवर्तते १४८
परेभ्यः कुरुते दुःखं यं यं वाचा समीहते
देव्युवाच
अस्य वैराग्ययोगस्य किं भवेत्सिद्धि वा न वा १४९
एतदिच्छामि विज्ञातुं भगवन् वक्तुमर्हसि
ईश्वरः
शृणु देवि परं गुह्यं तस्यसिद्धिमनौपमाम् १५०
न रूपं न वर्णञ्च न च तस्यैव भावना
सकलं निष्कलञ्चैव करणाधारवर्जितम् १५१
नचोच्चारविभक्तिश्च वर्णरूपविवर्जितः
अमनस्थमहायोगं सर्वसिद्धिप्रदायकः १५२
गुरुप्रसादमात्रन्तु पारंपर्यं वरानने
तं लब्ध्वा लब्धमात्रस्तु यथा सिद्धिं लभेन्नरः १५३
समुदायमिदं ज्ञानं न पृथक्त्वं कदाचन
स्वरवर्णविहीनस्तु सर्वसिद्धिप्रदं शुभम् १५४
तेन ज्ञेयमिति प्रोक्तं यस्माद्भ्रान्तिर्न जायते
भ्रान्ति निर्नाशनं ह्येतत् सर्वज्ञानार्थसाधकम् १५५
सर्वज्ञानमिति ज्ञेयं सर्ववर्णप्रसाधकम्
एतद्देवि महाज्ञानं विज्ञानं शून्यमव्ययम् १५६

बिन्दुमात्रा विनिर्मुक्तस्वरवर्णविवर्जितम्
ज्ञेयमेतत्समाख्यातं जरामृत्युविनाशनम्  १५७
सर्वव्याधिहरञ्चैव सर्वपापान्तकं तथा
अचिन्त्यं सूक्ष्ममाकाशमशेषव्यापकं परम्  १५८
ईषत्प्रसार्य वक्त्रन्तु जिह्वाकाशे नियोजयेत्
तस्मिंस्थाने तु यत्किञ्चित् स्पर्शमीषद्विभावयेत्  १५९
भवितव्यन्तु योगीभिः सिध्य्यर्थमिदमुत्तमम्
अस्यैव कथयेद्देवि योगस्य विधिमुत्तमम्  १६०
विज्ञप्तेन तु कुर्वीत सत्यं देवि वदाम्यहम्
न देवा नासुरा यक्षा न नागा न च राक्षसाः  १६१
किन्नराप्सरसश्चैव पिशाचा न च भूतले
न वसुः न च विद्या च विद्याधरगणेन च  १६२
लोकपालान नक्षत्रा चन्द्रसूर्यौ न चैव हि
न वायुस्सलिलञ्चैव न वृक्षा न च पर्वताः  १६३
न मेरुर्गिरिराजानो न चैव विषयस्तथा
न ब्रह्मा न च वै विष्णुः नाहं देवि त्वया सह  १६४
अनन्तं सर्वमेतत्तु स किञ्चिदपि चिन्तयेत्
एवं यो भावयेद्योगी विततं शून्यमव्ययम्  १६५
न यमो मयतो वाऽपि न कार्यं तस्य वर्तते
दष्टो यदि महानागैरनन्तगुलिकादिभिः  १६६
न विषं क्रमते तस्य यस्तु शून्यं विचिन्तयेत्
अपरञ्च परञ्चैव सर्वमस्मिन् प्रतिष्ठितम्  १६७
शून्यध्यानमिदं देवि मयोक्तं विधिवत्त्वया
धर्माधर्मक्षयं कर्म जन्मव्याधिविनाशनम्  १६८
ईदृशज्ञानसद्भावं न दद्याद्यस्य कस्यचित्
दीक्षयित्वा महादेवि दातव्यं सुपरीक्षिते  १६९

इदञ्चारमिदञ्चारमिह देहस्य गोचरे
इदं तत्वमिदं तत्वमिदं ज्ञानमिदं सर्वज्ञमेव च १७०
इदन्नाडीसुसञ्चारमेवं ज्ञात्वा विमुच्यते
एवं वदन्ति बहव अन्योन्यज्ञानगर्विताः १७१
एवञ्च निश्चितं ज्ञात्वा न तु तत्वं प्रकाशयेत्
ब्रह्मचारीति वक्तव्यमहो ज्ञान्तेति वा पुनः १७२
एवं वा तोषयित्वा तु तूष्णीं भूतस्समाचरेत्
शृणु देवि परं गुह्यं स मुद्राभिनयमुत्तमम् १७३
एतद्विज्ञानमात्रेण अभावं पदमाप्नुयात्
सव्यहस्तेन कर्तव्यं मुद्राबन्धमनुत्तमम् १७४
सर्वेषां ज्ञानिनामेतत् सर्वदर्पापहं महत्
यदि स्यात् ज्ञानिनः कश्चित् ज्ञानिनो गृहमागतः १७५
दर्शयेभिनयं देवि येन विज्ञायते श्रमम्
एवं ज्ञानी यदा ज्ञानं पृष्टव्यं पुनरेव हि १७६
कथयेद्यस्य मुद्राया देवतामनुपूर्वशः
तदा तस्य पुनर्देवि पृष्टव्याः गुरवः क्रमात् १७७
गुरू शास्त्रक्रमञ्चैव ज्ञात्वा तद्वद्विशारदः
तदा तत्पूजयेद्देवि शिववच्छिवसंमतः १७८
तस्य लक्षणतो ब्रूहि मुद्राया वरवर्णिनी
येन विज्ञातमात्रेण न पुनर्जन्म चाप्नुयात् १७९
कनिष्ठायां स्थितो ब्रह्मा अनामायाञ्च केशवः
मध्यमायां स्थितो रुद्रः तर्जन्यामजमीश्वरः १८०
सदाशिवस्थितोङ्गुष्ठे कथितन्तु समासतः
तर्जन्यङ्गुष्ठकौ लग्नौ नीतोर्ध्वं विसृजेत्पुनः १८१
संमुखेन तु देवेशि सकृतत्वप्रकीर्तितः
मध्यमानामिका चैव कनिष्ठाया समन्वितः १८२

प्रसृतादि सदा देवि मुद्रयाभिनयं शुभम्
ज्ञातेनाऽनेन मुद्राया मुच्यते पाशबन्धनात् १८३
कुलकोटिशतं साग्रं नरकात्तार इष्यति
इति निश्वासकारिकायां द्वात्रिंशत्पटलः

देव्युवाच
ज्ञात्वा ज्ञानं परं दिव्यं योगसद्भावमुत्तमम्
कृताञ्जलिपुटा भूत्वा देवीवचनमब्रवीत् १
देव्युवाच
तत्वविज्ञानयोगञ्च शक्तिनादन्तथैव च
बिन्दुदेवस्य विज्ञानमष्टभेदस्य शङ्कर २
योगसद्भावविज्ञानं ज्ञातं मे त्वत्प्रसादतः
न यत्र सूत्रे देवेश पतिसद्भावमुत्तमम् ३
एकस्मिन् कथितास्सर्वे विदितास्त्वत्प्रसादतः
पुनश्च श्रोतुमिच्छामि भगवन् वक्तुमर्हसि ४
प्रशकृतिमादितः कृत्वा नाडीं वायुसमन्विताम्
कथयस्व महेशान प्रश्नं गुह्यतरं प्रभो ५
ईश्वर उवाच
शृणु देवि परं गुह्यं योगसद्भावमुत्तमम्
सर्वसंहितसामान्यं कथयामि महाफलम् ६
प्रत्याहुस्तथा ध्यानं प्राणायामोऽथ धारणा
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ७
चित्तं चेता तथा चिन्ता पञ्चधा कथितं मया
योगस्य करणान्येते कथितानि मया तव ८
एवमुत्पद्यते योगो धारणा सुकृतश्रमः
देव्युवाच

ध्यानधारणचिन्ताभिः योगारंभक्रियादिभिः ९
कालेन यदि सिध्येत भगवन् किं कृतं त्वया
यदात्मपीडारहितं विना क्लेशैरवाप्यते १०
ज्ञानं कथय देवेश सद्यः फलविभूतिदम्
पुराणे सांख्ययोगे च यादृशं कथितं प्रभो ११
अत्रापि तादृशं प्रोक्तं किं विशेषमुदाहृतम्
योगधारणसंयुक्ता वेदाद्याः परमेश्वर १२
महाज्ञानं विनैव किमत्र भवता कृतम्
अनाख्येयमनिर्देश्यं भगवन् कथितन्तु यत् १३
तन्मया विदितं देव गृहीतजीवितं दृढम्
प्रकृतिं पुरुषञ्चैव नियतिं कालमेव च १४
मायाविद्येशमीशञ्च सद्योगं कथयस्व मे
विना तु करणैर्देवो ध्यानधारणवर्जितः १५
तदहं श्रोतुमिच्छामि भगवन् वक्तुमर्हसि
ईश्वरः
अहं ते कथयिष्यामि योगसद्भावमुत्तमम् १६
यत् ज्ञात्वा तत्क्षणादेव कृतार्थो जायते नरः
येतदत्यन्तसुखदमशेषफलभूषितम् १७
देवतानामृषीणाञ्च ज्ञानञ्चैतत्प्रकाशितम्
यदेतदमृतं ब्रह्म जनस्सर्वोऽधिगच्छति १८
तदा विमुच्यते लोके शून्या च पृथिवी भवेत्
सर्वे धर्माः प्रलीयन्ते वेदयज्ञतपः क्रिया १९
नश्यन्ति चाग्निहोत्राणि मर्यादाश्च पृथग्विधाः
यान्ति देवा अदेवत्वमध्यातपविवर्जिताः २०
एतस्मात्कारणाद्देवि गोपितं कथितं मया
योगधर्मार्थशास्त्राणि विस्तीर्णगहनानि च २१

दृष्टान्योन्यविरोधीनि तेषु निष्ठा न विद्यते
विदेहचक्रमारूढमेवं भ्राम्यति वै जगत् २२
परस्परविरोधेन वर्तन्ते सर्वयोगिनः
त्त्वया दुर्ललितेनाहं पृष्टो भक्त्या प्रचोदितः २३
ग्राहेणैव गृहीतोऽस्मि अवश्यं कथयामि ते
न ब्रह्मा न च वै विष्णुः उतान्ये सुरसत्तमाः २४
वक्तुमेवं विधं प्रश्नं त्त्वदृते तु वरानने
तस्माच्छृणुष्व सद्भावं निस्संदिग्धमविस्तरम् २५
+++ दि लक्षणगुणावाप्तिं क्षणादायासवर्जिताः
सिद्धिदा मोक्षदा चैव तुष्टिदा पुष्टिवर्धना २६
ज्ञानदा प्रीतिदा चैव आयुरारोग्यदा तथा
घोषिणी पिङ्गला चैव वैद्युती बिन्दुमालिनी २७
चान्द्री मनोनुगा चैव सुकृता च तथा परा
सौम्या निरञ्जना चैव निरालंबा च कथ्यते २८
नाड्यस्त्वेता विनिर्दिष्टा मरुतादितृलंकृता
पूर्वमात्मा तु मेधावी शिवेन परमेण तु २९
कृत्वा पूर्वमशेषन्तु पश्चाद्ध्यानं समारभेत्
एकाग्रमनसो भूत्वा जितक्रोधा जितेन्द्रियाः ३०
चतुर्विं शति मे तत्वे मात्रा नाम्ना तु घोषिणी
द्वितीया पिङ्गला नाम्ना सा तत्वे पञ्चविंशके ३१
षड्विंशके समाश्रित्य संस्थिता वैद्युती सदा
सप्तविंशति मे तत्वे विज्ञेया बिन्दुमालिनी ३२
अष्टविंशति मे तत्वे मात्रा तिष्ठति चन्द्रिणी
एकोन त्रिंशतितमे मात्रा तिष्ठेन्मनोनुगा ३३
ततस्त्रिंशति मे तत्वे तामाहुः सुकृतेति च
एकविंशत् समाश्रित्य सौम्या मात्रा व्यवस्थिताः ३४

द्वित्रिंशके समाश्रित्य स्थिता मात्रा निरञ्जना
त्रयस्त्रिंशे निरालंबा तस्या लक्षं न विद्यते ३५
त्रयस्त्रिंशतिकः पुरुषे नव मात्रावलंबकः
तेषु लक्षणदिव्यानि लक्षितव्या विपश्चितैः ३६
देव्युवाच
यान्येतानि च तत्वानि नव मात्राश्रयाणि तु
तेषामवाप्तिं गमयन् कथं सद्योपलभ्यते ३७
सामान्ययोगशास्त्रेषु अनेकाकारवागुरैः
सीदन्त्यायासबहुलैः मृगाः कूटेव संस्थिताः ३८
वायुरोधं विना देव ध्यानधारणवर्जितम्
सद्योपलब्धिसुखदं तन्मे ब्रूहि महेश्वर ३९
ईश्वरः
शृणुष्वावहिता देवि अश्राव्यमकृतात्मनाम्
यं प्राप्य सद्यश्शिवतां लभन्त्यायासवर्जिताः ४०
यत्र तत्राश्रमरताः यत्र तत्र निवासिनः
लीयन्ते तु यथा लक्षे निमेषाध्ये तु ४१
श्रोत्राद्धौ तथाङ्गुष्ठौ घ्राणमङ्गुलिभिस्तथा
ततोऽस्य सर्वतो व्यापी ध्वनिरूर्ध्वं निजृम्भते ४२
भुक्तं भुक्तं पचत्याग्निः शरीरेषु शरीरिणाम्
तस्य तेन प्रयोगेन शब्दमाहुरकृत्रिमम् ४३
चतुर्विं शति तत्वस्य श्रुत्वा पापैः प्रमुच्यते
तस्मात् षड्जादयस्सप्त स्वयंभुरसृजत्पुरा ४४
यैरिदं सततं सर्वं सदेवासुरमानुषम्
सप्त स्वरास्तु संभूता ध्वनिमभ्यसतस्सदा ४५
ततोऽस्य मासमात्रेण ++ क पिण्डीकृतो नलः
रजस्तमं ततो भित्वा ज्योतिरन्ते प्रकाशते ४६

बाह्यतोऽपि यथा दृष्टं पश्यत्यन्ते तथैव सः
त्रिभिर्मासै स्वतन्त्रश्च शिवत्वं तस्य जायते ४७
एषा ते प्रथमा मात्रा कथिता देवि घोषिणी
लक्षेस्मिन् मनसा ज्ञानं नावज्ञां कर्तुमर्हसि ४८
एवं वै यो विजानाति स पापेन न लिप्यते
श्वपचेष्वपि भुञ्जानाः पद्मपत्रमिवांभसि ४९
इति ते कथिता देवि प्रथमा त्रातु घोषिणी
अतः परं प्रवक्ष्यामि लयमायासवर्जितम् ५०
स्वदेहादुत्थितां सद्य शृणु मात्रान्तु पिङ्गलाम्
सूर्यातपे बहिस्थित्वा किञ्चित् भक्तिसमाश्रितः ५१
लक्षयेदात्मनो धूमं तालुं भित्वा विनिर्गतम्
यथा यथा तु चैतस्मिन् मनो लक्षे समादधे ५२
तथा तथाऽस्य महती वर्त्ति धूमस्य वर्द्धते
एवं मासप्रयोगेन मूर्ध्निचारमपावृतम् ५३
तुर्यान्ते पिङ्गला मात्रं लयं तस्योपलक्षयेत्
देवयानपथं दृष्ट्वा पश्यतात्मानमात्मनि ५४
लोकालोकांश्च सकलान् सहाह्याभ्यन्तरे स्थितान्
धूमानुमार्गाञ्ज्योतींषि तां दृष्ट्वा न मृतं पदम् ५५
विमुक्तस्सरवपापेभ्यो निर्द्वन्द्वं पदमाप्नुयात्
एवं ते पिङ्गलालक्षं मनसा परिलक्षितम् ५६
आत्मानं पश्यते तत्र शिवञ्चैव परापरम्
अनेन विधिना देव तेजसा परिसंवृतः ५७
सतताऽभ्यासयोगेन षण्मासेनैव सिध्यति
चिन्तितं मनसा सर्वं संपादयति लीलया ५८
देहपाते व्रजत्याशु शिवस्य परमं पदम्
पञ्चविंशति मे तत्वे लक्षमेतत्प्रकीर्तितम् ५९

कथितन्तु रहस्यन्तु मोक्षमार्गविशोधनम्
पञ्चविंशति मं लक्षं कथितं तव शोभने ६०
अ्रथ षड्विंशके तत्वे वैद्युतीं शृणु सुवृते
योगारंभं विनायामं लीलामार्गोपशोभितम् ६१
रात्रौ शयनकाले तु प्रविश्याभ्यन्तरं विना
विना दीपान्धकारे तु उद्घृत्य नयने स तु ६२
ततस्तान् नेत्रजान् दीप्तिं तटद्वलयसन्निभाम्
सौदामिनीव चपलां दृष्ट्वा द्रष्ट्ट प्रणश्यति ६३
प्रयोगमेतत् सततं कृत्वा कृत्वा तु विश्रमेत्
स्थित्वा कालान्तरं किञ्चित् तान्येवाभ्यसतः पुनः ६४
यथा यथा तु चाभ्यासं कुरुते साधको निशि
तथा वर्धति तत्तेजस्तैलबिन्दुरिवांभसि ६५
पश्यतेऽन्यावृतं व्योम स्फुलिङ्गा इव काञ्चने
तानेव तु गृहान् विद्वान् पश्यते च न संशयः ६६
दशार्धमासयोगेन ज्योतिरन्ते प्रकाशते
दृष्ट्वा ज्वलनं सर्वत्र दिव्यं चक्षुःप्रवर्तते ६७
ततस्वतन्त्रतामेति विशते च परे शिवे
एतत्ते कथितं लक्षं सुषुम्नायां व्यवस्थितम् ६८
कथितं ते यथा न्यायं गूढं सङ्गोपितं मया
ततस्वच्छन्दतामेति शिवतत्वेन संशयः ६९
सप्तविंशति मे तत्वे या स्थिता बिन्दुमालिनी
तस्योपलब्धिं तस्यापि लक्षन्तु कथयामि ते ७०
शुचिर्भूत्वा बहिर्ग्रामात् तरुच्छायां समाश्रितः
किञ्चिदुन्नम्य वक्त्रन्तु शुद्धमालोकयेन्नभः ७१
तस्मिन् स लाय चैतन्यं पश्यत्याकाशसातपम्
ज्योतिस्फटिकसंकाशा निपतन्त्युत्पतन्ति च ७२

इडयास्तद्भवेद्रूपं देवानान्ते च विद्युषा
यथा यथा हि योगेन तस्मिन् लक्षं स सन्दधे ७३
तथा तथा दिशस्सर्वा बहिः पूर्णैरिवा वृताः
अनेकाकारवश्ये तु स बाह्याभ्यन्तरे स्थिताः ७४
दृष्ट्वाऽत्मना तदा योगी पुण्यपापैर्न लिप्यते
त्रैलोक्ये सर्वभूतानां सुभगः प्रियदर्शनः ७५
जायते नात्र सन्देहः ततो नामाधिगच्छति
एष ते कथिता मात्रा सौम्याख्या बिन्दुमालिनी ७६
मुच्यते सर्वरोगैश्च देहपाते शिवं व्रजेत्
सप्तविंशति मे तत्वे लक्षमायासवर्जितम् ७७
अष्टाविंशति मे तत्वे मात्रा नाम्ना तु चान्द्रिणी
योगारंभं विनायासं मन्त्रोच्चारविवर्जितम् ७८
यत्र यत्र स्थितो देशे यत्र तत्राश्रमे रतः
पूर्वमध्या परा हेतुः अभ्यसेल्लक्षमुत्तमम् ७९
श्वेता रक्ता तथा पीता कृष्णा चैव यथाक्रमम्
वर्चसं स्फटिकाभन्तु लक्षयेत्परमाणवम् ८०
किञ्चिदुन्नम्य वक्त्रन्तु निर्मले तु नभस्थले
एकैकाभ्यासयोगेन सिध्यते साधकेश्वरः ८१
वायव्याः कृष्णवर्णास्तु आद्ये शेषविशाशने
उच्चाटने यथोन्मत्ते योजयेद्योगवित्सदा ८२
एवमादीनि चान्यैस्तु ताडनं स्तंभनादि च
आप्यायनञ्च पुष्टिश्च शान्तिकादिक्रमेण च ८३
कुरुते योगविच्छ्रीमान् एकैकाभ्यासयोगतः
प्रतिमासप्रयोगेन एभिः कर्माणि कारयेत् ८४
षण्मासा ध्यानयोगेन त्रैलोक्यं यत्प्रवर्तते
प्रत्यक्षं जायते तस्य सिध्यन्ते च शिवो भवेत् ८५

पञ्चमः सर्वकर्माणि कुरुते परमाणवः
पञ्चरूपधरं ह्येतत् पञ्चमं यत्प्रकीर्तितम् ८६
ध्यात्वात्मैवं विधं योगी सर्वकर्माणि कारयेत्
तेषां मध्ये पुनर्योगी पश्यते ऊर्मिसङ्कुलाम् ८७
वीचीतरङ्गकुटिलां विद्युद्रेखासमप्रभम्
सभोगभोगिसङ्काशामिन्द्रायुधसमप्रभाम् ८८
यथा यथा तु चैतन्यस्तस्मिन् लक्षे समादधे
तथा तथा तु संपश्य ऊर्मिरिवतिरन्तरम् ८९
एतां दृष्ट्वा तु योगीन्द्र पुण्यपापक्षयो भवेत्
सतताभ्यासयोगेन सिध्यते नात्र संशयः ९०
द्वादशार्धार्धमासेन क्षुत्तृष्णापरिवर्जितः
दिव्यदृष्टितनुर्दिव्या जायते नात्र संशयः ९१
संवत्सरेण युक्तात्मा योगीन्द्रः सुसमाहितः
दूराच्छ्रवणविज्ञानं मनश्चावलोकनम् ९२
प्रत्यक्षं जायते तस्य त्रैलोक्यं यत्प्रवर्तते
अन्तर्धानो तथा कर्षो पादचारे तथैव च ९३
वायव्येन च कर्तव्यं के च वैहायसादयः
आग्नेयैः शोषणं कुर्यात् ताडनं मारणानि च ९४
स्तंभनं मूकताञ्चैव पार्थिवेन तु कारयेत्
आप्यायनादितः कृत्वा वारुणेन तु कारयेत् ९५
पञ्चमं सर्वकार्येषु प्रयोज्यं योगिना सदा
अष्टाविंशतिमात्रस्य लक्षह्येताः प्रकीर्तिताः ९६
एकोनत्रिंशके तत्वे मात्रा तत्र मनोनुगा
लक्षितव्या प्रयत्नेन यदिच्छेत्सिद्धिमात्मनः ९७
एकान्ते विजने गत्वा दिव्ये चाक्ष्णौ निमीलयेत्
आत्मा तु काञ्चनच्छाया अक्ष्णी आवृत्य तिष्ठति ९८

तस्मिन् सन्धाय चैतव्यं निनादस्संप्रविश्यति
सितरक्तपीतकृष्णमिन्द्रायुधसमप्रभवम्  ९९
अन्योन्यवेधिनां वर्णा दृष्ट्वा दृष्ट्वा पुनः पुनः
लक्षयीत पुनस्तान्तु राजिकापरिवर्त्तुलाम्  १००
छायामध्ये तु लक्ष्यन्ते चित्रास्सर्वगता अशुभाः
सर्वदेवमयो देवि देवानाञ्च पृथक् पृथक्  १०१
तानि रूपाणि पश्यन्ते बिन्दुरूपाणि सुन्दरी
तयोर्योगी दिवारात्रौ नान्यं पश्यति चक्षुषा  १०२
मासेनाल्पपुरीषत्यं क्षुत्तृष्णापरिवर्जितः
सुगन्धास्य तनुर्दिव्या जायते तृप्तिरेव च  १०३
मासद्वयानुबन्धेन दिव्यचक्षुः प्रजायते
नश्यन्ति पुण्यपापानि तमः सूर्योदये यथा  १०४
सतताभ्यासयोगेन त्रिभिः मासैर्न संशयः
एकोनत्रिंशके तत्वे तुल्यमेतद्वरानने  १०५
नाडी वै सुकृता नाना मा महापातकनाशिनी
तस्य लक्षमिदं देवि शृणु एकमना मम  १०६
अप्रयोगमनायास मात्रा बिन्दुविनाकृतिः
कण्ठताल्वोष्ठरहितं मन्त्रोच्चारविवर्जितम्  १०७
सुनिष्णातो नरस्तस्मिन् अमृतत्वाय कल्पते
अप्रयोगमनारंभमनायासोपलक्षितम्  १०८
येन सर्वमिदं पूर्णमाकाशं सर्वगेन तु
तस्य यत्नात् शृणु देवि आकाशे मनसं दधेत्  १०९
यत्र तत्र स्थितो वाऽपि शुचिवाप्यथवाऽशुचिः
चित्तं श्रोत्र समाधाय बाह्यशब्दविवर्जितम्  ११०
निवाते स्वल्पवाते वा घण्टानामिव ताडिता
यवनिकाऽकर्णयेद्देवि पुण्यपापक्षयङ्करीम्  १११

कांसस्य सुविशुद्धस्य सुप्रभा रहितस्य च
सदृशं शब्द आकर्ण्य अमृतत्त्वाय कल्पते ११२
तेन सर्वमिदं पूर्णं आकाशं सर्वगेन तु
तस्याभ्यासेन सततं चिद्रा पश्यति मेदिनीम् ११३
मासार्धं येन योगीन्द्रो व्याधिनिभिश्च न पीड्यते
प्राप्नोति सुभगत्वञ्च देहपाते शिवं व्रजेत् ११४
आदितस्त्र्यक्षरो योऽसौ त्रिविधो यः प्रकीर्तितः
शिवस्य वै स विज्ञेयः सामान्यत्वात्प्रकाशकः ११५
द्वितीयः प्रणवो देवि हंसाकारसमन्वितः
बिन्दुना सहितेनैव रुद्राकारः प्रकीर्तितः ११६
अकामाद्याः प्रवर्तन्ते व्यापकत्वोपलक्षिताः
स्वच्छन्दवृत्तिः सूक्ष्मोऽयं निधानोङ्कार उच्यते ११७
हकारा उकारसंयुक्तमोंकारेण समन्वितः
बिन्दुना सहितो देवि तृतीयः परिकीर्तितम् ११८
आब्रह्मपथमोंकारस्स तु सूतिः प्रकीर्तितः
श्रीकण्ठादिमनन्तान्तं रुद्रोङ्कारस्स उच्यते ११९
तस्योपरिष्ठाद्विज्ञेयं तृतीयं प्रणवस्मृतम्
शान्तिविद्याधिका सिद्धिः निधने निधनान्तिका १२०
शब्दाकाशे व्यतीता तु गतिस्तस्यैरनुत्तमा
त्रिभिन्नमेतत्सकलमध्वानं परिकीर्तितम् १२१
सकलः पञ्चतत्त्वस्तु त्रयस्सकलनिष्कलः
उच्चारेण यदा हीनो बिन्दुं निष्कलतां गतः १२२
शिवेच्छयाऽनुगृह्णाति साधको मुक्तिमिच्छति
सौम्यनाडीति विख्याता महापातकनाशिनी १२३
किं स स्वरादतिक्रम्य घण्टाशब्दादिलक्षणः
यश्शब्दः श्रूयते देवि कद्रोंकारस्स उच्यते १२४

सर्वकर्मकरं दिव्यं अणिमादिफलप्रदम्
एकत्रिंशद्विजानीयात् शिवोङ्कारस्तु तत्परः १२५
द्वात्रिंशत् तत्समाख्यातं तन्मात्रगुणवर्जितम्
व्यापकेन समायुक्ता नाडी प्रोक्ता नरञ्जना १२६
शिवोङ्कारा परं दिव्यं ओङ्कारममलं विदुः
सतताऽभ्यासयोगेन साधकानां प्रयच्छति १२७
मासार्धदशभिश्चैव अणिमादिगुणाष्टकम्
दूरश्रवणविज्ञानं सर्वलोकेषु भावितम् १२८
पश्यते च महातेजः सर्वत्र समवस्थितम्
व्याप्तोऽति कामरूपित्वं सर्वज्ञत्वं तथैव हि १२९
देहपातो व्रजन्त्याशु शिवस्य परमं पदम्
घण्टानादविरामान्ते शिवोङ्कारं निगद्यते १३०
शिखा सा लक्षणेनोक्ता विमला परिकीर्तिता
कालतत्वः स एवोक्तो नाडीप्रोक्ता निरञ्जना १३१
विमलाख्या वरारोहे परमाक्षरसंयुता
निरालंबं प्रवक्ष्यामि नवतत्वफलप्रदम् १३२
पराक्षरपरोच्चार्यं बिन्दुतत्वमनुस्मरेत्
पश्चात्तु परमेतत्तु न किञ्चिदपि चिन्तयेत् १३३
त्रयस्त्रिंशत् स्मृतं तत्वं विमलन्तु वरानने
द्वात्रिंशकस्समाख्यातो निरालंबे परे स्थितः १३४
त्रयस्त्रिंशत् परो यस्तु निर्देश्यो नाम वर्जितः
तं ज्ञात्वा देवि सिद्ध्यन्ते लक्षैतत्परिकीर्तितम् १३५
एवं बहुविधं प्रोक्तं तत्वमेकं शिवेन तु
सिद्धिदं मोक्षदञ्चैव दिष्टन्तत्तु विचिन्तयेत् १३६
ज्ञात्वैवं ज्ञानसर्वस्वं विचरस्व यथा सुखम्
एतन्न कस्यचिद्देयं ज्ञानामृतमिदं शुभम् १३७

एतत्सर्वं समाख्यातं तत्वध्यानं सुनिर्मलम्
परं तावदिदं देवि तत्त्वानां परिकीर्तितम् १३८
एतेषां यदपरो निरूपाख्यो निरामयः
सर्वेषान्धारकस्सोहि स वै चाधारवर्जितः १३९
न च तस्येदृशं ध्यानं तव देवि प्रकीर्तितम्
इति निश्वासकारिकायां त्रयस्त्रिंशत्पटलः

देवि
आचार्यः शिवतन्त्रन्तु शिवज्ञानं शिवस्य च
वेत्तिसर्वमशेषेण लोकहेतुविवर्जितः १
विरक्तो लौकिके शास्त्रे शिवज्ञानैकरागवान्
तेषाञ्च उत्तरं वाच्यं येनोपायेन ईश्वरम् २
तदहं श्रोतुमिच्छामि त्वत्प्रसादान्महेश्वर
ईश्वर उवाच
यो ब्रूयात् कश्चित् कश्शब्दो विनाशित्वेन पश्यते ३
इतस्तस्य पुनर्ब्रूयात् तच्छृणुष्व वरानने
त्रिगुणः पुद्गलो वायुराकाशस्याथवा गुणः ४
वर्णादन्योऽथ नादन्ते बिन्दुरूपेशवाचकः
पदवाक्यात्मकस्फोटः प्रणम्य विनिवर्तते ५
पदानां संहिता पूर्वमित्याचार्यः प्रभाषते
वाक्यं पदाश्रयं सर्वं पदं वर्णाश्रयं स्मृतम् ६
वर्णावागाश्रयास्सर्वे वाक् च प्राणसमाश्रया
प्राणो हि भगवान् वायुराकाशाश्रय उच्यते ७
शब्दतन्मात्रमाश्रित्य संस्थितो भूतयोनिषु
भूतादिस्तु महा श्चैव स चैवापरमाश्रितः ८
अन्तर्यागादितो देवि ++ तस्मात्सदात्मकः

तस्मादपि परो देवः सर्वकारणकारणः ९
परतस्तस्य यो देव निस्संदिग्धः परश्शिवः
तदाधारमिदं सर्वं परोऽयं परमो मतः १०
न वाक् प्रवर्तते चैव न मनो याति तत्वतः
यत्राऽसौ परमो देवः सर्वकारणकारणः ११
आराध्यस्साध्यते येन स शब्दस्तु समासतः
शब्देन साध्यते देवो शब्दो नास्ति तु देवता १२
अव्यक्ताच्छब्दस्योत्पत्तिः शब्दस्तस्य प्रकाशकः
त्रिविधोऽथ विनिर्मुक्तस्सूक्ष्मश्शब्दस्स उच्यते १३
अनैष्ठिकेन शब्देन बुद्धिर्मनविवर्जिते
तेन दिव्येन शब्देन नित्यं दृश्यमनामयम् १४
शब्दमात्रन्तु यत्सूक्ष्मं देहे देहव्यवस्थितम्
सर्वशब्दविशिष्टोऽसौ अनौपम्यमनामयम् १५
सूक्ष्मात्सूक्ष्मतरो देवो दिवश्शिव इति स्मृतः
श्रुतिमात्ररसाद्येषां प्रधानपुरुषेश्वरान् १६
न शब्देनात्र गुह्यन्ते न करेण न चक्षुषा
विना शब्देन यश्शब्द हुतभुङ्गाषसन्निभः १७
हृदये सर्वदेहीनां वा विशुद्धः परश्शिवः
घोषोरावस्वनश्शब्दो स्फोटाख्यो ध्वनिरेव च १८
झङ्कारो हुङ्कृतिश्चैव शब्दमेवाष्टमंबरम्
श्रवणाङ्गुष्ठसंयोगाद्यश्शब्दस्संप्रजायते १९
दीप्तवह्निशिखातुल्ये घोष इत्यभिधीयते
घोष्यते तु यश्शब्दः ईषन्मन्दो विभाव्यते २०
भिन्नकांसरवो रूक्षो रवेति परिकीर्तितः
ततो वंशध्वनिस्सूक्ष्मो निवातवर्षोपमम् २१
सस्वनः परमस्सूक्ष्मो यत्तत्पदमनामयम्

चतुर्थन्तु महश्शब्दः सर्वशब्दमचारिणीम् २२
स्वशब्दस्साधयेत्सर्वं योगिनस्तु न संशयः
पञ्चमन्तु महश्शब्दं सर्वयोगिहितावहम् २३
मनोस्सादकरं नृणां स्फोट एवौषधस्मृतः
शब्दतत्वपरे लीनं शब्दान्तर्गतमानसः २४
परां सिद्धिमवाप्नोति स्फोटस्सर्वार्थसिद्धिदः
वंशध्वनिविनिर्मुक्तो यश्शब्दस्संप्रवर्तते २५
शाश्वतोऽनादिरव्यक्तस्सशब्दो ध्वनिलक्षणः
मृदुवीणास्वनश्शब्दः शान्तघण्टनिनादितः २६
कुसुमामोदमत्तानां षट्पदानामिव ध्वनिः
झङ्कारस्तु स्मृतः शब्दः समस्तपरमेश्वरी २७
विद्युत्पुञ्जमिवाभातं घनं गभीरनिस्वनम्
सकलाकलसंघातं वज्रपातसुभैरवम् २८
ध्वंकृतेषु स्मृतश्शब्दः शब्दान्तलयमालयम्
स शिवश्शिवतत्वस्थो ध्वंकृतः प्रणवस्मृतः २९
अष्टौ शब्दाः परा देवि समाख्याता समासतः
सेवितव्याः प्रयत्नेन यदिच्छेत् सिद्धिमात्मनः ३०
देवी
शब्दोऽर्थं बोधयेद्देव श्रोतुमिच्छामि तत्वतः
अनानात्त्वेन वर्तन्ते नानात्वेन महेश्वर ३१
ईश्वरः
शब्दार्थयोश्च संबन्धं कार्यकारणरूपकः
वाच्यवाचकरूपो वा ना संबन्धः प्रयुज्यते ३२
अन्यथा तु प्रयत्नोऽसौ सर्वस्यैव तु संशयः
स्वभावस्याविनाभावी नान्या नान्यतया मतः ३३
कार्यकारणभावश्च वस्तुनो यदि हेतुतः

अन्यार्थवाचकस्सो वै सर्वेषाञ्च तदा भवेत् ३४
अथ शब्दः प्रदीपः पूर्वशब्दस्ततश्च
विज्ञानमिवज्ञानं शब्दप्रकृष्टन्तुकन्तत् ३५
++ प्रतिपत्तौ शब्दो विज्ञानं जायते क्वचित्
शब्दस्तु पाशयेद्धर्मो शमकामार्थसाधकः ३६
पशुशब्दात्परं ज्ञानं पतिरूपं विधीयते
शब्देन साध्यते ह्यर्थो ह्यर्थ एव तु शब्दतः ३७
शब्दार्थविस्मृतं ज्ञानं अज्ञानन्तु निरर्थकम्
वाचा शब्दनिबन्धास्तु प्रभुः प्रभवतामिह ३८
अर्थग्रहणनिष्पत्तिः शब्दमाहुः स्वयंभुवः
यो यस्यार्थस्य निष्पत्तिः भूतग्रामे चतुर्विधे ३९
स एव शब्दो विज्ञेयः कार्यार्थो येन सिध्यति
यदर्थहीनं लोकेऽस्मिन् वचनं संप्रवर्तते ४०
अपशब्दस्तु तज्ज्ञेयं सर्वतः प्राकृतोऽपि वा
गमकाश्चैव शब्दास्तु ऋषिदैवतभाषिताः ४१
आगमाद्यपशब्दानि वर्णयन्ति विदुर्बुधाः
संस्कृतेनापि किं तेन मृदुना ललितेन च ४२
अविद्यारागवाक्येन संसारक्लेशहेतुना
यच्छ्रुत्वा जायते पुण्यं पापादीनां परिक्षयः ४३
विनष्टमपि तद्वाक्यं विज्ञेयमतिशोभनम्
पुत्रदारादिसंसारः पुंसां संमूढचेतसाम् ४४
विदुषां शास्त्रसंसारः सयोगाभ्यासविघ्नकृत्
देहे देहे यदा कत्वं विज्ञातत्वं चरेन्मुखात् ४५
तदा विमुच्यते जन्तुः अन्यथा न कदाचन
केचिद्वदन्ति पुरुषास्तदिदं सुमिथ्या ४६
देहे स्थितस्तु भगवान् परमात्मनेति

त्वं मांसकीटकफशोणितमूत्रमध्ये ४७
यद्दुर्लभं सुरमुनेऽपि कथं शरीरे
यद्दृश्यते गृहगृहेऽपि जगत्समस्ता-
नादिकाभिमुदितो जगदेकभानुः
एवं परेण परमास्थितसूक्ष्मशक्त्या
संग्रन्थितं जगति जन्तुषु मोहजालम् ४९
देव्युवाच
अष्टौ शब्दाः पराः सूक्ष्माः के तत्वा वर्णकाश्च ये ५०
देवता तत्र देवेश कथयस्व प्रसादतः
ईश्वरः
एतानि कथयिष्यामि सर्वतत्वेषु देवताः ५१
येन विज्ञातमात्रेण साधकस्सिद्धिमाप्नुयात्
न पाप्मनो वरारोहे ते वर्णास्ते च देवताः ५२
ते शब्दास्तानि तत्त्वानि बोद्धव्यानि वरानने
देवैस्तत्त्वैः समायुक्तो मे क्षरेण च सुन्दरि ५३
तदा सिद्धिमवाप्नोति देहपा देवि मुच्यते
शब्दे च देवतास्सर्वे ब्रह्माद्याश्च वरानने ५४
तस्मिन् लयङ्गता देवाः श्रीकण्ठाद्याश्च शोभने
देवाश्शब्दपरन्धाम शब्दात् वर्णा समुद्भवाः ५५
वर्णाद्यैः मन्त्रसंभूति तस्मात् सर्वं प्रवर्तते
शब्दात् सर्वमिदं जातं त्रैलोक्यं स चराचरम् ५६
तस्माच्छब्दपरं देवि सेवितव्यं हि ते विधिः
शब्दध्यानपरो भूत्वा योऽभ्यसेत्सुसमाहितः ५७
तस्य ते कथिता सिद्धिः अशब्देनैव सिद्धया
प्रथमं यत् स्पृशेच्छब्दं प्राकृतं सिद्धिदायकम् ५८
तृतीयं यत्परं शब्दं पौरुषं सिद्धिदायकम्

तृतीयं यत्परं शब्दं नियतं सिद्धिदायकम्  ५९
चतुर्थं  शब्दतत्त्वन्तु कलातत्वं समासतः
तेन ध्यानेन देवेशे सर्वेषां फलभाक् भवेत्  ६०
पञ्चमं यत्स्मृतं शब्दं माया दुर्धरा परा
षष्ठं यच्छब्दतत्त्वन्तु विद्या नाम्ना तु सा स्मृता  ६१
सा तु वागीश्वरी देवी तत्र जातो न जायते
सप्तमं यत्परं तत्वं ईश्वरं तं प्रवक्ष्यते  ६२
तत्र शब्दे यदालीनमीश्वरेण समो भवेत्
अष्टमं यत्परं शब्दमनौपम्यमनामयम्  ६३
तत्र लीनो यदा योगी सादाख्यपदवाचकम्
नवमं यत्परं देवि सर्वशब्दमयं स्मृतम्  ६४
तस्माच्छब्दाद्विनिष्क्रान्ता अधश्चोर्ध्वे च सुवृते
तेन ध्यानेन देवेशि सर्वेषां फलभाक् भवेत्  ६५
सर्वे शब्दस्थितास्तस्मिन् बिन्दुदेवे महेश्वरी
तेन ते कथितो बिन्दुश्शब्दराशिमयस्ततः  ६६
दश पश्चात्परं देवि शब्दज्ञानविवर्जितम्
विज्ञाप्तिमात्रं तत्रैव पारं पर्येण संस्थितम्  ६७
इति निश्वासकारिकायां चतुस्त्रिंशत्पटलः

देव्युवाच
शब्दात् सर्वमिदं जातं यत्त्वयोक्तं महेश्वरी
वर्णतत्वसमूहन्तु ज्ञातं मे त्वत्प्रसादतः  १
शब्दे शब्दे समुत्पत्तिः देवान्यानां महेश्वर
योगं ध्यानञ्च देवेश विद्येशानां तथैव च  २
अणिमाद्यष्टकानाञ्च कथयाद्य प्रसादतः
ईश्वरः

श‍ृणु देवि परं गुह्यं यत्त्वया परिपृच्छितम् ३
तदहं संप्रवक्ष्यामि साधकानां हितावहम्
न मया कस्यचित् ख्यातं इदं यो वरं महत् ४
ऋषिभिर्दैवतैर्देवि नैव पृष्टं कथञ्चन
शब्दमात्रेण ते तुष्टा नाहं पृष्टस्तु शोभने ५
शब्दे शब्दे यथा सृष्टिः योनियोगादिसंभवः
विद्येशानां प्रवक्ष्यामि अणिमात्तारमं भवोः ६
घोषशब्दस्तु यः प्रोक्तो वर्णोच्चारविवर्जितः
करणेन तु संप्राप्तिः तस्य सृष्टिं वदाम्यहम् ७
तस्मात्प्रकृतिरुत्पन्ना सा माया कथिता तव
वाचकस्तत्र मन्त्रोऽयं ऊकारः परिकीर्तितः ८
विद्येशप्रथमोऽनन्तः तस्मिस्तत्वे प्रकीर्तितः
योगिनामकृतञ्चैव पैशाचं योनिषु स्मृतम् ९
करणेन तु संप्राप्तं +++++
अणिमा तु तथैश्वर्यं तथा तुष्टिः प्रकीर्तिता १०
तारज्ञानं समाख्यातं शिशब्दः परमस्मृतः
प्रथमे शब्दतत्त्वे तु सृष्टिरेषा प्रकीर्तिता ११
रावश्शब्दस्समाख्यातं तत्त्वया विदितं पुरा
तस्मिन् पुरुषजातो हि तन्मया कथितं तव १२
वाचकस्तत्र मन्त्रोऽयं यकारः परिकीर्तितः
सूक्ष्मो विद्येश्वरः प्रोक्तो योगिनान्तु कृतस्मृतः १३
योनिनां राक्षसः प्रोक्तः ऐश्वर्यं लयमा स्मृता
सलिलसृष्टिरित्युक्ता सुता राज्ञा न कीर्तिता १४
द्वितीये शब्दतत्त्वे तु सृष्टिरेषा प्रकीर्तिता
तृतीये संप्रवक्ष्यामि श‍ृणुष्वैकमना मम १५
स्वनान्नियतिरुत्पन्ना मायापूर्वमुदाहृता

वाचकस्तु वरारोहे विद्येशानां शिवोत्तमः १६
योगिनां वैभवं प्रोक्तं यक्षाः योनिः प्रकीर्तिता
ऐश्वर्यं महिमा तेषां मोघा तुष्टिस्तथैव च १७
तारायां तत्स्मृतं ज्ञानं तृतीयं कथितं तव
चतुर्थं संप्रवक्ष्यामि तन्मे निगदतः शृणु १८
शब्दः पूर्वं मया ख्यातः पृच्छितस्ते शुभानने
तस्मात्कालः स्मुत्पन्नो दुर्जयः सर्वयोगिनाम् १९
लकारे वाचकस्तेऽस्य शब्दतत्त्वस्य कीर्तितः
विद्येश एकनेत्रस्तु तस्मिन्ंस्तु कथितस्तव २०
योगिनां ब्रह्मा इत्युक्तो योनौ गन्धर्व उच्यते
प्राप्तिरैश्वर्यदेवेशि चतुर्थे कथितं तव २१
तुष्टिवृष्टिः समाख्याता मयां चैव वरानने
प्रमोदो ज्ञानमाख्यातं चतुर्थे कथितं तव २२
पञ्चमं संप्रवक्ष्यामि शृणुष्वायतलोचने
स्फोटश्शब्दपरश्रेष्ठो मायातत्वस्य संभवः २३
स्वशब्दो मोहयत्येषां वादजल्पवितण्डकैः
परं भावमजानन्तो शब्दवादेन मोहिताः २४
मकारो वाचकस्तस्य शब्दतत्त्वस्य कीर्तितः
+++++++++++++ कथितं तव शोभने २५
विद्येश एकदृष्टिस्तु तव देवि उदाहृतः
योगिनां वैष्णवं तत्र पञ्चमं परिकीर्तितम् २६
ऐन्द्रं योनिस्समुद्दिष्टा ऐश्वर्यं शृणु सांप्रतम्
प्राकाम्य इति विख्यातः सुतरा तुष्टिरुच्यते २७
ज्ञानं प्रमुदितः प्रोक्तश्शिवेन परमात्मना
पञ्चमं ते समाख्यातमनुपूर्वं यथाक्रमम् २८
षष्ठं ते संप्रवक्ष्यामि कथ्यमानं मया शृणु

ध्वनिः पूर्वं मया ख्यातो यस्मिन् विद्यासमुद्भवः २९
क्षकारो वाचकस्तस्य शब्दतत्त्वस्य कीर्तितः
विद्येशानां त्रिमूर्तिस्तु कथितश्चानुपूर्वशः ३०
कौमारं योगिनां प्रोक्तं योनौ सौम्यं प्रकीर्तितम्
ईशित्वञ्च समाख्यातं गुणानां सुरसुन्दरि ३१
सुतारा तुष्टिरित्युक्ता मोदो ज्ञानं प्रकीर्तितम्
एतत्ते कथितं देवि षष्ठं शब्दमनुत्तमम् ३२
सप्तमं संप्रवक्ष्यामि शब्दं परमदुर्लभम्
झङ्कारेति समाख्यातः त्वस्मिन्नीशसमुद्भवः ३३
वाचकस्तस्य तत्त्वस्य रकारं मन्त्रमुत्तमम्
विद्येशात्तु श्रीकण्ठो योगिनामौमकीर्तितम् ३४
योन्याञ्चैव प्रजेशस्तु कथितस्तव शोभने
ऐश्वर्यञ्च पुनस्तस्मिन् शिवत्वं तत्प्रकीर्तितम् ३५
सुनेत्रात्तुष्टिराख्याता ज्ञानं रम्यकमुच्यते
एतत्ते तु समाख्यातं सप्तमं शब्दमुत्तमम् ३६
अष्टमं संप्रवक्ष्यामि तदेकाग्रमनाः शृणु
ध्वंकृतन्ते समाख्यातं यस्मात्तत्वं सदाशिवम् ३७
वाचकस्तस्य तत्त्वस्य हकारः परिकीर्तितः
विद्येशानां शिखण्डीशो योगी श्री कण्ठ उच्यते ३८
योनिब्रह्मा समुद्दिष्टो अष्टमः परिकीर्तितः
ऐश्वर्यं तत्र देवेशि सर्वकामावसायिता ३९
सुमारी तुष्टिरित्येवं तस्मिन् तत्वे न संशयः
ज्ञानं तत्र समाख्यातं सदा प्रमुदितं मया ४०
अष्टमं ते मया ख्यातं शब्दः परमकारणम्
ज्ञानेन मुच्यते जन्तुः अशेषपशुबन्धनात् ४१
नवमीया भवेत्तुष्टिः बिन्दुदेव उदाहृतः

बिन्दुश्चतुष्कलश्चैव शान्त्यतीतश्च सुव्रते ४२
शक्तिः चतुष्कलश्चैव नवधा तु यथा भवेत्
तथा ते कथयिष्यामि गुह्याद्गुह्यतरं महत् ४३
अष्टाष्टौ ये मया प्रोक्ता भेदास्तु तव सुवृते
तेषान्तु यजनं वक्ष्ये यथावत्तन्निबोध मे ४४
पूर्वोक्तभूप्रदेशे तु केशंकीटास्थिवर्जिते
तत्र पद्मं समालिख्य अष्टपत्रं स कर्णिकम् ४५
कर्णिकायां यजेद्देवं शिवं परमकारणम्
अनन्तः पूर्वमेवोक्तः पद्मशक्तिं तथा पुरा ४६
धर्माद्यान् वात्रकांश्चैव विन्यसेत्तु यथाक्रमम्
हृत्पद्मे तु यथा प्रोक्तं न्यासं मन्त्रञ्च तादृशम् ४७
प्रकृतिं पूर्वपत्रे तु आग्ने येनं तमेव च
अकृतं दक्षिणे चैव पैशाचं नैर्ऋतेन तु ४८
अणिमां पश्चिमेनैव वायव्यामंभसि न्यसेत्
उत्तरेण तु विन्यस्य ताराज्ञानं समाहितः ४९
बिन्दुदेवं महादेवि ईशान्यां परिकल्पयेत्
मध्ये घोषन्तु विन्यस्य इदं कुर्यात्ततः पुनः ५०
ह्रस्वदीर्घप्लुतेनैव उकारेण तु शोभने
त्रितत्त्वं कारयेत्तत्र घोषमार्गं यथाक्रमम् ५१
ह्रस्वञ्चैवात्मतत्त्वन्तु दीर्घं विद्या प्रकीर्तितम्
प्लुतेन तु सदा कुर्यात् शिवतत्त्वन्तु सर्वतः ५२
एवं त्रितत्त्वविन्यासं स्वशब्दे अक्षरत्रये
कर्तव्यं देवदेवेशि सर्वेषामनुपूर्वशः ५३
ईकारादिसमारभ्य आकारान्ते च ये स्थिताः
ये वर्णा देवता प्रोक्ताः पूर्वादारभ्य सुन्दरि ५४
सर्वेषां वाचकस्ते वै यावत्सर्वं समाप्यते

सकलं भौमकर्मेषु सर्वेषां परिकल्पयेत्  ५५
पञ्चाशच्चैवमप्युक्तां पूर्वादारभ्य होमयेत्
शब्दे शतन्तु होतव्यं त्रितत्वे त्रिशतं हुनेत्  ५६
पूर्णाहुतिस्तु दातव्या घोषमाकर्ण्य सुवृते
ध्यायेच्छब्दमयं देवं सिद्धिमोक्षार्थकाङ्क्षितः  ५७
पञ्च ब्रह्मैर्विना देवि शिवाङ्गैश्च तथैव च
लोकपालैश्च विद्येशैः अस्त्रेणैव तु सुवृते  ५८
द्विविधेन तु यष्टव्यं योगमेतत्समासतः
सद्द्रव्ये द्रव्ययागन्तु निर्धने ध्यानमेव च  ५९
मोचयेद्विविधेनापि आचार्य च्छिन्नसंशयः
द्वितीये निष्कलं तत्त्वं रावश्शब्दः प्रकीर्तितः  ६०
तृतीये शून्यतत्त्वन्तु स्वनश्शब्दः प्रकीर्तितः
एवमादिक्रमेणैव शब्दे तत्वं यथाक्रमम्  ६१
न कुर्यादन्यथा देवि अस्तिनास्तीति कल्पना
आज्ञासिद्धि च देवेशि न किञ्चिदपि चिन्तयेत्  ६२
नयसूत्रे यथाप्रोक्ता रेखासिद्धिः शिवेन तु
प्रतिमासप्रयोगेन शब्दसिद्धिर्न संशयः  ६३
नाऽनेन सदृशो योगः सर्वतन्त्रेषु सुवृते
नानेन सदृशी सिद्धिः त्रिषु लोकेषु विद्यते  ६४
प्रत्ययो न परो देवि एभिस्तु सदृशो भवेत्
ज्ञातव्यं परमं किञ्चित् शब्दज्ञानं परं भवेत्  ६५
अविकल्पञ्चतुर्थञ्च प्रत्यक्षं सर्वतः स्थितम्
बिन्दुः कला चतुष्कोणकलाशक्तिचतुष्टयम्  ६६
एतद्यागपरं प्रोक्तं नादं कर्णिकया न्यसेत्
उत्क्षणी उकारस्तु शक्तिस्तु प्रथमा कला  ६७
एकारस्तु द्वितीया वै सूक्ष्मा संपरिकीर्तिता

अमृता तु तृतीया वै इकारः परिकीर्तितः ६८
अमृता मृता चतुर्थन्तु ईकारः कथितस्तव
बिन्दुदेवकला या तु मया पूर्वमुदाहृता ६९
नादस्यापि मयाप्युक्तं बिन्दुयागे वरानने
प्रथमं बिन्दुदेवस्य कलां पूर्वेण विन्यसेत् ७०
द्वितीयं दक्षिणेनैव तृतीयं पश्चिमेन तु
चतुर्थो उत्तरे चैव कला बिन्दोः प्रकीर्तिता ७१
उत्कर्षणी तु आग्नेय्यां सुसूक्ष्मान्नैर्ऋतेन तु
अमृता नाम कला या तु वायव्येन तु विन्यसेत् ७२
अमृता मृता तु ईशान्ये न्यसेच्छक्तिचतुष्टयम्
नादशाक्तसमायुक्तं कर्णिकायान्तु विन्यसेत् ७३
सोच्चामात्मतत्त्वन्तु कथितं तव सुवृते
ब्रह्मविष्णुस्तथा रुद्रः त्रयो वै वर्णतस्थिताः ७४
ईश्वरो नादशक्तिश्च ऊर्ध्वभागे व्यवस्थितः
तत्त्वेन विततास्सर्वे सर्वे तत्वा न संशयः ७५
द्विविधेन भवेद्दीक्षा ध्यानद्रव्ये न शोभने
शतं शतञ्च होमेन दीक्षानिर्वाणगामिनी ७६
पृथिव्यादीनि तत्वानि कथितानि मया पुरा
आनुपूर्वेण बोद्धव्यं शक्तिनादे स बिन्दुके ७७
एष यागवरो देवि दुर्लभो ह्यकृतात्मनाम्
देवा अरायस्य यागस्य ईहन्ते सुरसुन्दरि ७८
ना प्रसन्ने मयि देवि प्राप्यते विधिरीदृशी
ना शिष्याय प्रदातव्यं नाभक्ताय कदाचन ७९
गुरुप्रियाय दान्ताय अभिषिक्ता यदा भवेत्
सर्वाध्वानविधिज्ञस्य दातव्या विधिरीदृशी ८०
कुलशीलगुणोपेते शिष्याय प्रियवादिने

अन्यथा तु न दातव्यं आज्ञैषा पारमेश्वरी ८१
इति निश्वासकारिकायां पञ्चत्रिंशत् पटलः

देव्युवाच
चक्षुषा वाचया स्पर्शा मनसा उदकेन वा
धारणा ध्यानयोगेन करोत्यनुग्रहेच्छया १
एतद्देव महद्गुह्यं कथितन्तु त्वया विभो
एतेषां तु अविभागोऽयं यत्त्वया हृदि गोपितम् २
तदहं श्रोतुमिच्छामि भगवन् वक्तुमर्हसि
ईश्वरः
एतेषां कथयिष्यामि एकैकस्य विभागशः ३
ज्ञातव्यं देशिकेनैव दीक्षाकाले समासतः
पद्मानि च यथा लोके आदित्यः संप्रबोधयेत् ४
एवं संस्कार्य पद्मानि प्रसन्नो बोधयेच्छिवः
दूरस्थोऽपि समीपस्थः पिण्डस्थः पिण्डवर्जितः ५
मलिनो निर्मलश्चैव तिष्ठत्येको ह्यनेकशः
सूक्ष्मात्सूक्ष्मतरो नित्यं दूराद्दूरतरो विभुः ६
सन्निकृष्टे तमो देहो व्यापी न प्रभुरव्ययः
तत्त्वानि देवताश्चैव विभागेन यथा स्थिताः ७
ऐश्वर्यं ज्ञानतुष्टिञ्च धर्मान्या दैवतैस्सह
तेषां स्थानविभागञ्च स्वशरीरे यथाक्रमम् ८
ज्ञात्वा सर्वं विशेषेण सर्वपाशक्षयो भवेत्
देहपद्मं प्रवक्ष्यामि व्योमपद्मं विशेषतः ९
वासवाष्टदलोपेतं रुद्रैकादश केसरम्
आदित्याः कर्णिका ज्ञेयाः पुष्करे द्वादश स्मृताः १०
भव हे भावना यस्य सर्वदेवमये पुरे

तस्याहं भावितो देवि शेषा ये भ्रामिता जनाः ११
कदलीपुष्पसंकाशं हृदयं सर्वदेहिनाम्
तस्य मध्ये स्थितं पद्ममष्टपत्रं सकर्णिकम् १२
वितस्तिमात्रहृदयं कमलं चतुरङ्गुलम्
अष्टाङ्गुलप्रमाणन्तु नाभेरूर्ध्वं व्यवस्थितम् १३
पद्मनालं नवद्वारं समन्तात्कामनान्वितम्
अङ्गुष्ठपर्वतुल्यन्तु कर्णिका वै स केसरा १४
कर्णिकायां भवेत्सूर्यः तस्य मध्ये तु चन्द्रमाः
चन्द्रमध्ये भवेद्वह्निः वह्निमध्ये महेश्वरः १५
सदाशिवो महेशस्य तस्यापि परतश्शिवः
सर्वेषां संप्रवक्ष्यामि प्रमाणं शिवनिर्मितम् १६
किञ्चिदूनतरं सूर्यं कुर्यात्सोमं तथैव च
सोमादूनं विजानीयात् वह्निमण्डलमुत्तमम् १७
विधूमनिर्मलं दिव्यमादित्योदसन्निभम्
भूता सुमात्रमीशानं ज्वलत्कटकसन्निभम् १८
दशार्धास्य परं दिव्यं शुद्धस्फटिकनिर्मलम्
सदाशिवं महात्मानं तस्याप्यूर्ध्वं परापरम् १९
सितं सुनिर्मलं दिव्यमग्राह्यं परमं शिवम्
देहनालं समाख्यातं ब्रह्मपत्रमयं विदुः २०
कर्णिकायां स्थितो विष्णुः ग्रन्थिर्माया प्रकीर्तिता
अव्यक्तदक्षिणे पत्रे बुद्धिश्चैव तु नैरृते २१
पश्चिमेन अहङ्कारं शब्दतन्मात्रं वायवे
उत्तरे तन्मात्रमीशान्यां रसनं तथा २२
रूपग्राही तु पूर्वेण घ्राणमग्निदले स्थितम्
पत्रान्तेषु महाभूताः केसराणि तु इन्द्रियाः २३
तन्मात्र इन्द्रियाणाञ्च मनस्सर्वत्र तिष्ठति

योऽसौ हृद्युपरोधी तु तामसो निद्ररूपिणः २४
अधस्तात् कर्णिकाया तु तस्य देहो प्रतिष्ठितः
अन्ते तु कर्णिका चेता भावैश्च सह संयुताः २५
स शिवः सर्वदेहेषु कर्णिकोपरि संस्थितः
पद्मनाले स्थिता देवाः कराटकेष्वधस्थिताः २६
गणाश्च विविधाः पत्रे दैत्याश्चैवाऽथ रोमसु
ग्रहनक्षत्रताराश्च यक्षराक्षसपन्नगाः २७
भगिन्यो मातरश्चैव नालमूले व्यवस्थिताः
सर्वदेवमयं पद्मं योभित्वा ज्ञानसूचिभिः २८
पश्यते विमलात्मानं प्रत्यक्षं देहमध्यतः
जाग्रतश्चास्य सर्वस्य आचार्यः प्रभुरुच्यते २९
तेन तुष्टेन तुष्टास्तु अशेषभुवनाधिपाः
दीक्षकस्तु गुरुश्रेष्ठश्शिवतत्वस्य पारगः ३०
अन्यथा न गुरुर्ज्ञेयः न च दीक्षा न मुक्तिदा
मन्त्रमूर्तिस्मृता चार्यो मन्त्रमूर्तिपरश्शिवः ३१
मन्त्रास्तदात्मको ज्ञेयाः शिवो ज्ञेयस्तदात्मकः
तस्मात्सर्वेषु भूतेषु अनुग्रहं संप्रवर्तते ३२
इच्छा भगवतश्चैषा तान्यथा तु विचिन्तयेत्
शिवो देशिकदेहस्थः प्राण्यनुग्राहकारकः ३३
ददाति विविधां सिद्धिं मोक्षञ्च नयते पशुम्
यतच्छान्तं परं तत्त्वं कारणं कारणाधिपम् ३४
शिवविद्यात्मतत्त्वानि तत्स्थो भूत्वा प्रकाशयेत्
अणिमादिगुणां सिद्धिं शिवं परमकारणम् ३५
प्रकाशयति तत्रस्थो यथा भूतं यथा स्थितम्
देव्युवाच
त्रितत्त्वस्य तु यद्भूतं अक्षराद्विदितं यथा ३६

कथं लोके ह्यविज्ञानं सर्वसत्वे तथा वद
यो यथाऽवस्थितो ह्यर्थो गुणदोषस्वभावतः ३७
यावत्फलञ्च पुण्यञ्च तत्सर्वं विदितं प्रभो
कथं लोके ह्यविज्ञातं सर्वज्ञत्वे तथा वद ३८
ईश्वरः
मध्यस्थन्तु यदा ज्ञानं तत्त्वज्ञानं सुनिर्मलम्
सर्वज्ञत्वम् तदा तस्य सर्वोपायो विभावितम् ३९
क्रोधाभिधानमात्सर्यकाममोहार्थलुब्धता
पैशुन्यमनृतद्रौप्यं वयोऽतीतेष्वपि नृषु ४०
दम्भक्रौर्यास्थिरत्वञ्च साध्यं कुटिलचिन्तिता
एभिरेवावृतो लोकस्तेन देवं न विन्दति ४१
एतत्पदविधिं कृत्वा आचार्यस्सुसमाश्रितः
दीक्षयेत्सर्वजन्तूनि ध्यानेनानेन सुवृते ४२
एतद्ध्यानविधिः ख्यातो मानसं प्रोच्यतेऽधुना
एकेन्द्रिये तु ते सर्वे विधिमेतन्नियोजयेत् ४३
एकेन्द्रियप्रमाणेन प्रवृत्तास्सर्वचेन्द्रियः
एकेन सर्वभूतास्तु तत्वाश्चैव वरानने ४४
प्रवृत्तिस्सर्वकार्येषु अनादिश्च न संशयः
मनसा गृह्यते देवि युज्यते मनसा पशुः ४५
एकेन्द्रियप्रमाणैस्तु मनस्सर्वेषु सुन्दरि
मनसा गृह्यते यस्मात् तस्मादेवान्मनात्मकः ४६
तत्स्थानं मनसा सर्वं तन्मनो बुद्धिसंयुतम्
सर्वैः करणयोगैश्च उपलब्धुं महेश्वरे ४७
आत्मविद्याशिवञ्चैव सृष्टिसंहारकल्पना
एवं तत्वानि विन्यस्य शिवाद्युपरि विन्यसेत् ४८
एवन्तु मनसा ध्यात्वा कर्तव्यानुगृहेच्छया

मानसं विधिमेकन्तु कथितन्तु समासतः
इति निश्वासकारिकायां ज्ञानकाण्डे
संस्कारोपन्यासमानसानुग्रहविधिः षट्त्रिंशत् पटलः

ईश्वर उवाच
सृजते ईश्वरो भूत्वा संहरेच्च सदाशिवः
शिवन्तु स्थितिकर्तृत्वे शान्तेति परमं पदम् १
आत्मतत्वं भवेच्छ्रष्टा पद्मपत्रं स उच्यते
विद्या वै केसरं तस्य संहारं कर्णिका ह्यधः २
कर्णिकायां शिवं तत्त्वं स्थितितत्वप्रकर्तृकः
एतत्त्रितत्वतत्त्वादिं कैलासकमलं विदुः ३
ओष्ठौ पद्मस्य पत्राणि दन्ताः केसरसंज्ञिताः
जिह्वा वै कर्णिका प्रोक्ता शरीरन्नालमुच्यते ४
मुखमध्ये यदाकाशं तत्र देवो जगद्गुरुः
स गिका तालुमध्ये तु जिह्वा कैलासपिण्डका ५
स्वयमाचरते यस्मादाचारं दर्शयेति च
उच्चिनोति च शास्त्राणि आचार्यस्तेन पठ्यते ६
अशब्ददेहोऽपि स शब्दकारी कृतस्य कर्मस्य च अन्तकारी
त्रैलोक्य मायापुरसूत्रधारी यस्तन्तु पश्येत्स तु सर्वकारी ७
एवं कृत्वा तु देवेशे देवानां निवेशनम्
मुखमन्त्ये पि ++ न्त्येन करोत्यनुग्रहेच्छया ८
वाचयानुग्रहेद्देवि कथितन्तु वरानने
इति वाचानुग्रहः ++++++ ९
देव्युवाच
सूत्रन्नाम महादेव आलोकपदवाचकम्
तदहं श्रोतुमिच्छामि भगवन् वक्तुमर्हसि १०

ईश्वरः
सूचनात्सूत्रमित्याहुः सूत्रन्नाम महत्पदम्
तेन सर्वमिदं प्रोक्तं सूत्रे गणिगणा इव ११
अखण्डतन्तु विज्ञेयं खं व्यापी अजरं पदम्
तदिद्वत्फयसंकाशं घटिकायां प्रकाशयेत् १२
हृत्पौण्डरीकमध्यस्थं सोमसूर्याग्निमध्यशम्
यः पश्येत्परमं सूक्ष्मं सुलेख्यं कर्तुमर्हसि १३
देव्युवाच
तत्त्वादेव गणाश्च सर्वे न्यासे व्यवस्थिताः
तेषां मन्त्रविवाहोऽयं कथयस्व प्रसादतः १४
ईश्वर उवाच
सर्वे मन्त्रात्मका देवाः सर्वे मन्त्राः शिवात्मकाः
शिवात्मकेन मन्त्रेण शिवयागे तु पूजयेत् १५
अप्राप्य शिवसद्भावः पठन्तोऽपि हि संहिताम्
अज्ञात्वा कुरुते दीक्षां शिष्याचार्यौ व्रजत्यधः १६
तस्मान्न समानवसोः शिष्यत्वेनोपतिष्ठति
नचाभ्युभयोः पत्यनुग्रहोऽयं प्रवर्तते १७
विभुरेकः परः पश्येच्छिष्याचार्यौ प्रवर्तते
अविदित्वा स्वयं सम्यक् क्रियां यः कुरुते भिषक् १८
आतुरो दुःखमाप्नोति वैद्योऽपि न फलं भवेत्
ज्ञानविज्ञानकुशलः सर्वावस्थां गतोऽपि यः १९
स मोचयति पापेभ्यो ज्ञाननिर्धूतकिल्बिषः
सर्वलक्षणहीनोऽपि ज्ञानवान् गुरुरुच्यते २०
दीक्षावित्तु विधानज्ञः पाशजालप्रदाहकः
शिवभक्तो महाभक्तिः भक्तिभावेन देशिकः २१
उभयोरन्तरं नास्ति देशिकस्य शिवस्य च

स चैवाङ्कारबिन्दुश्च स नादो लयनिष्कलः २२
तस्मिन् सर्वाणि विद्यन्ते स चैव च परश्शिवः
सर्वविद्यासुसंपूर्णः सर्वविद्यार्थकोविदुः २३
आचार्यस्य च मन्त्रस्य शिवज्ञानशिवस्य च
नानात्वं नैव कुर्वन्ति अनन्तेशादयः शिवाः २४
इति निश्वासकारिकायां ज्ञानकाण्डे
वाचानुग्रहवक्त्रपद्मप्रकरणे सप्तत्रिंशत् पटलः

देव्युवाच
अनन्तमासनं देव श्रोतुमिच्छामि तत्त्वतः
कीदृशन्तु भवेदन्तः आसनञ्च महेश्वरः १
ईश्वरः
++++ तमादितः कृत्वा यो ++++ ते
भावार्णवविनिर्मुक्ताः शिवं यान्ति तनुक्षये २
आसनं आश्रयन्नाम तत्वानां गगनस्य च
इच्छाशक्तिसमुद्भूतं अनन्ताख्यं तदासनम् ३
मया चादि धरित्र्यन्तं तत्र ज्ञातमशेषतः
व्या +++++++++ शिवस्य परमात्मनः ४
मायाकर्ममपङ्काढ्यं संवत्सरमहोदधौ
सदाशिवशिवाधारं नित्याधारेति संज्ञितम् ५
मायया स च द्वात्रिंशज्जले तत्त्वा व्यवस्थिताः
त्रयस्त्रिंशतिमाविद्या ++++++++ ६
चतुस्त्रिंशतिमस्त्वीश अष्टधा दलसंस्थितम्
अनादिमूलपङ्काढ्यं ज्ञानतोयसमुद्भवम् ७
प्रक्रियानालविन्यासं भुवनाः कण्टके स्थिताः
दश कोट्यस्तु मन्त्राणां शिवपद्मे व्यवस्थिताः ८

महासारो हि मन्त्राणां सर्वदेवाश्रयः परः
एतदध्वनपद्मन्तु शिवाख्ये सर्वमाश्रितम् ९
आसनात्परतो नास्ति अध्वानन्तु वरानने
पुरुषाणामनन्तत्त्वात् तत्वादीनामनन्तता १०
प्रकृतीनामनन्तत्वाच्छक्तीनाञ्चाप्यनन्तता
पशूनां भुवनानाञ्च परिसंख्या न विद्यते ११
तदनुग्रहशक्तीनां मन्त्राणाञ्चाप्यनन्तता
अनादिरेष संसारो यस्यान्तो न हि विद्यते १२
धारकत्वादनन्तत्वात् अनन्तस्तेन उच्यते
न पद्मस्य प्रमाणोऽस्ति अनन्तत्वाच्छिवस्य तु १३
अनन्तो अन्तहीनत्वात् अनन्तं तेन सोच्यते
अनन्तः ख्याप्यते तेन अनन्तेनत्वधिष्ठितः १४
अनन्तस्तु शिवो ज्ञेयो अप्रमेयस्त्वनौपमः
अप्रमेयं पशुज्ञानैः स्वतन्त्रे गीयते कलैः १५
तदनन्तमनन्तन्तु योगपीठमहात्मने
कर्तृत्वमीश्वरत्वञ्च नित्यतृप्तः प्रशान्तता १६
शक्तेरव्याहतत्त्वाच्च धर्मोऽयं शाङ्करस्मृतः
सकृत् सर्वत्र सद्ज्ञानं सर्वज्ञत्वञ्च सर्वदा १७
सर्वज्ञानाश्रयत्वाच्च ज्ञानमेतत्परं प्रभोः
विरक्तः प्राकृतैर्भावैः निस्पृहत्वञ्च सर्वदा १८
नौष्ठिकब्रह्मचर्यञ्च वैराग्यं तत्परं प्रभोः
अणिमादिगुणैस्सर्वैः या भूत्यस्त्वभिघातिनी १९
नास्वादिता जगत्यन्यैः तदैश्वर्यं परे शिवे
न तद्भुवनमध्वानं न रूपं न च वाङ्मयम् २०
न शब्दं नापि चाकाशं विमलं सर्वतः स्थितम्
विरजन्निर्मलं व्योमं समन्तादनिवारितम् २१

निर्गुणं वाङ्मनातीतं ग्रहनक्षत्रवर्जितम्
तप्तचामीकराकारं क्वचित्प्रालेयसन्निभम् २२
क्वचिदिन्द्रायुधप्रख्यं क्वचित्तारकसमप्रभम्
चन्द्रचन्द्रकसंकाशं क्वचिन्मरतकप्रभम् २३
विमलं दोषरहितं तेजस्तेजो महद्युतिः
व्यापकं अप्रमेयञ्च पद्मं सार्वं महोज्वलम् २४
व्योमनालं दिशापत्रं व्योमकराटककेसरम्
व्यापिनीभिरनन्ताभिः व्रतं अमृतशक्तिभिः २५
वितीर्णमव्यवच्छिन्नं सूर्यकोटिसमप्रभम्
विश्वस्वच्छं महातेजः स्वरूपानन्तवर्चसम् २६
अद्भुताश्शक्तयः सूक्ष्माः शान्ताशान्ता अनौपमाः
प्रदिष्टास्तु गुणोपेताः शिवस्यानन्तशक्तयः २७
एताभिः शक्तिभिरसौ भाति नित्यं विभूषितम्
शोभते निर्मलं तन्तु निर्मलाभिलङ्कृतम् २८
स तु तत्प्रभाकमलं दिव्यमद्भुतदर्शनम्
अत्यन्तविमलं शान्तभास्वरं कमलच्छदम् २९
तटित् सहस्रसङ्घातं किरणानेकसङ्कुलम्
विशुद्धचन्द्रिकाकारं स्फुरन्निकच केसरम् ३०
स्फुरत्किरणसङ्घातं शबलीकृतमुन्मुखम्
बहुवर्णमवर्णञ्च प्रचलञ्चारुकेसरम् ३१
सूर्यां शुकरविष्टब्धं वैतग्रसदृशद्युतिम्
अनेककिरणप्रख्यं विद्युत्कोटिसमप्रभम् ३२
तप्तचामीकराकारं क्वचित्प्रलयसन्निभम्
क्वचिदिन्द्रायुधप्रख्यं क्वचित्तारसमप्रभम् ३३
स्फटिकोपलसङ्काशं पद्मरागसमद्युतिम्
क्वचिद्रशिसुसङ्घातं वितानितनभस्थलम् ३४

क्वचित्प्रल्यसाटोपं युगान्तकिरणत्विषम्
क्वचिच्च वर्णसङ्घातं विनिर्मुक्तवपूंषि च ३५
स्वशक्तिविभवद्योतं व्यापयन्तं समन्ततः
जलबुद्बुदसङ्काशं शरदिन्दुसमप्रभम् ३६
प्रोटंफुल्लकिरणामोदं विद्येशमधुपाकुलम्
सुषुम्नानालसन्तानं कालानलशिवान्तकम् ३७
तटिद्वलयसङ्काशं परिवृत्य समन्ततः
सहस्त्ररश्मिसङ्घातं दुर्विरीक्ष्यं समन्ततः ३८
असमानक्रियाज्ञानप्रभाव +++ द्ध्रुवम्
स्वतो भावितधर्मान्तं तदिच्छाद्यवतिरवते ३९
इच्छाशक्तिपरो धर्म शिवस्य परमात्मनः
तेन युक्तस्सुधर्मात्मा धर्मिसद्भिर्निगद्यते ४०
द्ध्रुवे धर्मिणे धर्मोऽसौ सत्कारणमिहोच्यते
नाभावे धर्मिणा धर्मः प्रसिद्धिमुपगच्छति ४१
इच्छा च प्रेरणी चैका कालनी कलिनी तथा
अभावभाविनी ज्ञानी क्रियाशक्तिः प्रकीर्तिता ४२
मोहनी रञ्जिनी बोधा प्रभावा विभुनी रसौ
दमनी धामनी बोधा मननी उन्मनी शिवा ४३
धात्री च जननी क्रोधा चालिनी ह्यपरिग्रहा
विरजा विजया सौम्या मायाऽविद्या च रागिणी ४४
अलुप्ता च प्रतीघाता अजरा अपराजिता
अग्रजा च विलोमा च कला नापि विनिर्मिणी ४५
बलदा बलदायी च दमनी धर्मदापि च
स्वरूपा वर्णरूपा च पाशजालावकुण्ठनी ४६
पाशिनी मोहिनी त्राणि निग्रहानुग्रहेति च
मही च हर्षिणी भावा सौम्या वै सौम्यधर्मिणी ४७

भावा स्वभाविनी याति तीव्रा शान्ता च सिद्धिदा
अप्रमेया प्रमेया च प्रमाणा च विकल्पिनी ४८
व्यापिनी सर्वगोप्ता च भया च भयहारिणी
सृष्टिसंहारिणी चेता तृप्तिर्निद्रा प्रभा क्षुधा ४९
दहनी श्रुतिर्मतिः प्रज्ञा भाविनी च विभाविनी
भाव्यनी च व सौम्या च ध्रुवा च ध्रुवहारिणी ५०
अनन्ता चामृता चैव ईश्वरी अव्यया तथा
रतिः प्रीतिश्च विज्ञेया विषादजननीति च ५१
स्थितिरुत्सादिनी चैव प्राणिनाञ्च विनिर्मिणी
आवेशिनी निरोधी च प्राणिनां कल्पिनी तथा ५२
अमृताऽनन्तशक्तिश्च पराशक्तिस्तथैव च
इत्येताः शक्तयस्सर्वाः केसरे नित्यसंस्थिताः ५३
शुद्धगोरोचनाभास्तु ज्ञेया शक्तिगणास्तु वै
कर्णिकापीठपर्यन्ता भासयन्ति दिशो दश ५४
कन्दं पटोलकाकारं शक्तिभिः परिवारितम्
कर्णिकास्थं प्रभुर्नित्यं शक्तिभिः परिवारितम् ५५
आदित्यस्य यथा रश्मिः अविभक्ता व्यवस्थिताः
एवं शक्तिगणास्सर्वे रश्मयः परिकीर्तिताः ५६
शक्त्या तु चेष्टते नित्यं हृत्पद्मे परमेश्वरी
तत्तेजो निर्वृतास्सर्वाः शक्तयः परिकीर्तिताः ५७
एवं शक्त्यात्मकं ज्ञात्वा तदा मुच्यति मोचति
यथेन्द्द्रवद्दलं दीप्तं व्यापयन्ति चराचरम् ५८
तच्चाचलमनिर्देश्यमनन्तमजकर्णिकम्
अनादिमध्यनिधनमेकं अप्रतिपत्तिमम् ५९
निष्प्रपञ्चं निरध्वानं अतीन्द्रियमनामयम्
निष्कलं विमलं वृत्तमुत्तुङ्गव्यापिनं परम् ६०

हेमार्कसंप्रतीकाशं सर्वतत्वप्रकाशकम्
प्रकाशवृत्तिस्तज्ज्ञेयं विमलं व्ह्योमकर्णिकम् ६१
एवं व्याप्य परन्देवमनन्तादिशिवान्तकम् ६२
इति निश्वासकारिकायां ज्ञानकाण्डे अनन्तशक्तिप्रकरणे
अष्टत्रिंशत्पटलः

देव्युवाच
ईदृशे आसने शुभे शक्तिभिः परिवारिते
मूर्तिं कथय देवेश आसने आसनाधिपम् १
ईश्वरः
मूर्तिः पूर्वं मया ख्यातं ब्रह्माद्यानां पुरा धियाम्
ऋषयश्च तथाऽन्ये च दुर्व्वासाद्यास्तथा परे २
आत्मा मूर्तिस्तु विज्ञेयो निष्क्रियो अस्वतन्त्रकः
तस्य मन्त्रे समायोगः क्रियते सुरसुन्दरि ३
पञ्चधा तूच्यते मन्त्रो येनाऽसौ सकलो भवेत्
मन्त्रैर्युक्तः स मन्त्रात्मा वर्णैर्युक्तस्सदात्मकः ४
कलाभिस्तु यदा युक्तः तदा प्रोक्तः कलात्मकः
पदभेदात्मकश्चैव तत्त्वभेदात्मकस्तथा ५
पशुः पूर्वं मया ख्यातः सा मूर्तिः परिकीर्तिता
करणं सदात्मकं यस्मात् तस्मात्प्रोक्तः सदाशिवः ६
सदा नित्यो ह्यचिन्त्यश्च तेन प्रोक्तस्सदाशिवः
सततं तत्पदं शान्तं तत्प्राप्य तत्पदानुगम् ७
आसंपूर्णं शिवं शान्तं गुरुं त्रिदश वन्दितम्
अशेषभुवनाधारं व्योमपीठान्तसंस्थितम् ८
शक्तिकेसरमध्यस्थं शक्त्यालङ्कारभूषितम्
सर्वशक्तिसुसंपूर्णं सर्वशक्तिप्रदीपकम् ९

नैशन्तमो यथा सूर्यः स्वप्रभालोक्यरश्मिभिः
निहत्य तिष्ठते व्योम्नि तथा मूर्तिः परे शिवे १०
कृत्स्नमाभासते भाभिः भाभिर्भिन्नमिवोदितम्
निश्चलं प्रज्वलं भाति नित्यानित्यं निरञ्जनम् ११
प्रशान्तं विमलं शुद्धं व्यापी अत्यन्तनिर्मलम्
सूर्यकोटिद्युतिहरं सकृद्योदितसुप्रभम् १२
नास्य प्रमाणं व्यापित्वात् मूर्तिः समुपदिश्यते
अनादित्वादसंभावो नित्यत्वान्निधनं न च १३
निर्गुणस्सर्ववित्कर्ता स्वतन्त्रः सर्वतो मुखः
परिपूर्णोऽव्ययश्शान्तः सूक्ष्मोऽजः परमो तनुः १४
नित्यप्रबुद्धशुद्धात्मा कारणोऽमितविग्रहः
अनन्तो निधनश्चैव नित्यतृप्तो निराश्रयः १५
कूटस्थः प्रभवो नाथो अनाथो ह्यमितद्युतिः
अनादिरेको नियम्यश्चेतनस्सर्वहृत शिवः १६
सर्वकृत् सर्वविच्छर्वस्सर्वशक्तिरजोऽव्ययः
सर्वैः कारयिता कर्ता तेन सर्वमिदं ततम् १७
सर्वान्तं सर्वपरमं सर्वदोषविवर्जितम्
सर्वतत्वपदातीतं अजमीशानमव्ययम् १८
सुशाश्वतं सुसंपूर्णं सुनिर्वाणं सुशोभनम्
सर्वावरणनिर्मुक्तमद्भुतैकं सनातनम् १९
सर्वव्यापि ससर्वज्ञः सर्वस्योपरि संस्थितः
सर्वगः सर्वगातीतः मूर्तीनां सकलो मलः २०
सोऽयं रुद्रो महादेवो मूर्तीनां मन्त्रविग्रही
परापरविभागेन विश्वमूर्तिमिवाव्ययम् २१
अनन्तरूपोऽनन्तश्च अनन्तोऽनन्त एव च
अनन्तशक्तिरनन्तात्मानन्तेन्द्रयोनन्तवक्त्रकः २२

सर्वधामातिरिक्तोऽसौ इन्द्रियातीततत्पदम्
तदात्मकमिदं सर्वं ते वाचप्रणितं जगत् २३
तत्त्वतत्वन्तु तत्वेन तत्वतत्वन्तु भिस्तकम्
अचिन्त्यस्सर्वसूक्ष्मो मतो दृष्टिविवर्जितः २४
अनन्तो मूर्तिसंयोगः सकलोऽसौ प्रकीर्तितः
एष ते कथितोऽनन्तो यस्यान्तस्तु न विद्यते २५
अविदितत्वात्तु देवेशे अनन्तविधिमुत्तमम्
शिवयागन्तु कुरुते नाऽसौ मोचयते पशुम् २६
चक्षुषा बिन्दुयोगेन कथितोऽनुग्रहो मया
शिवहस्तसमायोगात् स्पर्शास्सर्वत्र कीर्तिताः २७
उदकेन यथा कुर्यात् शृणु देवि वदाम्यहम्
सर्वसंहितसामान्यं विधिरेषामुदाहृता २८
पञ्चब्रह्मशिवाङ्गाश्च शिवेन सह संयुताः
त्रि तत्र देवतान्यासमध्वानं यत्प्रकीर्तितम् २९
सर्वे सर्वत्र कर्तव्या उदके च विशेषतः
न यज्ञेन विधिज्ञेन अध्वन कुशलेन च ३०
त्रितत्वदेवतत्त्वेन कर्तव्या विधिरुत्तमा
ग्रहणे योजने तत् ज्ञ उत्क्षेपस्सन्नियोजने ३१
सन्धाने चैव सर्वेषां लयं निर्वाणमेव च
सर्वज्ञानाति तत्त्वज्ञः स तु योग्यश्शिवाध्वरे ३२
प्रकृतिं यो विजानाति विकारैस्सह संयुतम्
आधाराधेयवित् प्राज्ञः स तु योग्यः शिवाध्वरे ३३
स साधकस्सदाचार्यः ससंपूज्यो महामतिः
स गुरुः साधकेन्द्राणां शेषा यन्नामधारकाः ३४
एवं विधिविधानज्ञः आचार्यस्तन्त्रपारगः
दीक्षकस्सर्वजन्तूनां स तु नेता परं पदम् ३५

## इति निश्वासकारिकायां ज्ञानकाराडे मूर्तिविन्यासो नाम एकोन चत्वारिंशत्पटलः

देव्युवाच
सर्वज्ञस्यार्चनं ब्रूहि नियोगञ्च महेश्वर
कस्मिन् काले तु भवगान् अर्घ्यं दद्यात्परे शिवे १
परेण सह चात्मानं यथा चैकत्र तां व्रजेत्
तथा त्वं देवदेवेश अर्चनं कथयस्व मे २
इश्वरः
शृणु देवि परं गुह्यं अर्चनं सार्वकामिकम्
येन यष्टेन यष्टास्तु अशेषभुवनाधिपाः ३
वामाङ्गे तु तथा देवि वामा शक्तिः प्रकीर्तिताः
पितृणामाधिपत्येन ज्ञातव्या ज्ञानचक्षुषा ४
दक्षिणाङ्गे पुनर्ज्येष्ठा देवानामधिदेवता
मध्ये रौद्री सदा विद्यात् योगीनां योगदेवता ५
इडायां संस्थिता वामा वामाङ्गे सर्वदेहिनाम्
सुषम्नायां पुनर्ज्येष्ठा रौद्री तु पिङ्गलाश्रिता ६
एतास्तु शक्तयः प्रोक्ताः वर्णत्रयसमाश्रिताः
नाडीत्रयसमायुक्ता ब्रह्मविष्णवीशसंयुताः ७
पिङ्गलायां प्रभुः रौद्री सुषुम्नायान्तु ब्रह्मणः
इडायान्तु उपेन्द्रो वै सर्वकार्येषु संस्थिताः ८
वामस्थाने यदा देवः स्नानं तत्र समाचरेत्
अग्निकार्यन्तु मन्त्रज्ञः जपये हेतुदक्षिणे ९
ध्यानमेकं सदा सेव्यं मध्यदेशं प्रतिष्ठितम्
निर्हत्य व्यापयित्वा सर्वावस्थो भवेत्क्षणात् १०
पुष्पपूर्णाञ्जलिः कृत्वा यत्र यत्र मुखे स्थितः

मानसैः प्राकृतैर्वापि अद्भिः संपूर्णमञ्जलिम् ११
स्वसंभवस्थमार्गेण यावच्छब्दमुदाहरेत्
शब्दान्ते लीयते यावत् पुण्यकालमिहोच्यते १२
निस्तत्वे निर्मलीभूतं निर्विकल्पं प्रकल्पयेत्
तत्र चैवावतिष्ठेत कृतकृत्यश्च जायते १३
एवं वै व्यापयित्वा तु पूरकेन पुनर्विशेत्
अप्रबुद्धः प्रबुद्धात्मा तदा भवति नान्यथा १४
शिवं करोति सर्वत्र ऊर्ध्वञ्चैव प्रसाधयेत्
उपास्य सर्वकर्माणि शिवेना शिवहारिणा १५
देव्युवाच
सिद्धान्तज्ञानज्ञेयञ्च लक्षणञ्च महेश्वर
तदहं श्रोतुमिच्छामि प्रसादाद्वक्तुमर्हसि १६
ईश्वरः
तद्ज्ञानार्थं स्मृता वेदाः सिद्धान्ताश्च सहस्रशः
एतस्मात्कारणाद्देवि ज्ञेयमित्यभिधीयते १७
ज्ञेयज्ञानपदार्थौ च सिध्यर्थं विधिरूपकम्
शास्त्रेण सिध्यते सिद्धिः सिद्धान्तस्तेन स स्मृतः १८
संज्ञालक्षणमित्युक्तं लक्ष्येऽर्थे लक्षणस्मृतम्
लक्ष्यं संयक्परिज्ञानाल्लक्षणं तेन संस्मृतम् १९
ध्यानधारणरहितं योगारंभे विवर्जितम्
तस्योपलब्धेर्विज्ञानं तद्ज्ञातुन्नैव शक्यते २०
तेनोक्ता कल्पना पूर्वन्निश्चयेनास्ति कल्पना
अस्तित्वे यो न संमूढस्सर्वज्ञस्स च पण्डितः २१
प्रयासा यस्य आसी ससर्वज्ञोऽयं व्यवस्थितः
अस्ति भावेन गृह्णन्ति देही मायाविमोहितः २२
यथा नास्ति ध्रुवं किञ्चित् तथा ते कथितं मया

तदक्षयं तदमृतं तत्सत्यं तत्सनातनम्  २३
तादृशे वर्त्तनासोऽपि यस्य योगं स सर्ववित्
बन्धने मायया मायी आशापाशेन वेष्टितः  २४
आशापाशैर्विमुक्तोऽयं अमृतं पर्युपासते

इति निश्वासकारिकायां ज्ञानकाण्डे सर्वज्ञार्चनसिद्धान्त-
ज्ञानज्ञेयलक्षणान्नाम चत्वारिंशत्पटलः

देव्युवाच
पञ्चभूतात्मके पिण्डे कस्मिन् के देवता स्थिताः
पादौ च जानौ जङ्घायां ऊरुयुग्मे च के स्थिताः  १
लिङ्गे च देवदेवेश स्फिजौ कटिके स्थिताः
नाभिः प्रदेशपार्श्वे च पृष्ठवंशे तथैव च  २
आन्त्रे मज्ञे च देवेश रुधिरे कफपित्तयोः
रोमकूपे च के चोक्ता हस्तौ पादौ +++  ३
+++++++++++++++ च के स्थिताः
चुबुके चक्षुषोश्चैव ललाटे मस्तके चके  ४
वाचां नाडी देवेश अहङ्कारे च के स्थिताः
इन्द्रियाणां च के देव विदिते यत्फलं भवेत्  ५
एतन्मे देवदेवेश प्रसादाद्वक्तुमर्हसि
ईश्वर उवाच
शृणु देवि परं गुह्यं यत्त्वया परिपृच्छितम्  ६
तदहं संप्रवक्ष्यामि त्वत्प्रियार्थं  वरानने
सत्त्वञ्च आदितः कृत्वा प्रवक्ष्यामि निबोधत  ७
सत्त्वं प्रधानमित्युक्तं स ब्रह्मा तु निगद्यते
रजो विष्णुस्तमो रुद्रो बुद्धिरष्टगुणाः शृणु  ८
धर्मज्ञानञ्च वैराग्यमैश्वर्यञ्च तथा परम्

अधर्मश्चैव विज्ञेयं अज्ञानञ्च तथैव हि ९
अवैराग्यमनैश्वर्यं योगीशानां क्रमेण तु
ब्रह्मादिदेवता बुद्धेर्धर्माद्याश्शक्रदेवताः १०
अहङ्कारे स्थितो रुद्रः शून्ये शब्दः प्रतिष्ठितः
स्पर्शे वायुस्समाख्यातो रूपे वह्निः प्रकीर्तितः ११
तस्य तन्मात्रे वरुणो गन्धे तु पृथिवी स्थिता
प्रजापतिः पृथिव्यां वै द्रवे सोमः प्रतिष्ठितः १२
सूर्यस्तु संस्थितस्तेजे मारुतस्पर्शने स्थितः
शिवतत्वं परं गुह्यमाकाशे संप्रतिष्ठितम् १३
श्रोत्रेन्द्रिये महादेवि दिशः सर्वाः प्रतिष्ठिताः
त्वगिन्द्रिये तु मरुतः चक्षुर्भ्यां हुतभुक् स्थितः १४
जिह्वेन्द्रिये सदा देवि भुवशक्तिः सरस्वती
घ्राणेन्द्रिये तु वै ज्ञानं पादयोर्विष्णुरेव हि १५
क्रियाशक्तीति न्निर्दिष्टा मित्रो वायुश्च गृह्यते
ज्येष्ठा प्रजापतिर्लिङ्गे वामा रौद्री च वचया १६
जलेन्दुर्मनसि ज्ञेया वाक् सवित्री हृदि स्थिता
गौरी वागीश्वरी कर्णौ ललाटे विमलारि तु १७
स्नायुवर्गे स्थितोऽनन्तः सूक्ष्मः शुक्ले व्यवस्थितः
शिवोत्तमोत्तमो देवः स्थितोऽस्थि निचये सदा १८
एकनेत्रास्थितो मांसे एकरुद्रस्तथा परे
रुधिरे संस्थितो नित्यं त्रिमूर्तिः कफपित्तयोः १९
श्रीकण्ठो रोमसङ्घाते मूत्रेषु च सदा स्थितः
शिखण्डी च परो रुद्रो नखेषु सर्वतस्थितः २०
तन्महेशस्थितो देहे ऋषयश्चापि सन्धिषु
पृष्ठवंशे च चण्डीशः पार्श्वेषु च संस्थितः २१
अङ्गुलीषु स्थिता नागा बाहौ पितरस्संस्थिताः

नाभौ वह्नि स्थितः साक्षात् सर्वेषामेव देहिनाम्  २२
विद्याधरास्तथा यक्षाः रोमकूपेषु संस्थिताः
हस्तयोरिन्दुदेवत्यो जानुजङ्घे तथाश्विनौ  २३
ऊरुयुग्मौ स्थितौ देवौ मित्रावरुणविश्रुतौ
नेत्रयोर्गन्धयोश्चैव ग्रीवायां चिबुके स्थिताः  २४
सप्तगृहास्ससपस्संस्थिताश्चाधिदैवताः
नक्षत्रमण्डलं दिव्यं मुक्तनानु केऽनु संस्थिताः  २५
एवं वै यो विजानाति सर्वदेवैरधिष्ठितम्
शरीरं सर्वजं ज्ञानं न पापेन विलिप्यते  २६
एतन्यासपरं देवि योऽभ्यसेत दिने दिने
स श्रियं लभते देवि ईश्वरेण समो भवेत्  २७
न पापं न च वै पुण्यं न भयेषु भयं भवेत्
मुच्यते किल्बिषैर्घोरैः सप्तजन्मकृतैरपि  २८
सेवितव्यं प्रयत्नेन योगिनां मुक्तिमिच्छता
नवोपायं मयायोक्तं तेन त्वा मृतसंस्थिताः  २९
सर्वेषां यः परो देवः सर्वव्यापी व्यवस्थितः  ३०

इति निश्वासकारिकायां ज्ञानकाण्डे सर्वदेवशरीरन्यासे
एकचत्वारिंशत्पटलः

देव्युवाच
आत्मा मूर्तिस्त्वया देव कथितं शिवज्ञासने
स पशुः पूर्वमाख्यातो देवो ज्ञेयस्तथैव च  १
नमश्चेता च जीवश्च कथितन्तु त्वया पुरा
स पशुः निष्क्रियश्चैव अस्वतन्त्रमधोमुखम्  २
कथं शिवत्वमायाति ज्ञेयं नामादिक्रमेण तु
एतदिच्छामि विज्ञातुं भगवन् वक्तुमर्हति  ३

ईश्वरः
शृणु देवि परं गुह्यं यत्त्वया परिपृच्छितम्
तदहं संप्रवक्ष्यामि त्वत्प्रियार्थं वरानने ४
सर्वसंहितसामान्यं विधिमेतत्समासतः
कथयामि न सन्देहः एकैकस्य यथाक्रमम् ५
षड्विधं मानसं ज्ञेयं शक्तिस्तु नवधा स्मृता
अनन्तपूजामित्युक्ता विसर्गेण समन्विता ६
एवं पूज्य अनन्तन्तु मुक्तिं तत्रैव विन्यसेत्
हां हूङ्कारसंयुक्तो अष्टभेदस्य चाष्टमम् ७
मूर्तिविन्यासं देवेशि अस्मिन् तन्त्रे उदाहृतम्
दीक्षाकाले यथायोगं ग्रहणञ्च यथा भवेत् ८
तथा ते कथयिष्यामि ग्रहणं येन यद्यथा
अनन्तमूर्तिसंयोगमेभिर्बीजैरुदाहृतम् ९
एवं विन्यस्य यत्नेन सकलीकरणं ततः
मन्त्रातीतश्च मन्त्रश्च मया पूर्वमुदाहृतः १०
तं ज्ञात्वा सकलं देवं निष्कलञ्च तथैव च
मुर्ध्नि वक्त्रौ च हृदये गुह्ये चैव यथाक्रमम् ११
विन्यसेद्देवदेवेशि सद्योजातन्तु मुर्तिषु
समयज्ञस्य देवेशि सकलीकरणं हितम् १२
अर्चनं तस्य वक्ष्यामि तन्मे निगदतः शृणु
स्थण्डिले शिवलिङ्गन्तु प्रोक्षणाभ्युक्षणादिना १३
अग्नौ शिवे च देवेशि द्रव्यमालभते तथा
पञ्चभिर्ब्रह्मभिश्चैव विधिसर्वमशेषतः १४
ईशानमध्यतो दद्यात् पूर्वे तत्पुरुषन्यसेत्
अघोरं दक्षिणे चैव वामदेवं तथोत्तरे १५
पश्चिमे विन्यसेन्नित्यं सद्योजातन्तु सुवृते

अनेन विधिना यस्तु यजेत सुसमाहितः १६
ईश्वरावाप्तिसंयोगं समये कथितं मया
पञ्चब्रह्मसमायोगात् कलाभिश्च स सुवृते १७
विद्याङ्गैश्च समायुक्तं पुत्रके कथितं मया
आवाहनादिदेवस्य पूर्ववत्कथितं तव १८
द्वारावरणसंयुक्तं कथयेत्तस्य देशिकः
एवं तत्सकलीकृत्य सन्ध्याकाले उपासनम् १९
कर्तव्यं पुत्रकेनैव कथितं सुरसुन्दरी
अनेन विधिना देवि पुत्रकस्सुसमाहितः २०
लभते सामीप्य पदं सादाख्यस्य न संशयः
तैरेव पूर्वोक्तैस्तु शिवाङ्गैश्च समन्वितः २१
आवाहरोधसंयोगध्यानयोगविचक्षणैः
लभते सायुज्यमात्मानं सादाख्यस्य महात्मनः २२
चतुरावरणैर्युक्तं यजेत सुसमाहितः
मन्त्रैः करणयोगेन स पशुः सुरसुन्दरि २३
भवेन्मन्त्रात्मकश्चैव स पशुर्नात्र संशयः
अमन्त्रेण पशुः प्रोक्तः चेता मात्रं समाविशेत् २४
स चेतनः स्मृतस्तन्त्रैः अकिञ्चिद्ज्ञः पशुः स्मृतः
समन्त्रैश्च सदायुक्तश्चेतनः परमेश्वरि २५
तदा योग्यश्शिवध्याने भवते नात्र संशयः
देव्युवाच
कथं मन्त्रात्मकं देहं पशोर्विज्ञायते प्रभो २६
एतदिच्छामि विज्ञातुं भगवन् वक्तुमर्हसि
ईश्वरः
मन्त्रैस्संबद्धदेहस्य शृणु तस्य पराक्रमम् २७
पातालादुद्धरेन्नागान् पातयेद्दैत्यराक्षसान्

नाशयेत्सर्वविघ्नानि शान्तिं पुष्टिं करोति च २८
मन्त्रैः संबद्धदेहस्य प्रपलायन्ति नायकाः
उत्तिष्ठेदन्तर्द्धाने च पादचारे तथैव च २९
खड्गे च पादुके चैव रेचने अर्चने तथा
गुडिकाकाशगमने दण्डकाष्ठपवित्रके ३०
आसनञ्चैव यानञ्च सर्वमन्त्रैः प्रसिध्यति
चेतनात्मा यदा देवि न किञ्चिदपि सिध्यते ३१
भूतैश्च बाध्यते देवि अज्ञानेन समावृतः
मन्त्रात्मा चेतनात्मा च कथितस्तव सुवृते ३२
कथितञ्च रहस्यन्तु भेदस्तु उभयोरपि
बिन्दुनादसमायोगात् वर्णास्तु नदते यदा ३३
तत्तु मन्त्रात्मकं प्रोक्तं शिवं परमकारणम्
पञ्चब्रह्मकलैर्युक्ते कृते तु सकले शिवे ३४
तस्मिन् प्रकाशते देवो मन्त्रात्मा परमेश्वरः
वर्णव्यूहे स्थितो यस्मात् शिवः परमकारणः ३५
तेन देवि समाख्यातो मन्त्रात्मा परमेश्वरः
प्रणवो भयसंयुक्तो व्यामव्यापी इति स्मृतः ३६
पदमन्त्रसमायुक्तो धर्मात्मा परमेश्वरः
अनन्तेशादितः कृत्वा शिखण्ड्यन्तं वरानने ३७
स एव संस्थितो नित्यं मन्त्रात्मा परमेश्वरः
लोकपालान् सहास्त्रैश्च त्रैलोक्यं स चराचरम् ३८
मन्त्रात्माऽवस्थितो देवः शिवः परमकरणः
एवं मन्त्रात्मकं देवि कथितं तव सुवृते ३९
ज्ञातव्यं देशिकेनैव शिवतन्त्रानुवर्तिना
बिन्दुर्नादश्च शक्तिश्च अतीतः परतश्च यः ४०
यदा विज्ञानतत्वेन मन्त्रातीतः परस्तु सः

शब्दरूपरसादीनां अतीतः परमेश्वरः ४१
तन्तु देवि विदित्त्वा तु देशिकः पाशहा भवेत्
नादातीतः परश्शान्तः शक्तिरित्यभिधीयते ४२
तस्यातीतः परन्देवि मन्त्रातीतः स उच्यते
पूर्वमुच्चारयेद्वर्णान् शब्दलीनञ्च कारयेत् ४३
शब्दलीनः पुनश्शब्दः शब्दातीतं पुनर्नयेत्
तस्यातीतं परन्देवि मन्त्रातीतः स उच्यते ४४
एष ते कथितो देवि कारिकायाश्च निर्णयः
पूर्वसूत्रे तु कथितं व्याख्यातं तव सुवृते ४५
देव्युवाच
सकलं पूजयित्वा तु निष्कलन्तु ततोपरि
त्वया देव समाख्यातं आदिसूत्रे महेश्वर ४६
पशुस्तु सकलः प्रोक्तः स मूर्तिः परिकीर्तितः
निष्कलञ्च कथं तस्मिन् पूज्यते परमेश्वरः ४७
निष्कलः कलयातीतं न मन्त्रस्वरयोर्मतिः
कथं सकलदेहस्तु स्थातव्यः परमश्शिवः ४८
इश्वरः
मन्त्रमुच्चारयेत्पूर्वं हृदि कृत्वा महेश्वरम्
कूटशब्दपरे लीनं स वै निष्कल उच्यते ४९
उच्चारणे यदा देवि निर्विकल्पं पदं व्रजेत्
देहे सकलयोगेन यदा ज्ञातं महेश्वरि ५०
अतीतः कलयातीतः स वै निष्कल उच्यते
उच्चारणे यदा हीनं निर्विकल्पपदं व्रजेत् ५१
मनसा चिन्त्यते यच्च बुद्ध्या यत्र विकल्पना
बुध्यहंकारनिर्मुक्तं स वै निष्कल उच्यते ५२
स मयी पुत्रको वाऽपि साधकाचार्य एव वा

सर्वैर्विधिरनुष्ठेयो विशेषः कथितो मया ५३
इति निश्वासकारिकायां द्विचत्वारिंशत्पटलः

देव्युवाच
भगवन् श्रोतुमिच्छामि दीक्षाविधिमनुत्तमम्
संक्षेपात् कथितं सर्वं विस्तरं कथयस्व मे १
पशुग्रहणसंयोगं दीक्षाकाले यथा भवेत्
अस्मिन् दीक्षे यथा यागं तत्तथा वक्तुमर्हसि २
ईश्वरः
अतः परं प्रवक्ष्यामि दीक्षाविधिमनुत्तमम्
सामान्यं सर्वतन्त्राणां कथयामिति वाऽखिलम् ३
पञ्चब्रह्म शिवाङ्गाश्च शिवेन सह संयुताः
शुध्यर्थमध्वरे मन्त्रस्तव देवि उदाहृतम् ४
वामा ज्येष्ठा च रौद्री च शक्तयस्त्रीणि किर्तिताः
ज्ञातव्या देशिकेन्द्रेण वियोगात्क्षेपयोजने ५
वामया योजयेन्मन्त्री ज्येष्ठया च वियोजयेत्
रौद्र्या चोत्कर्षणं प्रोक्तं पुनरन्यत्र योजयेत् ६
अवनीमादितः कृत्वा यावत्तत्वन्निरामयम्
विधिमेतं सकृत् ज्ञात्वा व्यूहहोमेन शुद्ध्यति ७
एकैकमाहुतिं देवि जुहुयाद्देशिकोत्तमः
एवमेव विधिं कुर्याद्यावत्सर्वं समाप्यते ८
अन्ते पूर्णाहुतिं दद्यात् एष एव विधिस्मृतः
शिखया ताडनं कुर्यात् मुद्रया पुष्पसंयुतम् ९
पशुर्हं हुङ्कृतेनैव ग्राह्यस्संहारमुद्रया
शिवेन च्छन्दयेत्पाशान् ततः पूर्णाहुतिक्रमात् १०
एवमादिक्रमेणैव ज्ञातव्यं देशिकेन तु

सर्वाध्वानसमाप्तौ तु शिखोच्छेदन्तु कारयेत्  ११
शिखयाच्छेदयेन्मन्त्री छित्वा पूर्णाहुतिं पुनः
पाशाश्च विविधान् कृत्य तत्वे तत्त्वे यथाक्रमम्  १२
सूक्ष्माः स्थूलाश्च ये पाशास्त्वर्षकंबुकवत् स्थिताः
पाशाः कोटिसहस्राणि शिवेन कथितास्तु ते  १३
पाशाश्शिवमुखं प्राप्य दह्यन्ते नात्र संशयः
देव्युवाच
असंख्यायां महादेव पाशास्तु कथिताः प्रभो  १४
अत्यन्तगहनाश्चैव कथं दह्यश्शिवाध्वरे
ईश्वरः
प्रकृतिं पुरुषञ्चैव नियतिं कालमेव च  १५
मायाऽविद्या च ईशश्च सदाशिवश्शिवस्तथा
मूलपाशा स्मृता ह्येते नव पाशा वरानने  १६
एतैर्दण्डैरिमे दग्धाः पाशाः पञ्चाशत्कोटयः
पञ्चाशत्प्रणवा देवि मया पूर्वमुदाहृताः  १७
तेऽपि शुद्धैरिमे शुद्धाः पाशाः पञ्चाशत्कोटयः
अष्टत्रिंशत्कलैर्देवि यथाऽध्वानं विशुद्ध्यते  १८
तैर्निशुद्धैरिमे शुद्धाः पाशाः पञ्चाशत्कोटयः
निवृत्तिश्च प्रतिष्ठा च विद्याशक्तिस्तथैव च  १९
एभिः शोध्वं यदा ध्वानं शुद्धाः पञ्चाशत्कोटयः
अमृता नाम कला या तु तथा चैवामृता मृता  २०
सुसूक्ष्मा च यथा देवि सूक्ष्मा च परिकीर्तिता
एभिस्तु शोध्यमध्वानं पूर्वदृष्टेन कर्मणा  २१
एतैः शुद्धैरिमे शुद्धाः पाशाः पञ्चाशत्कोटयः
पदमन्त्रप्रयोगेन शोधनीयाः शिवाध्वरे  २२
एभिश्शुद्धे इमे शुद्धाः पाशाः पञ्चाशत्कोटयः

एवञ्च सप्तधा देवि अध्वानं परिकीर्तितम्  २३
वेदितव्यं प्रयत्नेन शिवतन्त्रानुवर्तिभिः
भुवनाध्वा मया प्रोक्ता आहुतीनान्तु संख्यया  २४
कलाभिस्तावती ज्ञेया सर्वाध्वानमशेषतः
त्वयाऽध्वानं यदा देवि जायते देशिकोत्तमः  २५
शतं शतञ्च होतव्यं तत्त्वशुद्धिविधिस्मृतः
नव तत्वैस्तथा देवि एवमेव न संशयः  २६
कलातत्त्वे तथैवेह द्वितीयं त्रयमेव हि
पञ्चाशच्छतहोमेन वर्णाध्वानं प्रकीर्तितम्  २७
तत्त्वाध्वाने कलाध्वाने वर्णाध्वाने तथैव च
उक्षेपं योजनञ्चैव एभिरत्र न कारयेत्  २८
पदाध्वाने तथैवेह होतव्यं शतमेव तु
एवं शुध्यति अध्वानं सप्तधा परमेश्वरि  २९
एवं ज्ञात्वा ततो दीक्षां कारयेद्देशिकोत्तमः
देव्युवाच
सर्वाध्वानं त्वया देव सूचितं न तु विस्तृतम्  ३०
तदहं श्रोतुमिच्छामि विस्तरेण ब्रवीहि मे
ईश्वरः
आदिसूत्रे यदध्वानं सूत्रमात्रेण भाषितम्  ३१
तदेव कथयिष्यामि विस्तरेण निबोध मे
देहाध्वानं प्रवक्ष्यामि तन्मे निगदतः शृणु  ३२
अङ्गुष्ठाग्रे स्थितो देवस्त्वानन्तः परमेश्वरः
चतुर्वक्त्रो महातेजा आदित्योदयसन्निभः  ३३
योगिनं वासमासीनं विद्याविद्येश्वरैर्वृतम्
अनन्तं भुवनेशानमधस्तात्परिकल्पयेत्  ३४
ओं अनन्ताऽऽगच्छागच्छ आहुतिं प्रतिगृहाण शिवो ददाति

ते स्वाहा । ओं सद्योजातायेति आहुतिं जुहुयात् ।
एवमादिक्रमेणैव हुनेदेकादशात्मिकम्
अधिकारे यथा भोगे लये वाऽनुक्रमेण तु ३५
पूर्णाहुतिं ततो दत्वा उद्धरेत यथाक्रमम्
एवं कालाग्निरुद्राय नरकेषु तथैव च ३६
ओं कालाग्निरुद्र आगच्छ आहुतिं प्रतिगृहाण शिवो ददाति ते स्वाहा ।
ओं अवीचये नमः । ओं रौरवाय नमः । ओं महारौरवाय नमः । ओं तामिस्राय नमः । ओमन्धतामिस्रे नमः । ओं शीत नमः । ओं उष्ण नमः । ओं सञ्जीव नमः । ओं सुजीवनाय नमः । ओं पद्माय नमः । ओं महापद्माय नमः । ओं कापं सूत्राय नमः । ओं सूचीमुखाय नमः । ओं क्षुरधाराय नमः । ओं पर्वताय नमः । ओं सितालवनाय नमः । ओं रौद्राय नमः । ओं कुंभीपाकाय नमः । ओं अंबरीषाय नमः । ओमङ्गारराशये नमः । ओं भुवननमः । ओं तीक्ष्णतुण्डाय नमः । ओं वज्रतुण्डाय नमः । ओं शकुनये नमः । ओं मीनोदराय नमः । ओं स्वरोदराय नमः । ओं सन्दंशाय नमः । ओं काकतुण्डायनमः । ओं वानराननाय नमः । ओं उग्रीवाय नमः । तेजोष्टकम् । ओं लोकाक्षाध्यक्षाय नमः । ओं गणाध्यक्षनमः । ओं त्रिदश नमः । ओं त्रिपुरान्तक नमः । ओं सर्वरूप नमः । ओं शान्त नमः । ओन्निमेष नमः । ओमुन्मेष नमः ।
तेजोष्टकन्तु होतव्यं देशिकैस्सुसमाहितैः
अत ऊर्ध्वं समाख्यातं योगाष्टममनुत्तमम् ३७

ओं कृतं नमः
एवमादिक्रमेणैव हुनेद्योगाष्टकं पुनः
एतेषामुपरिष्टात्तु सुशिवा द्वादश स्मृताः ३८
ओं वाम नमः । ओं भीम नमः । ओं उग्र नमः
। ओं भव नमः । ओं शर्व नमः । ओं विद्याधिप
नमः । ओमेकवीर नमः । ओं प्रचण्ड नमः ।
ओमीश्वर नमः । ओजसे नमः । ओमनन्त नमः
। ओमेकशिव नमः । सुशिवा ह्येते प्रकीर्तिताः ।
शोधनीयाश्शिवाध्वरे ।
अत ऊर्ध्वं वीरभद्रो मण्डलाधिपतिः प्रभुः
ओंमण्डलाधिप नमः
अत ऊर्ध्वं महादेवो वामदेवभवोद्भवौ ३९
ओं वामदेव नमः । ओं भवोद्भव नमः ।
ओमेकपिङ्गेक्षण नमः । ओमीशान नमः ।
ओमङ्गुष्ठमात्र नमः । एते महादेवाष्टकास्मृताः । अत
उपरिष्टाद्गुरुपङ्क्तिद्वयम् ।
ओं शिवाऽनन्त नमः । अनन्त नमः । ओं प्रभु नमः ।
ओं वामन नमः । ओं चण्ड नमः । ओं प्रताप नमः ।
ओं व्रतार्ति नमः । ओं शिव नमः । ओं कपालि नमः
। ओं भीम नमः । ओङ्कारालि नमः । ओं पिङ्गल
नमः । ओं महेन्द्र नमः ।
ओं दिनकृन्नमः । ओं प्रतोद नमः । ओं दक्ष नमः ।
ओं क्षेमीश नमः । ओं कबलेश नमः । ओं कटङ्कट
नमः । ओं बुहन्तान नमः । ओमनादर नमः । ओं
श्वेत नमः । ओं यजुर्वेद नमः । ओं सामवेद नमः ।
ओं ऋग्वेद नमः । ओमथर्ववेद नमः । ओमाचार्य

नमः । ओं शिव नमः । ओं विरूपाक्ष नमः । ओं नारायणाय नमः । ओं विबुचण्डोदर नमः । ओं संवर्त नमः । ओं यममाली नमः । ओं गहनेश नमः । ओं पीड नमः । प्रथिमा पङ्क्तिरिष्यते । ओं श्वेत नमः । ओं दारु नमः । ओं लोकाक्षि नमः ।

ओं सूत्र नमः । ओं सुहोत्र नमः । ओमेकपाद नमः । ओं ग्रन्थेश्वर नमः । ओं गौतम नमः । ओं जैमिनि नमः । ओं दधिवाह नमः । ओमृषभ नमः । ओं गोकर्ण नमः । ओं गुहेश्वर नमः । ओं गुहवासि नमः । ओं शिखण्डि नमः । ओं झटिमालि नमः । ओमुग्रनमः । ओं शिखि नमः । ओं शूली नमः । ओं सुगति नमः । ओं सुपाल नमः । ओमट्टहास नमः । ओं दारुक नमः । ओं षाढी नमः । ओं त्रिदण्डी नमः । ओं भाव नमः । ओं भाव्य नमः । ओं लकुलीश नमः । द्वितीया पङ्क्तिरिष्यते । ओं देवावरणे नमः । ओं दीर्घबाहू नमः । ओमृभु नमः ।

ओमृति नमः । ओं भृति नमः । ओं स्थाणु नमः । ओं सद्योजाताय नमः । ओं भुवन्नमः । ओं चण्डि नमः । ओं षण्मुख नमः । ओञ्चतुरानन नमः । ओञ्चक्रपाणि नमः । ओं कूर्माक्ष नमः । ओमर्धनारीश्वर नमः । ओं मेष संवर्तक नमः । ओं भस्मेश नमः । ओं कामनाशन नमः । ओं कपालीश नमः । ओं भूर्भुवन्नमः । ओं वषट्कार नमः ।

तृतीया पङ्क्तिराख्याता शोधनीया शिवाध्वरे
अथोर्ध्वं तत्वसर्गे तु बोद्धव्यं देशिकेन तु ४०
पृथिव्यादि समारभ्य प्रधानान्तन्तु यावतः

अस्मिन् मध्ये तु ये तत्वाः शोधनीया विपश्चितैः ४१
एवं प्रकृतितत्त्वन्तु व्याख्यातं तव शोभने
तस्याधस्तात्स्मृतास्सर्वे शोधनीयाः शिवाध्वरे ४२
यवयवाचान्तरेणैव परिवार्य व्यवस्थितः
प्रकृतेरुपरिष्ठात्तु भावसर्गं विजानतः ४३
अणिमां तारमंभानां शोधनीयं विपश्चितैः ४३-२
ओं अंभन्नमः । ओं सलिलन्नमः । ओं ओघ नमः ।
ओं वृष्टि नमः । ओं तार नमः । ओं सुपार नमः ।
ओं सुनेत्र नमः । ओं सुमारि नमः । ओमुत्तमाभा नमः
। इष्टयश्शोध्याः । ओं तारा नमः । ओं सुतारा नमः
। ओं तारायत नमः ।
ओं प्रमोद नमः । ओं प्रमुदित नमः । ओं मोदमान
नमः । ओं रद्यक नमः । ओं सदा प्रमुदित नमः ।
ओं सिद्धि नमः । ओं तार नमः । ओं सुवार नमः
। ओं सुनेत्र नमः । ओं सुमानि नमः । ओमुत्तमाभा
नमः । तुष्टयश्शोध्याः । ओं तारा नमः । ओं सुतारा
नमः । ओं सुपार नमः । ओं सुनेत्र नमः । ओं
सुमारि नमः । ओमुत्तमाभा नमः ।
तुष्ट्यशोध्याः देशिकैस्सुसमाहितैः ४४
ओं अणिमा नमः । ओं लघिमा नमः । ओं प्राप्ति नमः ।
ओं प्रकाम्य नमः । ओं वशित्वाय नमः ।
ओमीशित्वाय नमः ।
ओं सर्वकामावसायित्वाय नमः ।
अणिमादय ऐश्वर्याश्शोधनीया मुमुक्षुभिः
अत ऊर्ध्वं स्थितं देवि नाडी विद्याष्टकं स्मृतम् ४५
ओमिडा नमः । ओं चण्डी नमः । ओं गौरी नमः ।

ओं शान्तिक नमः । ओं माला नमः । ओं मली नमः ।
ओं स्वाहा नमः । ओं स्वधा नमः ।
रागाद्या विद्येशान्ताश्शोधनीयास्सदा बुधैः
अत ऊर्ध्वं विग्रहाष्टकं निग्रहानुग्रहे स्थितम् ४६
ओं कार्य नमः । ओं कारण नमः । ओं सुख नमः ।
ओं दुःख नमः । ओं ज्ञान नमः । ओं साध्य नमः ।
ओं कारण नमः ।
इति निग्रहानुग्रहे स्थिताः । पुरुषतत्त्वं शोध्यम् ।
अतः परं प्रवक्ष्यामि शृणुष्वावहिता प्रिये
प्राकृते चैव तत्त्वे तु यस्मिन् संस्कार इष्यते ४७
तदहं संप्रवक्ष्यामि तन्मे निगदतः शृणु
भूलोकस्तु यदा प्राप्तः तिर्यग्योनिं विशोधयेत् ४८
स्थावरं प्रथमं शोध्यं ततः शोध्यं सरीसृपम्
पक्षियोनिः ततश्शोध्या मृगाश्च तदनन्तरम् ४९
पशुश्च शोध्यो देवेशि अनुपूर्वं यथाक्रमम्
गवाद्याः पशवः प्रोक्ताः सिंहाद्याश्च मृगा स्मृताः ५०
भासाद्याः पक्षिणः प्रोक्ताः सर्पाद्यास्तु सरीसृपाः
सप्तच्छदाद्या देवेशि स्थावरा परिकीर्तिताः ५१
एतान् शोध्यविधानेन मानुषं समुपक्रमेत्
अन्त्यजाः प्रथमः शोध्याश्शूद्रयोनिस्ततः पुनः ५२
वेश्ययोनिं ततो नीत्वा क्षुद्रयोनिं पुनर्नयेत्
क्षुद्राद्ब्राह्मेषु संयोज्य अधिकारं यथाक्रमम् ५३
अन्त्यजे अधिकारन्तु बन्धरोधनमारणम्
हिंसकादिविधानानि अधिकारं त्यजेत्सदा ५४
शूद्रत्वे शैवशुश्रूषां स वशित्वञ्च शोभने
अधिकारः सदा देवि शूद्रत्वे परिकीर्तितः ५५

क्षत्रक्रियांशस्तत्रैव संस्थितं वरवर्णिनी ५६
युद्धद्यूतञ्च व्यायामं विग्रहं फलमेव च
क्षत्रियाणामधिकारः कथितन्तु यथाक्रमम् ५७
गर्भाधानादितः कृत्वा अन्त्येष्टिञ्चाप्यपश्चिमम्
अधिकारन्तु विप्रस्य तव देवि उदाहृतम् ५८
आदौ संस्काराद्देवेशि चत्वारिंशत्तथैव च
अष्टाधिकञ्च विज्ञेयं संशोध्या देशिकेन तु ५९
ब्रह्मचारी द्विजो भूत्वा कर्तव्यन्तु यथाक्रमम्
पत्नीसम्योजनं कृत्वा यजेद्यज्ञान् स दक्षिणान् ६०
एवं संशोध्यमानन्तु पञ्चाशत्तन्नियोजयेत्
सूत्रेण गदितं पूर्वं तत्सर्वं तूर्णकारयेत् ६१
अविकल्पेन देवेशि देशिकेन्द्रेण धीमतः
पुरुषस्योपरिष्ठात्तु नित्या शोध्या तु देशिकैः ६२
द्विप्रकारासना शोध्या देशिकेन महात्मना
सुखपाशं दुःखपाशञ्च द्वयं शोध्यं समासतः ६३
रागं चरञ्च कान्तिश्च कालेन सह संयुतम्
विमलं संप्रवक्ष्यामि ज्ञानमार्गमतः परम् ६४
ओं वामदेव नमः । ओं भुव नमः । ओं शर्व नमः ।
ओं भवोद्भव नमः । ओं वज्रदेह नमः । ओं प्रभु नमः ।
ओं धाता नमः । ओं क्रमश नमः । ओं सुगेश नमः ।
विक्रमेश नमः ।
दशेते शङ्कराः प्रोक्ताः नीयत्या च सदा स्थिताः
दीक्षा काले तु सर्वे ते शोधनीया विपश्चितैः ६५
तत ऊर्ध्वं शिवादाय कालतत्वे व्यवस्थितः
काले तत्रैव विज्ञेया स्ते तु शोध्या विपश्चितैः ६६
ओं शुद्धनमः । ओं प्रबुद्ध नमः । ओं सुप्रबुद्ध नमः ।

ओं प्रशान्त नमः । ओं परौक्षर नमः । ओं व्यय नमः ।
ओं शिव नमः । ओं ध्रुवनमः । ओं क्षरनमः ।
दशैते तु समाख्याताः शोधनीया विदुर्बुधैः
अत ऊर्ध्वं हरिहरादयो रागतत्त्वे शोधनीयाः ६७
अत ऊर्ध्वं भवेच्छिष्याः कल्याणाद्या महातपाः
ओं कल्याण नमः । ओं पिङ्गल नमः । ओं भुव नमः ।
ओं वीर नमः । ओं प्रवर नमः । ओं मेधा नमः ।
अमस्ति ते नमः । ओं छेदक नमः । ++ क नमः ।
ओं शास्त्रकार नमः ।
दशैते गुरवो ज्ञेयाः विद्यातत्वे तु शोधयेत् ६८
कालरौद्रप्रवक्ष्यामि ये तु रुद्रा व्यवस्थिताः
वामो ज्येष्ठश्च रुद्रश्च तत्रैव परिकीर्तिताः ६९
ओं वाम नमः । ओं ज्येष्ठ नमः । ओं रुद्र नमः ।
एवं महादेवमन्त्रत्रयम्
गोपतिश्च तथोर्ध्वन्तु ग्रन्थिं हृदयसंस्थितः
असंख्यरुद्रकोटीभिः गोपतिः परिवारितः ७०
ओं गो पति नमः । अत ऊर्ध्वं संस्थितं विश्वम् ।
ओं त्रिकल नमः । ओं क्षेमेश नमः । ओं ब्रह्मण नमः ।
ओं अधिपते नमः । ओं शिव नमः ।
पञ्चैते तु समाख्याताश्शोधनीयाश्शिवाध्वरे
अत ऊर्ध्वमनन्तेश पाशाञ्चैव तु संस्थिताः ७१
पूर्वोक्ताश्चैव ये पापा उदमाहाद्यनुक्रमात्
ओं मद नमः । ओं मोह नमः । ओं शोष नमः ।
ओं वैचित्य नमः ।
एवमादिक्रमेणैव शोधनीयाश्शिवाध्वरे ७२
अत उपरि ऋषिकुलम् । ओं ऋषिकुलन्नमः । अतो

वागीश्वरी देवी । ओं वागीश्वरी नमः । अत ओङ्कारः
अतस्साध्योङ्कार ओं साध्योङ्कार नमः । अतो धातारः
ओं धातार नमः । ओं मनेश नमः । ओं ध्यानाहार
नमः । ओं भस्मेशाय नमः ।
एते मायोदरे शोधनीयास्सर्वेभ्येते विदुर्बुधाः
अत ऊर्ध्वं प्रमाणानि । ओं पञ्चार्थ नमः । ओं
शिवगुह्य नमः । ओं रुद्राङ्कुश नमः । ओं हृदय नमः
। ओं लक्षण नमः । ओं व्यूह नमः । ओं मादशि
नमः ।
प्रमाणाष्टकं संशोध्यं देशिकेन महात्मना ७३
तेषां वै उपरिष्टात्तु हुनेन्मायान्तु देशिकः
अतोपरि भवेद्विद्या सर्वविद्याभवारिणी ७४
अष्टधा भेदभिन्नां तु स्वभावात्परिकीर्तिता
नवभेदविहीनस्तु पुनरेव स उच्यते ७५
ओं वामे नमः । ओं ज्येष्ठे नमः । ओं रौद्री नमः ।
ओं काली नमः । ओं कलविकरणी नमः । ओं
बलविकरणी नमः । ओं बलप्रमथिनी । ओं
सर्वभूतदमनी नमः । विद्यातत्वे शोधनीयाः
अतोपरि स्थितं देवि ईश्वरं योगमीश्वरम्
अनन्तेशादयो वाऽपि यष्टव्यास्तु समाहितैः ७६
ओं अनन्तनमः । ओं सूक्ष्म नमः । ओं शिवोत्तम नमः
।
ओं एकनेत्र नमः । ओं एक रुद्र नमः । ओं त्रिमूर्ति
नमः । ओं श्रिकण्ठ नमः । ओं शिखण्डी नमः ।
ईश्वरतत्वे शोधनीयाः । अत ऊर्ध्वं रूपचतुष्टयम्
ओं धर्म नमः । ओं ज्ञान नमः । ओं वैराग्य नमः ।

ओं ऐश्वर्य नमः । रूपचतुष्टयम् । ओं वामे नमः ।
ओं ज्येष्ठे नमः । ओं रौद्री नमः । शक्तित्रयम् । अत
उपरिष्टात् शक्तिद्वयम् । ओं ज्ञानशक्तिर्नमः । ओं
क्रियाशक्तिर्नमः । अत उपरिष्ठात्
तेजीशश्च ध्रुवेशश्च प्रमाणत्वे प्रकीर्तिताः
ओं तेजीश नमः । ओं ध्रुवेश नमः ।
प्राणाध्वनि निष्ठानां दीक्षाज्ञानसमन्वितम् ७७
निर्वाणं परमं स्थानं कथितं तव सुव्रते ७७-२
उपरिष्ठात् प्रणवम् । ओं प्रणव नमः । अत उपरिष्टात्
ब्रह्मविष्णुरुद्रभुवनत्रयम् । ओं ब्रह्म नमः । ओं
विष्णु नमः । ओं रुद्र नमः । ओं प्रतोदन नमः ।
ओं मनव नमः । अतः परमतिक्रम्य एकाक्षरम् ।
ओमेकाक्षर नमः । ओं पिङ्ग नमः । ओं हंस नमः ।
सौम्यरुद्रत्रयम् ।
अत उपरिष्टाद्ध्रुवः । अत उपरिष्टात् रुद्रैकादश
संस्थानम् । ओं ब्रह्म नमः । ओमर्क नमः । ओं
दण्ड नमः । ओं मुण्ड नमः । ओं सौरभेय नमः ।
ओं मृत्युहर नमः । ओं प्रणीत नमः ।
ओं सुख नमः । ओं विजृंभित नमः । एकादश
रुद्राश्शोधनीयाः
दीक्षाकले तु ज्ञातव्या गलके संप्रतिष्ठिताः ७८
तृतीयन्तु ध्रुवं वक्ष्ये । ओं ध्रुव नमः ।
सप्तकोटि सहस्राणि परिवारे ध्रुवस्य तु
अतो निरञ्जनो देवः तस्य संख्या न विद्यते ७९
ओं निरञ्जन नमः । अत ऊर्ध्वं शक्तिः संशोध्या ।
ओं शक्ति नमः । अत उपरिष्टात् अष्टौ ते भुवनेश्वराः ।

ओं प्रीति नमः । ओं प्रमादित नमः । ओं प्रलंब नमः ।
ओं विष्णो नमः । ओं गहन नमः । ओं वितत नमः ।
अष्टौ ते भुवनेशाः । अत उपरिष्टद्धवस्समयः ।
यः क्षुद्रो विमलं शिवपञ्च कर्म । ओं प्रभव नमः ।
ओं रौद्र नमः । ओं विमल नमः । ओं शिव नमः ।
परतोऽन्य उद्धनो नाम दुर्भेद्यस्सर्वयोगिनाम्
अघन नमः ।
तस्योपरिष्ठाद्रुद्रोंकारः प्रकीर्तितः ८०
पुरतस्तालुतो देवो रुद्रोङ्कारः प्रकीर्तितः
एवमीश्वर एव तत्वम् । ओं रुद्रोङ्कार नमः ।
सदाशिवोष्टभेदेन भ्रुवोर्मध्ये व्यवस्थितः ८१
आसनं लक्षपत्राढ्यं पूर्णचन्द्रमिवोदितम्
तस्यासने स्थिता नित्यं चतस्रो योगशक्तयः ८२
ओं निवृत्ति नमः । ओं प्रतिष्ठा नमः । ओं विद्या नमः ।
ओं शान्ति नमः ।
अतोपरि भवेन्नादं किञ्जाल्कसमतेजसम्
पुरुषाख्यः सविज्ञेयः सर्वं व्याप्य व्यवस्थितः ८३
महत्पुरुषैव्याप्तं सूर्यकोटिसमप्रभैः
अण्डेऽस्मिन् कुरुते राज्यं शिवशक्त्या प्रचोदितः ८४
अतः सुषुम्ना विज्ञेयाः सार्वाध्वानसमाप्तये
नादब्रह्मबिले लीना पद्मसूत्रनिभा स्थिता ८५
ध्यातव्या योगिभिर्न्नित्यं तुषारकरणान्धुरः
अतोपरि महादेवि तेजश्शब्दमयं महत् ८६
अमृतस्येन्दुनिष्यन्दतेजोमृतवरो निधिः
स्वशक्तिकिरणो द्योत ज्योतयन्तं समासतः ८७
तस्य तेजोमहौघस्य सर्वे दीप्यन्ति शोभने

सा शक्तिः देवदेवस्य ध्यातव्या देशिकेन तु ८८
अन्तोपरि निरालंबं सर्वाध्वानविवर्जितम्
प्रक्रियान्तं महाज्ञानमनौपम्यमनामयम् ८९
एवं संशोध्यमध्वानं योजयेत्परमे पदे
विद्यातत्त्वास्पदं कृत्वा योजयेत्परमे पदे ९०
स्वदेहे प्रक्रियां ध्यात्वा पशुदेहे विशेषतः
यवं यवान्तरैकैकं संस्थिता भुवनानि तु ९१
प्रकृतिः पूर्वमाख्याता नाभ्यधस्तात्प्रतिष्ठिता
पुरुषं हृदि मध्यस्थं नियतिं पदबाह्यतः ९२
कालकण्ठमधस्तात्तु कलाविद्याक्रमेण तु
ज्ञातव्या देशिकेन्द्रेण दीक्षाकाले समाहितः ९२
तस्योपरि स्थिता माया ग्रन्थिस्थाने व्यवस्थिता
विद्याकण्ठप्रदेशे तु ज्ञातव्या देशिकेन तु ९३
ईश्वरं तालुमध्ये तु कथितं तव शोभने
सदाशिवस्तु मूर्धान्ते व्याख्यातत्वं पराजिते ९४
शान्त्यतीतेन देवेशि दद्यात्पूर्णाहुतिं क्रमात्
नवात्मकेन दातव्यं अथवा प्रणवेन तु ९५
परमाक्षरेण दातव्यं पूर्णाहुतिः शिवस्य तु
सर्वाध्वनस्समाप्तौ तु शिखाच्छेदन्तु कारयेत् ९६
शिखामन्त्रेण देवेशि कर्तरीमभिमन्त्रयेत्
तदेव मुद्रया गृह्य छेदयेच्च विचक्षणे ९७
अङ्गुल्या वा च चत्वारच्छेदनीया तु सुवृते
घृतेन संभृतां कृत्वा होमयेत विचक्षणः ९८
तां हुत्वा देशिकेन्द्रस्तु भस्मस्नानन्तु कारयेत्
उपस्पृश्याथ आचार्यः शुचीकृत्वा स्वकां तनुम् ९९
कृत्वा सर्वमशेषन्तु पूर्णाहुत्या तु पातयेत्

स्वनन्तं पशुतत्वेन एकीकृत्य विचक्षणः १००
योजयीत ततो मन्त्री पूर्वदृष्टेन कर्मणा
कलाध्वानं यथा ख्यातं प्रयोगं तादृशं कुरु १०१
युक्ते तु लक्षणं देवि मया पूर्वमुदाहृतम्
शिवधर्मे तु ये धर्माः भवन्ते साधकस्य तु १०२
देव्युवाच
मूर्तिस्त्रिविधमाख्याता त्वया देव पुरा मम
गृहणं केन वा तस्य एतदिच्छामि वेदितुम् १०३
ईश्वरः
आत्मपञ्चदश प्रोक्तो हंसाख्यं तेन भेदयेत्
गृहणमायतेनैव बिन्दुना सहितेन तु १०४
शिखया ताडयित्वा तु ग्राह्यसंहारमुद्रया
अधोमुखकरेणैव एकैकेन तु सुवृते १०५
गृह्णीयान्मन्त्रयुक्तेन शिवहस्तेन देशिकः
उत्तानेन तु देवेशि वामया तु नियोजयेत् १०६
एतत्ते कथितं देवि पशुग्रहणमोक्षणम्
कर्तव्यं देशिकेन्द्रेण विधिदृष्टेन कर्मणा १०७
देव्युवाच
अष्टत्रिंशत्कलैर्योगं यागञ्चैव महेश्वर
कथं तेषु स्थिता दीक्षा कथं योज्यस्तु देशिकैः १०८
केन वा गृहणं तस्य एतदिच्छामि वेदितुम्
ईश्वरः
कलायागं प्रवक्ष्यामि शृणुष्वावहिता प्रिये १०९
न मया कस्यचित् ख्यातं तत्ते वक्ष्यामि सुवृते
कलानाञ्चैव देवेशि यं यं योगं वदाम्यहम् ११०
कलया च तथा योगं कथयामि वरानने

कलापञ्च महेशस्य चत्वारो वदनस्य तु १११
पञ्चवक्त्रं समुद्दिष्टं सकलेन तु सुवृते
गर्भावरणमेतत्तु कथितं तव सुवृते ११२
मध्यपूर्वादियोगेन यावदुत्तरतः क्रमात्
आग्नेयवायुनैर्ऋत्या चतुर्धा पुरुषं न्यसेत् ११३
चतुर्दिक्षु च विन्यस्य पूर्वा दिवि दिशासु च
अघोरस्य कलाह्यष्टौ तान्तु विद्येशविन्यसेत् ११४
वामदेवकला या तु शृणु तस्या वदाम्यहम्
पूर्वादारभ्य कर्तव्यं कलानाञ्च निवेशनम् ११५
द्वे पूर्वे दक्षिणे द्वे तु पश्चिमेन तथैव च
उत्तरेण तु देवेशि पुनरेकां कलां न्यसेत् ११६
चतुर्दिक्षु उन्मनी यामप्रोक्तानां प्रवरा कला
शिवस्य परमा ह्येषा देहे तु परिकल्पयेत् ११७
सद्योजातकलाह्यष्टौ चतुर्धा कारणे न्यसेत्
अष्टौ दिशासु प्रणवे तु देवेशि विन्यसेन्नव शक्तयः ११८
धर्मज्ञानञ्च वैराग्यं विन्यसेत्तु यथाक्रमम्
अनन्तपद्मं तेनैव कल्पयेद्वरवर्णिनी ११९
तेनैव मूर्तिसंयोगं कर्तव्यं देशिकेन तु
ब्रह्मोङ्कारेण कर्तव्यं आत्मतत्त्वन्तु बुद्धिमान् १२०
उन्मनीहासनं तस्य कल्पयेद्वरवर्णिनी
निद्रागारन्तु देवेशि विद्यातत्वे तु विन्यसेत् १२१
ईशानस्य कला ह्येते चतुर्धा तु वरानने
आसनं तस्य कर्तव्यं रुद्रोङ्कारः सदेशिकैः १२२
निधनोङ्कारन्तु यत्प्रोक्तं शिवतत्त्वं तेन कारयेत्
पञ्चमी च कला या तु ईशानस्य महेश्वरी १२३
पञ्चमूर्धानमीशानञ्चत्वारो वदनस्य तु

पञ्च वक्त्रम्
आसनं कारयेत्तेन निधनस्य न संशयः १२४
मूर्तिन्यासं कृता देवि कलैः सर्वैः पुनः क्रमात्
सकलीकृत्य चात्मानं वाहयेत्परमाक्षरम् १२५
एवन्तु निष्कलो देवि भवते नात्र संशयः
पञ्चधा प्रणवं तस्य कल्पयीत यथाक्रमम् १२६
हृदि मूर्ध्नि शिखायान्तु कवचास्त्रक्रमेण तु
सद्यवामकला यन्तं न्यसेत् सर्वत्र देशिकः १२७
प्रणवेन तु कर्तव्यमात्मतत्वे तु ये स्थिताः
गन्धपुष्पं तथा दीपं बलो बलिनिवेदनम् १२८
रुद्रोङ्कारेण विद्याख्ये रूपवर्णकलानां शिव
+++++++ ताः कला निधनेन शिवान्तिकम् १२९
एवं यष्ट्वा तु विधिना ततो दीक्षान्तु कारयेत्
सद्योजातकलात्वेन वागीश्वर्यां प्रकल्पयेत् १३०
तेनैव योजयेत्तत्र हुनेत्तेनैव तानि च
अध्वानं भुवनाख्यञ्च आहुतीं तावतीं हुनेत् १३१
ग्रहणे ताडने चैव उत्क्षेपे च नियोजयेत्
विशेषकरणे चैव प्रतियोज्य कले कले १३२
अन्ते पूर्णाहुतिं दद्यात् एष एव विधि स्मृतः
नवात्मकेन देवेशे शान्त्यतीतेन वाऽथवा १३३
परमाक्षरेण दातव्याः पूर्णाहुत्यः क्रमेण तु
पूर्वं कला स्थाप्य ततो वागीश्वरीं न्यसेत् १३४
+++ शेषं भवनविकलेस्तत्वानि संशोध्याः
कलैरेकैरथापि वा
कलाध्वानं यथा शोध्यं देशिकैः सुसमाहितैः १३५
आसनं या कला प्रोक्ता न योज्याह्यासनेन ताः

प्रणवैकस्मृतस्तत्र त्रयाणां वरवर्णिनी १३६
कलैस्तत्त्वा यदा शोध्या पृथिव्यादिरनुक्रमात्
तस्य वक्ष्याम्यहं देवि तदेकाग्रमनाः शृणु १३७
तत्वे तत्वे शतं जुहुयात् पृथिव्यादिरनुक्रमात्
प्रकृत्यन्ते तु देवेशि हुनेत्तत्र शतं शतम् १३८
सन्यस्य कथितं ह्येतत् कला या परिकीर्तिताः
एकैककलया देवि तत्त्वेकैकन्तु होमयेत् १३९
विशेषं किञ्च वक्ष्यामि वामदेवस्य तां शृणु
पुरुषमादितः कृत्वा गृध्यन्ते तु समासतः १४०
तत्वे तत्वे तु होतव्यं कला वामद्वयं द्वयम्
कलैकेन तु देवेशि जुहुयादाहुतीश्शतम् १४१
एषा देवि समाख्याता कला वामस्य शोभने
मायाऽविद्या च होतव्या अघोरस्य कलैर्बुधः १४२
एकैकेन तु होतव्यमाहुत्या पञ्चविंशकम्
ईश्वरन्नैव देवेशि तथा तत्वं सदाशिवम् १४३
पुरुषस्य कलेनैव होतव्यं सुसमाहितैः
आहुतीनाञ्च पञ्चाशन्मेकैकेन तु होमयेत् १४४
विंशविंशतिहोमेन ईशानस्य कलेन तु
शिवतत्वन्तु होतव्यं देशिकेन महात्मना १४५
सांप्रतं शते शते पूर्णाहुति ++++
द्विकलेन तु देवेशि वामे पूर्णाहुति स्मृता १४६
पुनरेव कलैकेन वामे पूर्णाहुति स्मृता
चतुष्कले ह्यघोरस्य पूर्णाहुत्याश्शिवस्य तु १४७
दातव्या देशिकेन्द्रेण पुरुषस्य तथैव च
ईशानकलापञ्चेन हुनेत वरवर्णिनी १४८
पूर्णाहुत्या तु दातव्या देशिकेन महात्मना

योजने करणं यच्च मया पूर्वमुदाहृतम् १४९
तत्त्वया विदितं देवि विभू यः किं कथयामि ते
एतद्देवि समाख्यातं कलाध्वानमशेषतः १५०
द्विप्रकारेण देवेशि ज्ञातव्यं देशिकेन तु
भुवनाध्वा कलाध्वा च कथितस्तु समासतः १५१
कथितं देवदेवेशि ज्ञातव्यं देशिकेन तु
एवं दीक्षासमाप्तौ तु आचार्यः सुसमाहितः १५२
विसर्जयित्वा देवेशि तत्र चण्डेश्वरं यजेत्
अपरेऽहनि देवेशि यजेच्चण्डेश्वरं प्रभुम् १५३
पञ्चाङ्गेन समायुक्तमर्धचन्द्रपुरोत्तमे
मन्त्राः पूर्वं मया ख्याताः आदिसूत्रे वरानने १५४
एकेनावरणेनैव पूजयित्वा विचक्षणः
मण्डले तर्पणं कृत्वा हुनेदष्टशतं क्रमात् १५५
एवं हुनेत्ततो देवि चण्डेशाय महे++
पुटे पूर्वोक्तविषयाद्रव्यन्नास्ति श्लोकप्रक्षेपः दृश्यते
++++++++++++++ प्रयोजयेत् १५५
द्वितीयावरणे चैव विद्याङ्गैश्च यजेत्पुनः
++++++++++ सर्वगर्भमुक्त्वा वरानने १५६
सर्वावरणा बाह्या विज्ञेयास्तु वरानने
एतत्ते पदचक्रन्तु तव देवि उदाहृतम् १५७
प्रथमं शिवगर्भन्तु द्वितीयं चक्रवर्तिनाम्
तृतीये तु महादेवि वायव्या वरणान्यसेत् १५८
चतुर्थन्तु गणेशानामाग्नेय्यां तदनन्तरम्
षष्ठन्तु लोकपालानां माहेन्द्रं सप्तमं स्मृतम् १५९
दशमो नव तत्त्वास्तु विन्यसेत यथाक्रमम्
विद्याङ्गरेखतो दद्याद्बाह्यतः परमेश्वरि १६०

पूर्वादिक्रमयोगेन विन्यसेत यथाक्रमम्
अष्टैकैकपदा ये तु ते तु स्तोत्रमुदाहृतम्  १६१
गर्भादारभ्य होतव्याः सर्वे तु क्रमशः प्रिये
आसनादिविधिं कृत्वा तदारम्भ्य वा पुनः  १६२
बाह्याः प्रतिषु दिक्ष्वष्ट स्वष्टौ योन्या पदो प्रिये
शतं शतञ्च होतव्यं शुध्यते नात्र संशयः  १६३
पूर्णाहुत्या तु दातव्या शिवेन वरवर्णिनी
एकाशीति पदञ्चैव पूर्वमेव उदाहृतम्  १६४
भद्रकं यजनं वक्ष्ये शृणु देवि यथाक्रमम्
पूर्वोक्ते भूप्रदेशे तु तुषकेशास्थिवर्जिते  १६५
सुसमे भूप्रदेशे तु निम्नोन्नतविवर्जिते
प्रागुदक्प्लवने देशे सूत्रयेद्भुवनं शुभम्  १६६
चतुर्विं शति हस्तानि क्षेत्रमानं प्रकीर्तितम्
सूत्रयित्वा यथान्यायं नव भागेन भाजयेत्  १६७
मध्यमं नव भागेन पुनरत्रैव सूत्रयेत्
नव भागविभक्तेषु भागार्धन्तु विवर्जयेत्  १६८
द्वात्रिंशदङ्गुलं पद्मं विधिद्वात्रिंशदङ्गुला
चतुर्विधिसमायुक्तमष्टद्वारोपशोभितम्  १६९
द्वारपूर्वं मया ख्यातं तन्मानेनैव कारयेत्
यथा मध्यं तथा सर्वे कर्तव्यं देशिकैः सदा  १७०
रेखापद्मस्य देवेशे परिधेयच्छदन्तरम्
षोडशाङ्गुलमित्याहुः रेखापद्मस्य चा++क्तम्  १७१
परिधेश्च न सन्देहः कर्तव्यं देशिकेन तु
शिवाङ्गाच्छृणु देवेशि कथयामि निबोध मे  १७२
ओं सर्वव्यपिने नमः । ओं व्योमरूपाय नमः ।
ओमनन्ताय नमः । ओमनाथाय नमः । ओमनाश्रिताय

नमः ।
शिवाङ्गाः परिकीर्तिताः । ओं ध्रुवाय नमः । ओं
शाश्वताय नमः । ओं योगपीठसंस्थिताय नमः ।
ओं नित्ययोगिने नमः । ओं ध्यानाहाराय नमः ।
विद्याङ्गाः परिकीर्तिताः ।
पदब्रह्मा तु देवेशि अङ्गे पूर्वमूदाहृतम्
ज्ञातव्यं देशिकेनैव दीक्षाकाले न संशयः १७३
ओं उन्नमः । ओं व्योमव्यापिने नमः । ओं व्योमरूपाय
नमः । ओं सर्वव्यापिने नमः । ओं शिवाय नमः ।
ओमनन्ताय नमः । ओमनाथाय नमः । ओमनाश्रिताय
नमः । ओं ध्रुवाय नमः ।
प्रथमं शिवगर्भे तु न्यसेदेतदुदाहृतम्
ओं शाश्वताय नमः । ओं योगपीठसंस्थिताय नमः ।
ओं नित्ययोगिनः । ओं ध्यानाहाराय नमः । ओं
ओन्नमः । ओं शिवाय नमः । ओं सर्वप्रभवे नमः
। ओं शिवाय नमः । ओमीशानमूर्धाय नमः । ओं
तत्पुरुषवक्त्राय नमः ।
विद्येशावरणं ह्येतत् द्वितीयं परिकीर्तितम् १७४
ओं अघोरहृदयाय नमः । ओं वामदेवगुह्याय नमः ।
ओं सद्योजातमूर्तये नमः । ओं ओन्नमो नमः । ओं
गुह्यातिगुह्याय नमः । ओं गोप्त्रे नमः । ओं
अनिधननिधनाय नमः ।
ओन्निधनाय नमः
तृतीयावरणं देवि देवाद्यानां प्रकीर्तितम्
ओं सर्वविद्याधिपाय नमः । ओं ज्योतीरूपाय नमः ।
ओं परमेश्वरपराय नमः । ओं चेतन नमः । ओमचेतन

नमः ।
ओं व्योमिन् व्योमिन् नमः । ओं व्यापिन् व्यापिन्नमः ।
ओं रूपिन् रूपिन्नमः । ओं प्रथम प्रथम नमः । ओं
तेजस्तेज नमः ।
चतुर्थे तु गणेशानामावरणं परिकीर्तितम् १७५
ओं ज्योतिर्ज्योतिन्नमः । ओमरूप नमः । ओमग्नि नमः ।
ओं मधु नमः । ओं भस्म नमः । ओमनादि नमः ।
ओन्नाना नमः । ओन्धुधूधुधू नमः । ओं भूर्नमः ।
आग्नेयावरणं ह्येतत् योगाद्यानामुदाहृतम् । ओं भुवर्नमः
। ओं स्वर्नमः । ओमनिधन नमः । ओन्निधनोद्भव
नमः । ओं शिव नमः । ओं सर्व नमः । ओं
परमात्मन्नमः । ओं महेश्वर नमः ।
षष्ठं वै लोकपालानामावृतं परिकीर्तितम् १७५-२
ओं महादेव नमः । ओं सद्भावेश्वर नमः । ओं
महातेज नमः । ओं योगाधिपते नमः । ओं मुञ्च मुञ्च
मुञ्च नमः ।
ओं प्रथम प्रथम नमः । ओं शर्व शर्व नमः । ओं भव
भव नमः ।
ओं भवोद्भव नमः ।
सप्तमं महेन्द्रावरणं ताराद्यानां प्रकीर्तितम् १७६
ओं सर्वभूतसुखप्रद नमः । ओं सर्व सन्निध्यकर नमः ।
ओं ब्रह्मविष्णुरुद्रपर नमः । ओंअनर्चितानर्चित नमः ।
ओं संस्कृतासंस्कृत नमः । ओं पूर्वस्थित पूर्वस्थित नमः ।
ओं साक्षि साक्षि नमः । ओं तुरु तुरु नमः । ओं पतङ्ग
पतङ्ग नमः । ओं पिङ्गपिङ्ग नमः ।
अष्टमं लोकपालास्त्रावरणं समुदाहृतम् १७६-२

ओं शब्दशब्द नमः । ओं सूक्ष्म सूक्ष्म नमः । ओं शिव नमः ।
ओं शर्व नमः । ओं सर्व नमः । ओमोन्नमो नमः ।
ओमों शिवाय नमो नमः । ओं ओन्नमः ।
नवमावरणं ह्येतत् अंभाद्यानां प्रकीर्तितम् १७७
दशमे नव तत्वान्नि विन्यसेत यथाक्रमम्
ओं ऊन्नमः । ओं यन्नमः । ओं लन्नमः । ओमन्नमः ।
ओं क्षन्नमः । ओं रन्नमः । ओं हन्नमः । ओं प्रसन्नमूर्तये नमः । नवमं मध्ये विन्यसेत् ।
विद्याङ्गा रेखतो दद्यादैश्वर्यास्ते प्रकीर्तिताः १७८
ओं सर्वात्मने पराय परमेश्वराय योगाधिपाय योगसंभवाय करदः करदसद्यः भवोद्भवाः वामदेवसर्वकार्यप्रशमनमं सदाशिव प्रसन्न नमो नमः । सर्वात्मदेहहृदयम् ।
ओं सुशिव नमः । ओं सुशिव देवशिरः ।
ओंशिवहृदय ज्वालिनी नमः । ज्वालिनी शिखा
शिवात्मकं महातेजः सर्वज्ञं प्रभुमव्ययम् ।
आवर्तयेन्महाघोरं कवचं पिङ्गलं शुभम् १७८-२
आयाहि पिङ्गल महारव च शिवाज्ञया हृदयं बन्ध बन्ध प्रज्वल प्रज्वल व्याघूर्ण ककृस्तक्ष्मः । वज्रघर वज्रपाश वज्रशक्तिश्चन्द्राशरीर मम हृदयमनुप्रविश्य सर्वदुष्टास्तंभय हुंफरणमः । पिङ्गलो नाम यः कवचः ओंकारबन्धं हुंफट् कव हृदयम् । ओं प्रस्फुर प्रस्फुर घोर घोरतर तनुरूप चट चट प्रचट प्रचट कह कह वं वं घातय घातय हुंफट् अघोरास्त्रं ।
ओं ओं अघोरशिवाय हुंफट् ।
अघोरास्त्रं हृदयम् । ओं व्यामव्यापिने व्योमरूपाय

सर्वव्यापिने शिवाय अनन्ताय अनाथाय अनाश्रिताय ध्रुवाय शाश्वताय योगपीठसंस्थिताय नित्ययोगिने ध्याताहाराय । ओन्नमश्शिवाय सर्वप्रभवे शिवाय ईशानमूर्धाय तत्पुरुषवक्त्राय अघोरहृदयाय वामदेव गुह्याय सद्योजातमूर्तये ओन्नमो नमः ।
गुह्यातिगुह्याय गोप्त्रे अनिधनाय सर्वयोगाधिकृताय सर्वाऽविद्याधिपतये ज्योतीरूपाय परमेश्वरपराय अचेतनाचेतनव्योमिन् व्यापिन् व्यापिन् अरूपिन्नरूपिन् प्रथमप्रथमः तेजस्तेजः ज्योतिर्ज्योतिः अरूप अनग्नि अधूम अभस्म अनादि नाना नाना धूधू धूधू ओं भूः ओं भुवः ओं सुवः । अनिधननिधन निधनोद्भव शिवसर्वपरमात्मन् महेश्वर महादेव सद्भावेश्वर महातेज योगाधिपते मुञ्च मुञ्च प्रथम प्रथम शर्व शर्व भव भव भवोद्भव सर्वभूतसुखप्रद सर्वसान्निध्यकर ब्रह्मविष्णुरुद्रपर अनर्चितानर्चित पर असंस्कृता संस्कृत पूर्वस्थित पूर्वस्थित साक्षि साक्षि तरु तरु पतङ्ग पतङ्ग पिङ्ग पिङ्ग ज्ञान ज्ञान शब्द शब्द सूक्ष्म सूक्ष्म शिव सर्व सर्वद । ओन्नमो नम ।
ओन्नमः । ओं शिवाय नमो नमः । परं महानाथ शिवभट्टरकः । ओं सद्योजातं प्रपद्यामि सद्योजाताय वै नमः । भवेनाति भवे भजस्वमां भवोद्भवाय नमः । सद्यः वामदेवाय नमोज्येष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलप्रमथनाय नमस्सर्वभूतदमनायनमो मनोन्मनाय नमः ।
ओं अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः

सर्वतस्सर्वसर्वेभ्यो नमस्तेऽस्तु रुद्ररूपेभ्यः । अघोरः ।
ओं तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः
प्रदोचयात् । तत्पुरुषः । ओं ईशानस्सर्वभूतामीश्वरस-
सर्वभूतानां ब्रह्माधिपतिः ब्रह्मणोऽधिपतिः ब्रह्मा शिवो
मेऽस्तु सदा शिवोम् । ईशानः । ओं तन्महेशाय
विद्महे वाग्विशुद्धाय धीमहि । तन्नश्शिवः प्रचोदयात् ।
शिवात्मकमिदं सर्वं शिवादेव प्रवर्तते १७९
शिवाय शिवगर्भाय शिवस्सर्वः प्रचोदयात्
ओं शं ईं ऊं व्योमव्यापिने ओं ओं प्रशान्ताय नमः ।
ओं प्रणवात्मने नमः । ओं हुं शिवाय नमः । ओं
हुन्नमः । ओं फरणमः । ओं जुन्नमः ।
वर्णास्थे यजनं प्रोक्तं शिवाय परमात्मने १८०
ओं सद्योजातं प्रपद्यामि नमः । ओं सद्योजाताय वै नमः ।
ओं भवे नमः । ओं अभवे नमः । ओं अनादि भवे
नमः ।
ओं भजस्व मान्नमः । ओं भव नमः । ओं उद्भवाय
नमः ।
नमः ओं वामदेवाय नमो नमः । ओं ज्येष्ठाय नमो नमः ।
ओं रुद्राय नमो नमः । ओं कालाय नमो नमः । ओं
कल नमः ।
ओं विकरणाय नमो नमः । ओं बल नमः । ओं
विकरणाय नमो नमः । ओं बल नमः । ओं प्रमथनाय
नमो नमः । ओं सर्वभूतदमनाय नमो नमः । ओं
मनन नमः । ओं उन्मनाय नमो नमः । ओं अघोरेभ्यो
नमः । ओमथ घोरेभ्यो नमः । ओं घोर नमः । ओं
घोरतरेभ्यो नमः । ओं सर्वतो नमः । ओं शर्वसर्वेभ्यो

नमः । ओन्नमस्ते अस्तु रुद्र नमः । ओं रूपेभ्यो नमः
। ओं तत्पुरुषाय विद्महे नमः । ओं महादेवाय धीमहे
नमः । ओं तन्नो रुद्र नमः । ओं प्रचोदयान्नमः । ओं
ईशानस्सर्वविद्यानान्नमः । ओं ईश्वरस्सर्वभूतानान्नमः ।
ओं ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा नमः । ओं शिवो
मेऽस्तु नमः । ओं सदाशिवोन्नमः ।
एकैकन्तु पदं योज्य एकैकन्तु पदं हुनेत् १८१
एकैकपदपीठे तु नव तत्वं प्रकल्पयेत्
एकैकपदपीठेन दीक्षां निर्वाणगामिनीम् १८२
एकैकपदपत्रस्य हुनेद्देवि शतं शतम्
मण्डलतर्पणं कृत्वा हुनेदेकादशात्मकम् १८३
पूर्णाहुत्यः क्रमेणैव दातव्या अनुपूर्वशः
एकामतिपदञ्चैव हुत्वा संशोध्य चाध्वरम् १८४
पुनः संक्षेपतो देवि शृणुष्व कथयामि ते
आवाहरोधसान्निध्यं पदैकैकन्तु शुध्यति १८५
पीठे पीठे पदा देवि नव एव प्रकल्पयेत्
दशभिर्दशभिराहुतीभिः पीठशुद्धिं न संशयः १८६
एवं समाप्यते दीक्षा पदचक्रेण सुवृते
सर्वसंहितसामान्यं विधिमेतत्समाचरेत् १८७
एतद्देवि समाख्यातं पदयागननुत्तमम्
सर्वसंहितसामान्यं सर्वतन्त्रेषु कीर्तितम् १८८
विद्याराजाधिराजेशान्यष्ट्वामोक्षमवाप्नुयात्
पुनरन्यं प्रवक्ष्यामि मन्त्रसारं सुगुह्यकम् १८९
येन विज्ञातमात्रेण परां सिद्धिमवाप्नुयात्
त्र्यक्षन्दशभुजन्देवं मया पूर्वमुदाहृतम् १९०
तदहं संप्रवक्ष्यामि तदेकाग्रमनाः शृणु

पद्मासनोपविष्टन्तु द्योतयन्तं समन्ततः १९१
पञ्चवक्त्रधरं देवं कर्णिकस्योपरि स्थितम्
तत्र स्थं शक्तिमध्यस्थमादित्योदय सन्निभम् १९२
क्वचिदिन्द्रनिभञ्चैव क्वचिन्मरकसन्निभम्
क्वचिद्रससुसङ्घातं सूर्यकोटिसमप्रभम् १९३
द्योतयन्तं स्थितं देवं प्राणाङ्गुष्ठसन्निभम्
निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिस्तथैव च १९४
मण्डलत्रयम्
अमृतमण्डदशभुजो देवो शान्त्य ++ ता शिवः
आसनं तस्य देवस्य द्योतयन्ति समन्ततः १९५
शिखादीपशिखाकारा तालुं भित्वा विनिर्जिता
तस्यान्ते परतो देवि शक्तिस्तु परिकीर्तिता १९६
प्रक्रियान्तं स विज्ञेयं तद्भित्वा योजयेत्परे
छित्वात्मस्थं पशुं कृत्वा तदा योज्येत सुवृते १९७
कालं भ्रूक्षेपमात्रन्तु तत्वं ज्ञात्वा तु योजयेत्
एष देवि समाख्यात आत्मा तु परमेश्वरि १९८
एवं यः पश्यतात्मानं स मुच्यति न संशयः
मोचयेच्च न सन्देहः पद्मं दृष्ट्वा परे शिवे १९९
अदृष्ट्वा तु न सिध्येत न च नेता परं पदम्
तस्माद्यत्नपरेनैव द्ध्यातव्यो योगिभिस्सदा २००
हृत्कर्णिकास्थमात्मानं कृत्वा ध्यायीत योगवित्
स्वस्थानावस्थितं देशं सर्वं पश्यति योगिनः २०१
योजनानां शतं देवि पश्यते नात्र संशयः
पत्रे पत्रे यथान्यासं कथयामि महेश्वरि २०२
पूर्वपत्रञ्च आग्नेयमीशानार्द्धे तथैव च
अर्धार्धपत्रयोगेन पूर्वदेशं स पश्यति २०३

ईशानस्यैव चार्धेन वायव्यस्य च सुवृते
उत्तरेण च पत्रेण पश्यतेभ्युत्तरं पथम् २०४
पश्चिमं पत्रमेकन्तु वायव्यार्धेन शोभने
नैर्ऋृत्यार्धेन योगीन्द्रः पश्चाद्देशन्निरीक्षयेत् २०५
नैर्ऋृत्यार्धेन देवेशि समस्तं दक्षिणेन तु
आग्नेयस्यैव चार्धेन दक्षिणापथ पश्यति २०६
पत्रैरेव तु चत्वारः पार्श्वकेन तु सुवृते
द्वितीये तापनीप्रोक्ता प्रतिदेशन्तु तां विदुः २०७
एवं सर्वेषु तत्वेषु ज्ञातव्यं तत्त्ववेदिनाम्
आत्मानं सुषिरं कृत्वा देशान् कृत्वा तु मध्यतः २०८
अनन्तरूपमात्मानं कृत्वा पश्यति नान्यथा
सरित्समुद्रनदयस्सर्वेऽभ्यन्तरी कृताः २०९
पश्यते नात्र सन्देहो योगी योगेन संस्थितः
तत्वरूपं समाख्यातं ते तु या विदिताः पुरा २१०
तां दृष्ट्यामादिशेत्सर्वं भवते नात्र संशयः
मेरुं तत्कर्णिकां कृत्वा त्रैलोक्यं पश्यते तदा २११
कथयेत्सर्ववृत्तान्तं नात्र कार्या विचारणा
एतद्देवि मया ख्यातं योगसद्भावमुत्तमम् २१२
पश्यते योगयुक्तस्तु त्रिभिर्मासैः न संशयः
षण्मासाद्योगयुक्तस्तु सर्वं पश्यति नान्यथा २१३
संवत्सरेण युक्तात्मा दिव्यादिव्यां स पश्यति
देवैश्च समतां याति भुवनानि यथाक्रमम् २१४
एवं ध्यात्वा जपेद्यस्तु साधकस्सुसमाहितः
सिध्यते नात्र सन्देहो निर्विघ्नस्साधकेश्वरः २१५
अनेन विधिना युक्तो योगी यः परमेश्वरि
स सिद्धिं लभते क्षिप्रं नात्र कार्या विचारणा २१६

विजयं पूर्वपत्रे तु आग्नेय्यां शत्रुनाशनम्
शान्तिदं दक्षिणे पत्रे नैर्ऋते चैव मारणम् २१७
श्रियमिच्छति वारुण्यां नाशार्थे वायवे दिशि
उत्तरं धनमिच्छद्भिः ईशान्यां ज्ञानमिच्छता २१८
मृत्युञ्जयेषिणां नित्यं ऊर्ध्वं गोक्षीरसन्निभम्
ध्यातव्यं देवदेवेशि मृत्युदुःखैर्न पीड्यते २१९
अधस्तान्नयते देवि नरश्रेष्ठनराधमम्
एवं ज्ञात्वा वरारोहे नयते नात्र संशयः २२०
देव्युवाच
ऊर्ध्वं व्याह ते देवेशि शिख्या तस्य अनौपमा
तस्याहं श्रोतुमिच्छामि भगवन् वक्तुमर्हसि २२१
कथं केन च रूपेण शिखा तस्य फलप्रदा
अधस्तात्तु कथं देव नयते पापकर्मणः २२२
कथं प्रत्यक्षतो देहे पश्यन्ते योगिनः प्रभो
मुद्रायोगविधानञ्च कथयस्व प्रसादतः २२३
ईश्वरः
शृणु देवि प्रवक्ष्यामि शिखाभेदमनुत्तमम्
ह्येन विज्ञातमात्रेण सिध्यन्ते साधको भुवि २२४
गारुडे भूततन्त्रे च भगिनीनां तथैव च
शैवज्ञानं परे दिव्ये शिखाकर्म मनोरमम् २२५
शुक्लगोक्षीरसंकाशा शङ्खकुन्देन्दुसन्निभा
शिखा मृत्युञ्जयार्थाय ध्यातव्या योगिभिस्सदा २२६
मेघधारानिपातेन पूरयन्ति समन्ततः
आचार्यते जगत्सर्वं विषग्रहविनाशयेत् २२७
तृप्तिश्च कुरुते नित्यं मन्त्र ध्यानमेव च
न च स्रोतो विभागेन स्रवन्ति यदि पश्यति २२८

क्षणादाप्यायनं कुर्यान्नात्र कार्या विचारणा
रकवर्णशिखाध्यानं कृत्वा योगी यदा भवेत् २२९
तथा ते कथयिष्यामि तदेकाग्रमनाः शृणु
वशीकरणमावेशं मारणं शोषणं तथा २३०
विषापहारनिर्वाण निर्बीजकरणं यतः
अनाग्निज्वलनञ्चैव मूर्च्छकं पावनं तथा २३१
रक्तवर्णधरेणैव एष ते समुदाहृतः
पीतवर्णाधरेणैव शृणु वक्ष्यामि सुवृते २३२
ध्यानेन सिद्धिमाप्नोति धनधान्यफलप्रदाम्
स्तंभयेत्पृथिवीं सर्वां त्रैलोक्यं स चराचरम् २३३
कृष्णवर्णशिखायान्तु शृणु वक्ष्यामि सुवृते
उच्चाटनन्तु विद्वेष करणं मोचनं तथा २३४
विषसङ्क्रमणञ्चैव मूकत्वञ्च न संशयः
स्तंभनं सर्वतत्वानां विषयस्य च न संशयः २३५
सर्वं स सिध्यते तस्य शिखायोगविदं प्रिये
शिखया रहितं कर्म नैव सिध्यति साधकैः २३६
वायव्या तु कृष्णवर्णा तु रक्ताग्नेयी च सुवृते
पीता महेन्द्री विज्ञेया शुक्ला वारुणि उच्यते २३७
कृष्णं रक्तं सितं पीतं स्फटिकाभञ्च सुवृते
सर्वकर्मकरञ्चैव शिखाकर्मविदस्सदा २३८
शिखायोगमिदं देवि कथितं तव सुवृते
सर्वतन्त्रेषु सामान्यतन्त्रसिद्धिर्न संशयः २३९
शिखया रहितां देवि यस्सिद्धिमभिकाङ्क्षति
हनते मुष्टिनाकाशं पिबते मृगतृष्णिकाम् २४०
पञ्चात्मकमिदं देवि यो वेत्ति तत्तु सिध्यति
दीक्षासंरोधनं वक्ष्ये तदेकाग्रमना शृणु २४१

दुविदग्धे शठे क्रूरे अन्यायपथवर्तिने
तस्य देवि इदं कुर्यान्नास्यैव कदाचन २४२
परतत्त्वात्तदाकृष्य स्वेनतत्वेन देशिकः
पञ्च पञ्चभिराहुत्या नीयते यत्र रोचते २४३
ततस्थाप्यवराचार्यो क्षितिराच्छाद्यचोपरि
तिष्ठते तत्र दुष्टात्मा लङ्घने यस्तु देशिकः २४४
यस्मिन् योजयते स्थाने तद्दुःखमनुभुञ्जति
सिद्धिरोधं प्रवक्ष्यामि शृणु देवि यथा भवेत् २४५
वायुचक्रे तुलं स्थाप्य यत्तस्य सिद्धिसाधके
माहेन्द्रेण तु सञ्छाद्य क्षितिरूपधरेण तु २४६
एवं संस्तंभितो देवि तिष्ठते नात्र संशयः
प्रत्यक्षं योगिनाञ्चैव यथा भवति तच्छृणु २४७
यस्मिन् काले तु यो योगः सेवितव्यो हि योगिभिः
तदहं संप्रवक्ष्यामि शृणु देवि समासतः २४८
घटिकासत्रिभागेन गतेन वरवर्णिनी
यावत्त्रीणयोपविष्टात्तु तावत्कालं समभ्यसेत् २४९
सुहृष्टं तल्लक्षपरं पुरक्षेण निमीलयेत्
पश्यते तस्य मध्ये तु कंपमानां वरानने २५०
तदेव सदृशं लक्षं पश्यते नात्र संशयः
प्रथमे कांसनीलान्तु पश्यन्ते योगिनस्सदा २५१
रक्तां पीतां सिताञ्चैव तत्तुल्यसमतेजसा
एकलक्षं निमीलेत तस्य लक्षस्य पश्यताम् २५२
रथचक्रसमाकारं पश्य देवि परं महत्
तं दृष्ट्वा योगिनः साक्षात् भिन्नदेशे विशेच्छिवम् २५३
असंशयेन देवेशि सादाख्यं पदमाप्नुयात्
स एव लक्षमात्मानं विद्यते पश्यते द्ध्रुवम् २५४

अभ्यासेन तु देवेशे तत्तुल्यसमतां व्रजेत्
एवं योगवरस्यैव प्रत्ययं कथयामि ते २५५
मृते तु विलिखेत् पद्ममधुमेलं हुताशनः
कंपते दुःखमादेशं कुरुते योगिनः प्रिये २५६
इन्दोलकमिवाभाति महाक्लेशेन जीवति
वश्यमेति शिखा देवि यत्र काले तु योगिनः २५७
यस्मिन् दिशि शिखाऽयाति तस्मिन् सिद्धिं विनिर्दिशेत्
अविकल्पेन देवेशि पश्यते नात्र संशयः २५८
हृदिस्थन्तु यदा पश्येत् शिखायोगमनुत्तमम्
वायुहंससमायुक्तं षष्ठस्वरसमन्वितम् २५९
नादान्तिम बीजेन +++++
पश्यते नात्र सन्देहो बिन्दुनादसमन्वितम् २६०
तदा उद्योतमया पक्षस्याभ्यन्तरेण तु
हृल्लक्षन्तु यदा दृष्टं योगिनेन वरानने २६१
तदा वै कर्णदेशे तु लक्षं कुर्यात्तु योगिभिः
वायुवर्णा परित्यज्य ऊ बिन्दुशिखयान्वितम् २६२
शिरस्थानं यदा गच्छेद्योगिनस्सुसमाहितः
सर्वस्वरविनिर्मुक्त र वर्णकलसंयुतम् २६३
शिरस्थानं यदा तु ++ ज्व मूर्ध्निस्थानं समाश्रयेत्
तदा बिन्दुविनिर्मुक्तं शिखा संपरिकीर्तिता २६४
शिखातीता पराशक्तिः शक्त्यतीतः परश्शिवः
वायव्यस्य पदाख्यातां आग्नेयञ्चैव तत्तथा २६५
माहेन्द्रं वारुणञ्चैव एवमेव न संशयः
पञ्चमं सर्वयोगस्य आधारं परिकीर्तितम् २६६
चिति स्वरूपविज्ञानं चित्स्वभावः परश्शिवः
स्वयं निष्क्रमते ह्येकं तत ज्ञानं ससुरासुरैः २६७

द्वितीयं तत्स्वरूपन्तु दुर्विज्ञेयं सुरैरपि
सर्वथा ख्यापितं ज्ञानं सर्वतन्त्रेषु सुवृते २६८
सकलद्वार्धभागेन ज्ञात्वा मुच्यति बन्धनात्
दिवारात्रविभागन्तु यस्माद्देवि प्रवर्तते २६९
तद्देवि पूर्वमाख्यातं सन्ताने तव शोभने
देशिकस्तं विजानाति मध्यस्थं कमलस्थितम् २७०
एतस्मात्परतो देवि गुरुपारंपरापरम्
त्रीण्येतानि परित्यज्य स परं परिकीर्तितम् २७१
षत्रिंशदङ्गुलं ख्यातञ्चारदेवे न शोभने
तत्र भागविभागेन शून्योच्चारः प्रकीर्तितः २७२
नवसूत्रं यथा प्रोक्तं प्रयोगं तादृशं स्मृतम्
तेन सिध्यति देवेशि नात्र कार्या विचारणा २७३
अन्यं गुह्यतमं देवि शृणु वक्ष्यामि तत्त्वतः
तत्क्षणाद्देवि पश्येत प्रयोगमिदमुत्तमम् २७४
सव्यदक्षिणयोर्देवि दिव्यं कृत्वा तु योगिराट्
कलाश्चतस्त्रस्सं पश्येत् ज्वलन्तं दीपसंभवम् २७५
आदिरन्तेन संसृष्टमुभयोरपि शोभने
मध्यदेशे तु यत्स्पृष्टमुभयोरपि पश्यति २७६
प्रकाशोन्मूलने नैवं मंब कं पश्यते यदा
सर्वेषामेव योगानां ध्यानयोगफलं शृणु २७७
मेधा कान्तिस्तथारोग्यं सकृदुक्तन्तु गृह्यति
दिव्यादिव्यञ्च यत्किञ्चित् सर्वं पश्यति नान्यथा २७८
सर्ववाङ्मयवेत्तारः त्रिमासाभ्यन्तरेण तु
उत्तिष्ठे चान्तर्धाने च बादलेपाञ्जने तथा २७९
गुडिकाद्या भवेत्सिद्धि षण्मासाभ्यन्तरेण तु
एतद्देवि समाख्यातं प्रयोगामृतमुत्तमम् २८०

समं सत्यञ्च देवेशि प्रत्यक्षं दृश्यते शुभे
अन्यतन्त्रविदा ये तु युक्तायुक्तविचारकाः २८१
एवं क्षिपन्ति चात्मानं ज्ञानं लब्ध्वा तपस्विनम्
न तैर्देवि इदं ज्ञानं ज्ञानसद्भावमुत्तमम् २८२
सेवस्व प्रत्ययं ह्येतत् स्व परस्य न संशयः
हंसयोगमिदं देवि कथितं विधिविस्तरात् २८३
प्रक्रियाज्ञानविज्ञानं तस्माद्देवि विजानतः
त्रयाणां देवतानाञ्च दर्शनं तत्र सुवृते २८४
प्रत्यक्षं तेन दृश्येत विधिपूर्वेण नान्यथा
पुनरेव प्रवक्ष्यामि यजनं सुरसुन्दरि २८५
पञ्च ब्रह्मकलाभिश्च नव शक्तियुतेन च
आसनं प्रणवेनैव विद्याङ्गैश्च तथैव च २८६
एकेना वरुणेनैव यष्टव्यः परमेश्वरः
हृत्पद्मे स्थण्डिले चैव यष्टव्यं सिद्धिमिच्छता २८७
सिद्धिञ्च लभते योगी षण्मासाद्यजते यदि
प्रथमेऽहनि देवेशि प्रत्यक्षं प्रत्ययो भवेत् २८८
तदेव मथनाद्देवि सिद्धिरुत्पद्यते सदा
यजनाज्जायते सिद्धिः ज्ञाने कैवल्यतां व्रजेत् २८९
ध्यानेन जपयोगेन सिद्धिदस्तु न संशयः
ईशानमूर्ध्वतो दद्यात् पूर्वं तत्पुरुषं स्मृतम् २९०
अघ्योरं दक्षिणे चैव वामदेवं तथोत्तरे
सद्योजातन्तु देवेशि संस्थितं पश्चिमेन तु २९१
आग्नेय्यां हृदयञ्चैव ऐशान्यान्तु शिरो न्यसेत्
नैर्ऋत्यान्तु शिखा देवि वायव्यां कवचं तथा २९२
अस्त्रचारप्रदेशे तु विन्यसेत्तु विचक्षणे
एकेनावरुणेनैवं यजेत सुसमाहिता २९३

मण्डलतर्पणं कृत्वा हुनेदेकादशात्मकम्
शिवेन देवे देवेशि हुनेत्पूर्णाहुतिं क्रमात् २९४
स्थण्डिले मण्डले चैव यजनं समुदाहृतम्
हृत्पद्मे यजनञ्चैव शृणुदेवि वदाम्यहम् २९५
एकारात् चिन्तयेत्तत्वं ऐकारन्तु विनिर्दिशोः
ऋृजुरञ्च तु विज्ञेया धर्मपादचतुष्टयम् २९६
ओं कारेण तु देवेशि विन्यसेन्न शक्तयः
प्रथमं कल्पयेन्मूर्तिं तेन सर्वमशेषतः २९७
दशमं प्रणवं यच्च आवाह्य परमं शिवम्
प्रणवं न्यासयोगेन त्रितत्वं कारयेद्बुधः २९८
आकारं पूर्वतो न्यस्यं ईकारं दक्षिणेन तु
ऊकारं पश्चिमेनैव व्योमबीजोत्तरेण तु २९९
मं बीजं देवदेवेशि ईशान्यां परिकल्पयेत्
व्या बीजं वायुदेशे तु बी बीजं नैर्ऋतेन तु ३००
ने बीजं देवदेवेशि आग्नेय्यां चैव विन्यसेत्
तेनैव ध्यानकाले तु विन्यासं परिकीर्तितम् ३०१
पुनश्च शृणु देवेशि कथयामि तवाखिलम्
स्थावरं जङ्गमञ्चैव अण्डजं स्वेदजं तथा ३०२
देवदानवतिर्यक्त्वदंष्ट्रणां क्रूरकर्मणाम्
हिंसकास्तस्य दुष्टात्मा दृष्ट्वा तां चिन्तयेद्बुधः ३०३
चक्षुषाऽयं मया प्रोक्तो दीक्षा मे तु यथा पुरा
तान् सर्वान् चिन्तयेद्देवि दुष्टसत्वस्य योगिनः ३०४
तत्वातत्वेषु सन्धाय चिन्तयेच्छिवमव्ययम्
एवञ्चिन्तितमात्रास्तु प्रशमं यान्ति ते शुभे ३०५
एवं सर्वेषु पापेषु मसकेषु स योगिनः
न ते हिंसन्ति पापात्मा शिवं दृष्ट्वा समं ययुः ३०६

एवं चिन्तयतो नित्यं विचरस्व यथा सुखं
शिवेन समरसो भूत्वा ध्यानयोगपरायणः ३०७
यत्र तत्र मनो गच्छेत् ध्यायमानस्य योगिनः
तदेव तत्परं ब्रह्म सर्वभावेन संस्थितम् ३०८
शुभाशुभेषु कर्मेषु इष्टानिष्टोपपत्तिषु
स्थावरेषु च सर्वेषु धीरस्सर्वत्र संस्थितः ३०९
मनसा गच्छते यत्र अचिन्त्यं चिन्त्यमेव च
तदेव तत्परं ब्रह्म वेदितव्यं हितैषिभिः ३१०
सर्वेषु समरसो भूत्वा तत्वभावेन येषु च
एवं समरसो भूत्वा विशते शिवमव्ययम् ३११
एवं समरसो देवि विख्यातं तव शोभने
सर्वसंहितसामान्यं स तु जो जुष्टभाषितम् ३१२
एवं समरसो भुत्वा योगिनः सुसमाहिताः
सिध्यन्ते नात्र सन्देहो मुच्यते नात्र संशयः ३१३
शृणु देवि परं गुह्यं प्रवक्ष्यामि समासतः
येन विज्ञातमात्रेण मुच्यते जन्मबन्धनात् ३१४
तत्प्रवक्ष्यामि अहं देवि मुद्राबन्धं परं शुभम्
उत्तानौ तु करौ कृत्वा वेणीबन्धन्तु कारयेत् ३१५
आकारेण तु नेकारं अङ्कारसमन्वितम्
अव्याकारसमायुक्तो व्योमाकारसमन्वितः ३१६
प्रणवौ प्रसृतौ कृत्वा नेत्र मुद्रा प्रकीर्तिताः
कुञ्चतौ तु शिखा ज्ञेया पाशच्छेदकरी नृणाम् ३१७
एतावेव समौ कृत्वा शिरमुद्रा प्रकीर्तिता
विशिष्टहृदयं विद्या पिण्डितः कवचं तथा ३१८
विक्षिप्तः शास्त्रमित्याहुः पञ्चत्रिंशाक्षरस्य तु
एतद्योगपरं देवि विख्यातं तव शोभने ३१९

अलेख्येयमिदं सर्वं वाचा सर्वं प्रकाशयेत्
वेदोक्तविधिना देवि अध्ययनं समुदाहृतम् ३२०
इति निश्वासकारिकायां चतुश्चत्वारिंशत्पटलः

देव्युवाच
भगवन् श्रोतुमिच्छामि अधिवासनमुत्तमम्
चरुकञ्च महादेव दन्तधावनमेव च १
मन्त्रबोधविधानञ्च भगवन् कथयस्व मे
ईश्वरः
शृणु देवि परं गुह्यं अधिवासनमुत्तमम् २
सर्वसंहितसामान्यं कथयामि तवाखिलम्
तिथिनक्षत्रवाराणि शाकुनानि शुभानि तु ३
दिव्यान्तरिक्षभौमानि लब्ध्वा सम्यक् परीक्षितान्
आदौ भौमं परीक्षेत शास्त्रदृष्टेन कर्मणा ४
हिमवच्छैलविन्ध्यौ वा पारिधात्रे तथांबुदे
महेन्द्रे मलये सह्ये रम्ये पुण्यशिलोच्छये ५
गङ्गाद्यां सरितां श्रेष्ठा अन्तर्वेद्यां तथैव च
श्मशाने वा गृहे वाऽपि देवगारे तथैव च ६
उद्याने च तथा कुर्यात् पद्मषण्डे तटेऽपि वा
एवमादौ शुभस्थाने यत्र वा रमते पुनः ७
सितरक्तपीतकृष्णमधुरादौ चतुर्विधा
ब्राह्मणानां सिताभूमिः रक्तावाक्षत्रयस्य तु ८
वैश्यस्य वसुधा पीता कृष्णा शूद्रस्य कीर्तिता
ब्राह्मणे मधुरास्वादा कषाया क्षत्रियस्य तु ९
वैश्ये तु षड्रसा प्रोक्ता शूद्रस्य कटका स्मृता
अद्य गन्धाद्विजे भूमिः क्षत्रिये रक्तगन्धिनी १०

शकृत् गन्धाविशे भूमिः शूद्रस्य क्षारगन्धिनी
श्वानयेज्ञानुमात्रन्तु तां समुद्धृत्य पूरयेत् ११
++ पांसुरधिका या तु सा भूमिस्सर्वकामदा
ईदृशीं वसुधाभूमिं कुर्याद्भूमिपरिग्रहम् १२
यष्ट्वा तु देवदेवेशि हुनेदष्टशतं क्रमात्
बलिस्तत्रैव दातव्या देशिकेन महात्मना १३
भूम्याः परिग्रहो ह्येवं तव देवि उदाहृतः
अपरेऽहनि देवेशि अधिवासनमारभेत् १४
संभारैः संभृतो मन्त्री कुर्यात्तत्राधिवासनम्
गन्धपुष्पसमायुक्तं पञ्चगव्याक्षतेन च १५
गर्भैः मन्त्रैस्तु संपूज्य होमं तत्रैव कारयेत्
हुत्वा तु देवदेवोऽयं मन्त्राणाञ्च यथाक्रमम् १६
शतं देवाय होतव्या माहुतीनां वरानने
दशांशञ्चैव मन्त्राणां हुत्वा पूर्णाहुतिं ददेत् १७
येनाध्वानन्तु संप्राप्य सर्वां स्तास्तत्र पूजयेत्
पूजयेत्सर्वतत्वानि गन्धपुष्पविधिक्रमैः १८
एवं संपूज्य तत्वानि पशोर्ह्यालभनं कुरु
आलभ्य सर्वमन्त्रैस्तु न्यसेत्तत्वान्यथाक्रमम् १९
तत्वपाशान्निबध्नीयात् तत्वे तत्वे यथाक्रमम्
पाशानि ग्रन्थिषैर्बद्धा वासयेदेव संयुतम् २०
करणीं कर्तरीञ्चैव संभारांश्च पृथग्विधान्
सकलीकृत्य तान् सर्वान् वायेद्देवसंयुतम् २१
एवं कृत्वा तु विधिना अग्निस्थानेषु च क्रमात्
ताम्रपात्रे शरावेवा आनयेज्ञातवेदसम् २२
गायत्र्या चैव देवेशि तत्वेनाभ्युक्षणं कुरु
अभ्यर्च्य पञ्चभिः ब्रह्मैः ततः कुण्डे तु प्रक्षिपेत् २३

विष्टरं विन्यसेत्तत्र कुराडं शोध्यविचक्षणः
अस्त्रेण शोधयेत्कुराड मुल्लिख्याभ्युक्ष्य उद्धरेत्  २४
एवं कृत्वा तु देवेशि विष्टरन्तु प्रकल्पयेत्
वागीशी स्थापयेत्तत्र ऋतुमतीं महाधिपाम्  २५
त्रिरावर्तं ततो देवि मन्त्रमेकैकशोभने
एकादशेन मन्त्रेण शिवाग्निर्जानितो भवेत्  २६
संस्कारं शुद्धिहेत्वर्थं जुहुयात् पूर्णाहुतिं प्रिये
शिवाग्नौ जनिते पश्चात् अग्निमाहुतिमन्त्रवित्  २७
चरुन्तु श्रपयेद्देवि विधिदृष्टेन कर्मणा
न्यस्त्वा तु सर्वतन्त्राणि त्रितत्वां तत्र विन्यसेत्  २८
सूत्रेण वेष्टयेत्कर्णं क्षीरपर्णञ्च कारयेत्
लिनीवारश्यामाकयवगोधूमपिराडकैः  २९
मधौषधिभिः कर्तव्यं कङ्गुना च तथैव च
यावत्पूर्णा भवेत्स्थाली कर्तव्यश्चरुकस्सदा  ३०
चालनभ्रमणाद्यञ्च यत्कर्मपरिकीर्तितम्
पञ्चभिः ब्रह्मभिश्चैव अथ एकादशेन तु  ३१
एवं विधिसमायुक्तं पुनः कुर्यात्तु देशिकः
संपाताभिहुतं कृत्वा सर्वमन्त्रैः सकृत् सकृत्  ३२
स्वाहुत्याग्नौ तु देवेशि हेति द्रव्ये निधापयेत्
एवं हुत्वा तु विधिना त्रिभागं कल्पयेत्पुनः  ३३
हुत्वा देवाय कल्पीत द्वित्रिधं वरवर्णिनी
तृतीयं साधकेभ्यश्च कल्पयेद्विधिपूर्वकम्  ३४
पञ्चगव्यन्तु कर्तव्यं विधिदृष्टेन कर्मणा
गोमूत्रं गोमयं क्षीरं दधिसर्पिकुशोदकम्  ३५
एतावाहृत्य कर्तव्यं पञ्चगव्यं सुशोभने
सद्येन गोमयञ्चैव गोमूत्रं गुह्यकेन तु  ३६

गृह्णेत्सर्पिरघोरेण दधिवक्त्रेण गृह्णयेत्
ईशानेन गृहेत्क्षीरं गायत्र्या तु कुशोदकम् ३७
अभिमन्त्र्य करारोहे सर्वैः मन्त्रैः सकृज्जपेत्
दातव्यं वक्त्रमन्त्रेण यत्किञ्चित्पानभोजनम् ३८
दन्तधावनमप्यत्रं सक्षीरं सदलं शुभम्
अवक्तनिर्घृणञ्चैव द्वादशाङ्गुलसंमितम् ३९
दद्याद्वक्त्राभिमन्त्रेण मन्त्रितं गुरवेऽस्य तु
आज्याधिश्रयणं कृत्वा उद्वास्योत्पवनं कुरु ४०
नीराजनं ततः कृत्वा कुर्याद्वक्त्राभिघारणम्
वक्त्राभिघारणं कुर्यात् सद्य वामेन बुद्धिमान् ४१
अस्त्रेण निष्कृतिं कुर्यात्तत्वेनोद्धातनं स्मृतम्
एवं कृते तु देवेशि शिवाग्निर्जनितो भवेत् ४२
पश्चात् पद्मविधानन्तु कर्तव्यं सुसमाहितैः
आसनं विभजेत्तत्र अनन्तादिरनुक्रमात् ४३
आवाहयेच्च देवेशं पूर्वदृष्टेन कर्मणा
ब्रह्माणं स्थापयेन्नित्यं पूर्वदिग्भागतो बुधः ४४
दक्षिणे रुद्रमित्याहुः पश्चिमे विष्णुमेव च
उत्तरे चन्यसेन्नित्यं शिवाय परमेश्वरी ४५
विघ्नेशां लोकपालांश्च अस्त्राणि तु यथाक्रमम्
पूजयेत्पावमानेन विष्टरस्थान्यथाक्रमम् ४६
आदौ तु यो विधिः कार्यः शृणु देवि यथाक्रमम्
हेमरूप्यमयात्कुर्यात् कलशान् रत्नपूरितान् ४७
कर्तव्यास्ताम्रजा वाऽपि मृण्मयं वाऽथ कारयेत्
अकालमूलकशान् चन्दनेनोपलेपितान् ४८
आसनं कल्पयित्वा तु शिवाख्ये कलशं न्यसेत्
आत्मतत्वमधो भागे विद्यातत्वन्तु मध्यतः ४९

शिवतत्वं तृतीयन्तु उपरिष्टात्तु विन्यसेत्
तत्रत्वदृष्ट्या तु सर्वाणि अवलोक्य महामतिः ५०
शिखी भवति तत्सर्वं नात्र कार्या विचारणा
वर्धन्यामुदपूर्णायां सर्वैर्मन्त्रैः सकृत्सकृत् ५१
ततो देवि जपेदस्त्रं ++ भ्रामयेत्
अच्छिन्नोदकधारान्तु दद्याद्बाह्ये तु देशिकः ५२
वर्धन्यामग्रतो गच्छेत् कलशार्धसमन्वितः
अस्त्रञ्च जपमानस्तु आचार्यश्च शिवात्मकः ५३
भ्रामयेच्चतुरश्रे तु पुनस्तत्रैव स्थापयेत्
अक्षरान्विकिरित्वा तु अपूजत्तेन बुद्धिमान् ५४
पञ्चगव्येन चाभ्युक्ष्य गन्धतोयेन ता पुनः
कलशं भ्रामयेत्पश्चात् एष एव विधिस्मृतः ५५
कलशं भ्रामयेत्पूर्णं ततो देवाधिवासनम्
अग्निकुण्डं ततो गच्छेत् ततो मण्डलतर्पणम् ५६
दिशाधिवासनञ्चैव स्वरवत्तदनन्तरम्
दन्तधावनमङ्कं स्यात् एष एव विधि स्मृतः ५७
हेमराजतताम्रैश्च पद्मरागमयैस्तथा
इन्द्रनीलमहानीला जज++ कुर्याद्विधानवित् ५८
एतेषामप्यलाभेन कल्पयेद्वर्णकैर्बुधः
शालिगोधूमवर्णैश्च प्रतिबिंबे सुशोभनैः ५९
आलिखेन्मण्डलं दिव्यं समरेखं सुशोभनम्
कथितञ्चोत्तरे सूत्रे तानि कुर्याद्विचक्षणः ६०
तेन सूत्रविभागेन आलिखेन्मण्डलं शुभम्
पूजयेत्तत्र देवेशि पूर्वदृष्टेन कर्मणा ६१
एवं पूज्य यथान्यायं ततो दीक्षां समाचरेत्
पत्नीसंयोजनं कुर्यात् ज्ञानसिद्धिक्रमारितम् ६२

तया सह यजेद्यज्ञं पत्यामास सहस्रकम्
विद्यादीक्षा समाप्तौ तु साधकस्सविधीयते ६३
शताष्टाधिकजप्तेन इष्टमन्त्रेण साधकः
अभिषेकञ्च देवेशि पूर्वमेव उदाहृतम् ६४
सूत्राः पञ्च चतुस्त्रिंशद्वाचे काऽपि सुरेश्वरि
कारिकां वाऽथ यो वेत्ति अभिषिक्तस्य दापयेत् ६५
कलशैर्विं शतिभिश्चैव नवभिर्दशभिस्तथा
अभिषिञ्चेत्ततः शिष्या नाचार्यः धिन्नसंशयः ६६
पृथिवीमादितः कृत्वा माया कलशपश्चिमम्
निर्माणकलशमारभ्य ऐश्वर्यञ्चापि पश्चिमम् ६७
एतत्तु संपुटीकृत्य सांयकञ्चाभिषेचयेत्
पञ्चाशत्कलशेनैव विद्याख्येनाभिषेचयेत् ६८
पृथिवीमादितः कृत्वा यावत्तत्वमनामयः
आनुपूर्वेण देवेशि आचार्यमभिषेचयेत् ६९
पञ्चसूत्रार्थवेत्तार आचार्यास्तत्त्वपारगाः
अभिषिक्तो यदा तेन स गुरुः शिवतुल्यगः ७०
भोजयेद्दर्शनाद्देवि शिवतत्वस्य पारगः
पृथिवीमादितः कृत्वा कलशा ये प्रकीर्तिताः ७१
व्यूहन्यासन्तु कर्तव्यं त्रितत्वं हि नव न्यसेत्
नवभिः कलशैश्चैव नव तत्वानि विन्यसेत् ७२
स मन्त्रान् सप्त आवर्त्य एकैककलशे बुधैः
अथवा कलशेकेन अभिषेकन्तु कारयेत् ७३
सर्वतत्वैश्च मन्त्रैश्च समुद्रैश्च समन्वितः
एकस्मिन् कलशेनैव विधिरेषोऽत्र कारयेत् ७४
चतुर्हस्तं भवेत्पीठं समन्तादुपशोभितम्
उच्छ्रियं हस्तमात्रन्तु कर्तव्यं सुसमाहितैः ७५

चतुर्भिस्तोरणैश्चैव पताकाध्वजशोभितैः
वितानबुद्बुदैश्चैव वेदिस्थानं सुशोभितम्  ७६
मण्डितं पुष्पचित्रैस्तु चूतपल्लवशोभितम्
स्वस्तकैः पद्मकैश्चैव सन्धार्थकसमन्वितैः  ७७
पूर्वास्तत्रैव दातव्याः कलशेषु शुभानने
शङ्खभेरी रवोद्घोषैः स्तूर्यशब्दैस्तथैव च  ७८
वेदशब्दजयारावां तस्मिन् काले तु कारयेत्
कौतुकैः मङ्गलैश्चैव तन्त्रीसङ्गीतसंयुतैः  ७९
अभिषिञ्चेत्तदा शिष्यः पूर्वादारभ्य देशिकः
क्रमशश्चैव देवेशि मायान्ते परिकीर्तितम्  ८०
अभिषिक्तं तदाचार्य आनयेच्छिवसंयुतम्
छत्रञ्चोपरि सन्धाय पादौ पादुकसंयुतौ  ८१
आसने कल्पिते दिव्ये तत्र स्थाप्य विचक्षणः
अर्घ्यादिभिः समभ्यर्च्य अधिकन्तु समर्चयेत्  ८२
अद्य प्रभृतिराचार्यश्शिवतन्त्रस्य धीमतः
कर्तव्योऽनुग्रहो नित्यं चतुराश्रमवासिनाम्  ८३
व्याख्यानमर्चनञ्चैव गुरुशिष्यप्रबोधनम्
स्वल्पमह्नि जपं कार्यं स्वल्पमग्नौ च होमयेत्  ८४
स्वल्पध्यानं सदा कुर्यात् सत्रमेतत्सदा तव
करणीं कर्तरीञ्चैव संहितां सृक् स्रुवं तथा  ८५
अर्घ्यादिभिस्समभ्यर्च्य अधिकार समभ्यसेत्
इति निश्वासकारिकायां पञ्चचत्वारिंशत्पटलः

देव्युवाच
त्रितत्वप्रभवा मन्त्राः त्वया पूर्वमुदाहृताः
दीपितं तेषु मन्त्राणां भगवन् कथयस्व मे  १

श्रूयन्ते सर्वतन्त्रेषु शिवाज्ञा स्रोन्नमेति च
कथयाज्ञापयन्त्येते भगवन् वक्तुमर्हसि २
ईश्वरः
शृणु देवि परं गुह्यं मन्त्रसद्भावमुत्तमम्
यन्न कस्यचिदाख्यातं कथयामि तवाखिलम् ३
सर्वव्यापीति यत्प्रोक्तं मया नु तव सुवृते
अर्धचन्द्रन्तु विज्ञेयमस्मिंस्तन्त्रे न संशयः ४
तस्य चैव कला ह्येका निरोधीत्यभिधीयते
तेन युक्तोपरिस्थान ओंकारः परिकीर्तितः ५
नादस्यैव कला या तु ऊर्ध्वगामीति शिश्रुता
सा एव वर्त्तुलीभूतः नकारः परिकीर्तिताः ६
शक्तेः कलास्तु चत्वारो भागेनैव यथा स्थिताः
तास्तु वक्ष्यामि देवेशि यथातथेन मे शृणु ७
अमृता तु शिरोवस्था रविभूता मयोद्धृता
सुसूक्ष्मा तिर्यगेनैव अर्धो दक्षिणतां गता ८
सूक्ष्मा नाम कला या तु अध ऊर्ध्वमुखा गता
अग्रताम्रा चतुर्थी तु बिन्दुनादः सुसंयुता ९
पार्श्वे तु संस्थितास्तास्तु कथितं तव शोभने
स शिवस्सर्ववर्णानां व्यापयित्वा वरानने १०
रेखाभूतविनिष्क्रान्तः प्रेरयन्तं समन्ततः
तेन छिन्नविभक्तानि पदमक्षरसन्धयः ११
नता लङ्घयितुं शक्ता अपि देवास्स वासवाः
ऋषयश्च तथा चान्ये योगिनो भुविमानवाः १२
तेन सर्वमिदं व्याप्तं जगदेतच्चराचरम्
तेन ज्ञापयते सर्वं मन्त्रग्राममशेषतः १३
निरुद्धा आदिरन्तेन मन्त्रास्सिद्ध्यन्ति नान्यथा

शिवतत्वं परे शुद्धं स बाह्याभ्यन्तरे स्थितम् १४
अन्ते बिन्दुमधश्चोर्ध्वे मध्यतत्वं विनिर्गतम्
तेन ते प्रेरिता मन्त्राः शक्तयश्च न संशयः १५
सिद्ध्यन्ते नात्र सन्देहो मनसा यद्यदीप्सितम्
ओङ्कारमादितः कृत्वा नमस्कारं नियोजयेत् १६
मन्त्राणामेष संयोगः कथितस्तव शोभने
स्वाहाकारं वषट्कारं सुवौषट्कारमेव च १७
हुंकारसहितं देवि फट्कारं पुनरेव तु
एतत्र शक्तिसंयोगं वेदितव्यं प्रयत्नतः १८
ओन्नमस्कारसंयुक्तं पूजाजपनकर्मणौ
स्वाहाकारसमायुक्तो होमेष्वाकर्षणेषु च १९
वौषट्कारसमायुक्तः शान्तिकर्माणि योजयेत्
पुष्ट्यर्थे च सदा कुर्यात् सकारोकारसंयुतम् २०
तत्संयोगद्वितीयस्त्वकारोकारसंयुतः
षकारमन्त्रयोगेन हकारसहितेन तु २१
पुष्ट्यर्थे सर्वमन्त्राणां आत्मनश्च परस्य वा
अमृतीकरणं कुर्यात् वषट्कारसमन्वितः २२
नमो नमेति मन्त्राणामिन्धनार्थे नियोजयेत्
प्रणवेन यदा हीनं मन्त्रग्राममशेषतः २३
हुङ्कारमादियोगेन स्वाहान्तेन तु शोभने
आनयेज्ञपदैत्यादि व्रतजप्तशुचिस्सदा २४
हुङ्कारमादियोगेन फट्कारेण तु योजयेत्
उच्चाटयति भूतानि दिव्यभूमिगतानि तु २५
तदेव मादियोगेन फट् फडेति द्वितीयकम्
मारणे तु विधिं कुर्यात् शेषास्सर्वे नमो युताः २६
सिद्धिदास्सर्वकार्येषु तवैवं समुदाहृतम्

होमकालेऽथ शुद्धिर्जपयोगे च सर्वदा २७
यथा विज्ञाय कर्तव्यं दीक्षाकाले च देशिकैः
एकान्ननिरतो नित्यमुपवासरतोऽपि वा २८
नक्तं वा चरुभुङ् नित्यं भिक्षाऽहाररतोऽपि वा
कृच्छ्रचान्द्रायणैर्वाऽपि जपकाले सदा भवेत् २९
एवमादिक्रमणैव साधयेन्मन्त्रदेवताम्
अन्यथा नैव सिद्ध्यन्ति वृ++क्षश्रान्ति साधकाः ३०
होमेन सर्वकर्माणि साधकः साधयेद्यथा
तथा ते कथयिष्यामि शृणुष्वैकमना मम ३१
सकलीकृत्य मन्त्रज्ञः पूर्वदृष्टेन कर्मणा
त्रिस्थानकालतत्वज्ञः शिवशक्तिपरायणः ३२
होमयेन्नियतो मन्त्री जपतो नियतस्तदा
अक्षराक्षतसन्धान न द्रुतं न विलंबितम् ३३
स्फुटसंयोगसंयुक्तं ह्रस्वदीर्घमपेक्षितम्
प्लुतं विसर्गसंयुक्तं स्वययुक्तं मयोदितः ३४
एवं ज्ञात्वा तु मेधावी जपहोमं समञ्चरेत्
श्रीपर्णर्यभिषेके चापि कृत्वा तु रुचिरासनम् ३५
कुशासनं तथा देवि अथवा गोमयासनम्
एभिरासनमुख्यैस्तु विस्तीर्णैस्तु समाहितैः ३६
स्थित्वा होमं सदा मन्त्री नोत्सुकस्यात् कदाचन
पदादुच्चुको भूत्वा होमयेद्भुवि देशिकः ३७
वेदना महती तीव्रा जायते नात्र संशयः
वेदनार्तो यदा मन्त्री न लक्षं विन्दते सदा ३८
अशोमुदामयश्चैव कटिग्रन्थ्यधिपे पृथुः
उरस्तंभो महाघोरः पार्श्वे रोगस्तथैव च ३९
एवमादीनि दुःखानि जायते नात्र संशयः

रोगे तु युज्यमाने तु यथा कुर्यात्तु देशिकः ४०
तथाऽन्ते कथयिष्यामि संक्षेपाच्छृणु सुवृते
नाव्याहारेण कर्तव्यो योगारंभः कदाचन ४१
नक्षुधार्तं तुषार्तेन न चैव जनसंसदि
निवातशरणे दिव्ये तस्मिंस्थित्वा समभ्यसेत् ४२
अन्यथा कुरुतेऽन्यस्तु न लक्षं विन्दते सदा
स विकल्पस्य योगस्तु कथितस्तव शोभने ४३
दीक्षाकाले यथा होमः कर्तव्यो देशिकेन तु
तथा तु शृणु देवेशि कथयामि समासतः ४४
क्षुधार्तो जायते शेषो महान्हि महतामपि
तृषार्ते जायते दोषः भित्तक्षोभोतिदारुणः ४५
पित्तक्षोभाद्भवेद्व्याधिः देशिकस्य न संशयः
कंपमानञ्च पित्तञ्च पिटकाद्यग्निसंभवात् ४६
पित्तक्षोभाद्भवेद्देवि मायाव्याधिस्सुदारुणः
क्षुधार्तस्य तृषार्तस्य पशुका सह सुवृते ४७
सिद्धमन्त्रनियोग्यस्तु भवेते देशिकोत्तमः
नवमन्त्रपदस्यैव क्षुधया व्याकुलीकृतः ४८
विन्दते देशिकेन्दस्तु तस्माद्भुञ्जीत सुवृते
हविष्य भोजनं कृत्वा घृतक्षीरपरिप्लुत ४९
पायसं वा स भुक्त्वा तु ततो दीक्षां समारभेत्
पूर्णाहुत्या प्रपातन्तु उत्सृष्टिस्तु न कारयेत् ५०
अग्नितेजो न दह्येत प्रसृतेनैव पातयेत्
दह्यमानो यदा मन्त्री प्रायश्चित्तमवाप्नुयात् ५१
मुखे तु दह्यमानस्य मन्त्रास्तस्य पराङ्मुखः
ना साधयन्ति कर्माणि तस्मात्तं परिवर्जयेत् ५२
चक्षुषौ दह्यमानौ तु देवा कुप्यन्ति शोभने

तेन देषो भवोद्देवि तस्मात्तं परिवर्जयेत्  ५३
रोमेषु दह्यमानेषु कुप्यन्ति ऋषयस्सदा
एतेषु दह्यमानेषु प्रायश्चित्तार्थमादरात्  ५४
हुनेच्च दैकं देवेशि नत्वा वाक्येन समाहितः
ध्यात्वा तत्वं विशुद्ध्येत प्रायश्चित्तानि संशयम्  ५५
स्रुचिपूर्णा तु दातव्या पूर्णाहुत्या तु देशिकैः
पादाङ्गुष्ठौ समौ कृत्वा प्रसृतेन तु देशिकः  ५६
उत्ताना करयुग्मेन पातयेत विचक्षणः
पात्रो न दह्यते देवि तथापता तु आहुतिः  ५७
दह्यते तु यदा पात्रं प्रायश्चित्तन्तु होमयेत्
पूर्वोक्तेन विधानेन शुध्यते नात्र संशयः  ५८
इति निश्वासकारिकायां षट्चत्वारिंशत्पटलः

देव्युवाच
पृथिवी दिवि भागेन देव देव त्वया पुरा
न्यासस्तु कथितो देव समयाचारधारितः  १
कथं तत्वानि देवेशि देशिकेन महात्मना
आत्मदेहे तु ज्ञातव्या भगवन् वक्तुमर्हसि  २
ईश्वरः
शृणु देवि परं गुह्यं सर्वज्ञानमनुत्तमम्
येन विज्ञानमात्रेण मुच्यते नात्र संशयः  ३
आदौ तु देवदेवेशि मातृकां परिकल्पयेत्
दक्षिणे योजयेद्बीजं वामे योनिन्तु विन्यसेत्  ४
नमस्कारान्तयोगेन प्रणवादिसमन्वितः
वर्गे वर्गे तु कर्तव्यं मन्त्रो वै देशिकेन तु  ५
मातृकापूर्वविन्यासं नवमो तदनन्तरम्

पुनर्नवममुच्चार्य शब्दातीतन्तु कारयेत् ६
एवं विन्यस्य देवेशि विभिन्नं पुनरेव तु
अकारो प्रतिज्ञेया नाभ्यधस्तात्तु विन्यसेत् ७
यकारं पुरुषाख्यस्य हृदि पद्मे तु विन्यसेत्
पत्रेषु विन्यसेद्देवि नियतिं तदनन्तरम् ८
एवं माया च विद्या च ईश्वरश्च सदा शिवः
शिवतत्वन्तु देवेशि सर्वेषामुपरि स्थितम् ९
एवं विन्यस्य तत्वानि सकलादिक्रमेण तु
बिन्दुनादं तथा शक्तिः एवं विन्यस्य यत्नतः १०
हृन्मजो देवतान्यासं शृणु देवि ततः परम्
सूर्यमण्डलविन्यासमादावेव विचिन्तयेत् ११
द्वितीयमैन्दवन्यासं वह्निन्यासं तृतीयकम्
ब्रह्माविष्णुश्च रुद्रश्च तथाचेश्वर एव च १२
सदाशिवश्शिवश्चैव ++ सेच्च यथाक्रमम्
निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिस्तथैव च १३
नादशक्तिश्शिवश्चैव विन्यसेथ यथाक्रमम्
सूक्ष्मा नाम कला या तु सु सूक्ष्मा च द्वितीयका १४
अमृता मृता तृतीया च बीजामृतं ततः परम्
अस्य पञ्च च देवेशि विन्यसेच्छक्तिवत्सदा १५
चक्रन्यासं महादेवि पूर्वमेवमुदाहृतम्
तत्त्वया विदितं देवि किमन्यत्कथयामि ते १६
चक्षुषा च भयैवेह तदेव कथितं मयि
विदितं तत्त्वया देवि वास्ति तत्वमतः परम् १७
करन्यासं प्रवक्ष्यामि तदेकाग्रमना शृणु
नवात्मकं न्यसेत्पूर्वं भिन्नैवैकं न संशयः १८
पुनस्तु मन्त्रमुच्चार्यमङ्गुष्ठाग्रेण विन्यसेत्

सकलं दक्षिणाङ्गुष्ठे शेषं पूर्वं समाचरेत् १९
करन्यासकृते देवि शिवं तत्रैव चिन्तयेत्
त्रितत्वं पूर्वं विन्यस्य शिवं पश्चात्तु विन्यसेत् २०
एवं कृते ततो देवि शिवहस्तस्तु संस्मृतः
तेन सर्वमिदं कार्यमर्चनं प्रोक्षणं तथा २१
ग्रहणं योजनञ्चैव शिवहस्तेन कारयेत्
प्रथमं करविन्यासं न चास्मानं प्रकीर्तितम् २२
न्यस्त्वा वै वाक्षरन्देवि मातृकाया द्वितीयकम्
नवात्मानं तृतीयन्तु तद्भिन्नन्तु चतुर्थकम् २३
सकलादिक्रमेणैव पञ्चमं परिकीर्तितम्
त्रयोदशं परं देवि सर्वव्यापि व्यवस्थितम् २४
एवं न्यासं पुरा कृत्वा ध्यायेत्तत्वन्तु योगवित्
त्रयोदशात्मसान्निध्यं यदि स्यात्तत्ववेदिनः २५
कुरुतेऽनुग्रहस्सो हि अवशेन वरानने
वचसा कुरुते दीक्षां चक्षुषा च न संशयः २६
एष देवि महान्यासः सेवितव्यः प्रयत्नतः
दर्शनात्पूर्वतेजन्तु वचसा च न संशयः २७
मनसा च न सन्देहः स्पर्शनेन न संशयः
न्यासे कृते तु देवेशि समर्थस्सर्वकर्मसु २८
एष पुण्यो महान्यसो मया देवि उदाहृतः
एकोऽपि यो विजानाति मुच्यते च न संशयः २९
एवं न्यासं पुरा कृत्वा आचार्य च्छिन्नसंशयः
न लिप्यते पुण्यपापैः स्वाचार्यस्यापि मोचकः ३०
एवं व्यासन्तु देवेशि न दद्याद्यस्य कस्यचित्
आचार्याय तु दातव्यमभिषिक्ताय धीमते ३१
अन्यथा दुष्टमर्त्यानां वदन् पदकभाक् भवेत्

सर्वसंहितसामान्यं ज्ञातव्यं देशिकेन तु ३२
देशे कृते महादेवि ये केचित्पापकर्मतः
मुच्यन्ते दर्शनात्तस्य आचार्यस्य न संशयः ३३
अनेन कृतवानस्तु पश्यते शृणु तेऽपि वा
वपुर्दर्शनमात्रेण मन्त्राणां श्रवणेन तु ३४
ध्रुवं दर्शनमात्रेण ध्रुवं प्रणयनेन च
अग्निशब्देन सुश्रोणिपाशशब्देन चैव हि ३५
पातकैः मुच्यते देवि शब्दं श्रुत्वा नराधमः
वपुः संदर्शनाद्देवि देशिकस्य महात्मनः ३६
आब्रह्मलोकगामी स्यात् भवते नात्र संशयः
मन्त्राणां श्रवणेनैव शृणु देवि वदाम्यहम् ३७
मन्त्रं श्रुत्वा तु पापात्मा रुद्रसायुज्यमाप्नुयात्
धूमसंदर्शनाद्देवि विष्णुसायुज्यमाप्नुयात् ३८
अग्निशब्देन सुश्रोणि शृणु देवि वदाम्यहम्
विद्यातत्वे तु या व्यक्तिः भवते पापकर्मणा ३९
मनसा च न सन्देहः स्पर्शनाच्च न संशयः
एतत्ते कथितं देवि शिवस्यासं महत्फलम् ४०
एवं ज्ञात्वा च देवेशि कुरु दीक्षां यथेच्छया
अनेन दीक्षिता मर्त्याः पशवो मुक्तबन्धनाः ४१
व्रजन्ति शिवसायुज्यं निर्मला विगतज्वराः
अतो मन्त्रविभागन्तु कथयामि वरानने ४२
ओं अं ऊन्नमः । ओं यं नमः । ओं लं नमः । ओं मं नमः । ओं क्षं नमः । ओं रं नमः । ओं हं नमः । ओं ह्रं नमः । ओं आं नमः । ओन्नवात्मकः । ओं कं खं गं घं दं नमः । ओं चं छं जं झं न्त्रं नमः । ओं टं ठं डं ढं णं नमः ।

ओं तं थं दं धं नं नमः । ओं पं फं बं भं मं नमः ।
करशाखा सु विन्यसेत् । ओं य र ल व नमः ।
हस्तमध्यतः । ओं श ष स ह नमः । ओं मणिबन्धतः ।
ओं क्षन्नमः । संपुटीकरेण वामकरविन्यासः ।
ओं अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः ।
नमः । पर्वे पर्वे एकैकमक्षरं न्यसेत् ।
ओं अं नमः । करमध्यतः ।
परमाक्षरं देवेशि मणिबन्धे तु विन्यसेत्
अङ्गुष्ठमादितः कृत्वा पञ्चब्रह्माणि विन्यसेत् ४३
मध्यमादि शिवाङ्गानि विन्यसेत यथाक्रमम्
रुद्रोङ्कारसमायुक्तः फट्कारेण समन्वितः ४४
करसंशोधनञ्चैव देहमालभनं तथा
प्रासादभूमिं संशोध्य सर्वमेतेन कारयेत् ४५
किञ्चित्संशोधनार्थन्तु तव देवि उदाहृतम्
सर्वमेतेन कर्तव्यं यत्किञ्चिच्छोधनाय वै ४६
ओं पृथिव्यै नमः । ओं अद्भ्यो नमः । ओं तेजसे नमः ।
ओं वायवे नमः । ओं आकाशाय नमः । ओं
अहङ्काराय नमः । ओं बुद्धये नमः । ओं प्रधानाय
नमः । ओं पुरुषाय नमः । ओं नियति नमः । ओं
काल नमः । ओं राग नमः । ओं विद्याय नमः ।
ओं कालाय नमः ।
विद्याय नमः । ईश्वराय नमः । सदाशिवाय नमः ।
शिवाय नमः । पादादारभ्य विन्यसेत् । ओं हृदयाय
नमः । ओं गीर्नमः । ओं हुन्नमः । ओं शिव नमः ।
ओं लं नमः । ओं रं नमः । ओं जुं नमः । हृदय
कण्ठञ्च मुक्तिध्यञ्च विन्यसेत्

शक्तिकला यास्मविन्यासं कथितं तव सुव्रते
पञ्चमं विन्यसेच्छक्तिं शिवशक्तिकलां न्यसेत् ४७
शेषस्तु मनसा न्यासः कर्तव्यस्तु वरानने
शिवहस्तं यदा दद्यात् देशिकस्तु महात्मना ४८
सव्यहस्ते यजेद्यागं न्यासञ्चैवमशेषतः
मातृका होमकाले तु शृणु वक्ष्यामि सुवृते ४९
एकावरण संयष्ट्वा चतुर्भिर्वापि देशिकः
अग्निसंस्कारपूर्वन्तु कृत्वा तु वरवर्णिनी ५०
एकैकमाहुतिं तत्र अनुलोमेन सुवृते
विलोमेन पुनश्चापि जुहुयाद्देशिकोत्तमः ५१
अनुलोमे सिद्धिकामो विलोमेप्ययनं कुरु
अनुलोमविलोमेन होतव्यं देशिकेन तु ५२
इति ते कथितो देवि न्यासः परमदुर्लभः
मन्त्राणाञ्चैव विन्यासः कथितस्तव शोभने ५३
देव्युवाच
किमादिपूर्वकं देव यजनं समुदाहृतम्
एतदिच्छामि विज्ञातुं भगवन् वक्तुमर्हसि ५४
ईश्वरः
शृणु देवि प्रवक्ष्यामि यत्त्वया परिपृच्छितम्
तदहं संप्रवक्ष्यामि तव देवि वरानने ५५
गणयागन्तु प्रथमं यष्टव्यन्तु समाहितैः
पञ्चाङ्गेन समायुक्तमेकहस्तं सुरोत्तमे ५६
शिवपञ्चमविन्यासं शिवध्यानमना न्यसेत्
अष्टपत्रं न्यसेत्पद्मं केसरालं स कर्णिकम् ५७
कर्णिकायां न्यसेद्देवं गणेशं लोकपूजितम्
आग्नेय्यां हृदयं न्यस्यं ईशान्यान्तु शिरोन्यसेत् ५८

नैर्ऋत्यान्तु शिखां देवि वायव्यां त्वचं न्यसेत्
चतुर्दिक्षु न्यसेदस्त्रमेष एव विधिस्मृतः ५९
ओं हृन्नमः । ओं ह्विन्नमः । ओं हुन्नमः । ओं हैं नमः ।
ओं हन्नमः । ओं जहि नमः । ओं हनल नमः । ओं
जहि नमः । ओं अन्नमः ।
हृदयश्शिरश्शिखायैकवचासैः क्रमेण तु
ओं ह्लौं नमः । ओं गणपति । एवं भगवत्कर्णिकायां
यजेत् सदा ।
आवाहनन्तु कर्तव्यं हृदयेन विसर्जनम् ६०
प्रोक्षणाभ्युक्षणञ्चैव पञ्चभिस्तु न संशयः
अस्त्रेण शोधयेद्भूमिं एष एव विधिस्मृतः ६१
अग्निसंस्कारविधानन्तु एभिः सर्वैस्तु कारयेत्
मण्डले तर्पणं कृत्वा दशदिक्षु बलिं हरेत् ६२
नवात्मकेन देवेन बलिं सर्वत्र दापयेत्
तेन ते तृप्तिमायान्ति भुतग्राममशेषतः ६३
प्रभूणामुत्सवे देवि को न तुष्यति सुव्रते
ततो भूतानि तुष्यन्ति शिवेन बलिना सदा ६४
बलिश्च द्विविधो देयो देशिकेन महात्मना
पायसं कृसरञ्चैव हारिद्रञ्च गुडोदनम् ६५
हारिद्रञ्च तथा कुर्यात् कृष्णञ्च पललान्वितम्
षड्विधेष बलिर्देवि मया ते परिकीर्तितः ६६
दातव्यो देशिकेन्द्रेण आत्मनश्रेय इच्छता
एवं गणपतेर्यागो मया ते परिकीर्तितः ६७
यष्टव्यं देवदेवेशि निर्विघ्नं जायते सदा
गणयागन्तु प्रथमं द्वितीयं भूपरिग्रहम् ६८
अधिवासं तृतीयन्तु चतुर्थं मण्डलं स्मृतम्

पञ्चमन्तु समाख्यातं चराडेशाय महात्मने ६९
गुरुपूजा स्मृता षष्ठा इति ते परिकीर्तिताः
षड्विधं यजते यस्तु आचार्यः सुसमाहितः ७०
मुच्यते सर्वपाशैस्तु स शिवं यात्यनामयम् ७१
इति निश्वासकारिकायां सप्तचत्वारिंशत्पटलः

देव्युवाच
यत्त्वया कथितं न्यासं पृथिव्यादिरनुक्रमात्
मन्त्रसोच्चारविन्यासं स्थानानि अनुपूर्वशः १
ते मया विदिता देवि यस्मिन् यस्मिन् व्यवस्थिताः
पुनश्च श्रोतुमिच्छामि संशयो मे महेश्वर २
न रूपेण विना न्यासो न च सिद्धिः प्रवर्तते
रूपहीना न सिध्यन्ति देवदैत्येन्द्रराक्षसः ३
रूपहीना महाक्रूराः विघ्नं कुर्वन्ति नायकाः
भूतैश्च परिभूयन्ते निवेशं यान्ति पन्नगाः ४
उच्चाटावेशकर्माणि मारणं ताडनानि च
शान्तिकं पौष्टिकं चैव अमृतीकरणानि च ५
वश्या नियोगसिद्धिश्च रूपहीना न सिध्यति
तस्माद्रूपं महादेव मन्त्राणां कथयस्व मे ६
तत्वानाञ्चैव देवेश देवानाञ्च विशेषतः
कलानां रूपमाख्या हि फलन्यासस्य यद्भवेत् ७
एतत्कार्यमशेषेण भगवन् वक्तुमर्हसि
ईश्वरः
साधु साधु महाप्राज्ञे यत्त्वया चोदितोरयहम् ८
न केनचिदहं पृष्टो ब्रह्मविष्णुसुरासुरैः
एतत्पृश्नं महापुरायं अशेषफलभूमिदम् ९

एकमृत्पाद्यकोह्येषु न्यासः परमदुर्लभः
प्राणायामपरो भूत्वा रूपलक्षणसंयुतम् १०
न्यसेद्बीजगणं देवि दक्षिणेन समाहितः
सप्तरश्मिप्रतीकाशं शुद्धस्फटिकनिर्मलम् ११
अयः पिण्डसुतप्ताभं रञ्जितं परिहारितम्
चन्द्रांशुनिर्मलं शुद्धं विद्युत्कोटिसमप्रभम् १२
रश्मिमालासहस्रैस्तु द्योतयन्तं समन्ततः
बीजं सञ्चिन्तयेद्देवि सर्वकिल्बिषनाशनम् १३
ब्रह्महत्यादि पापानि ध्यानमात्रेण इत्ययम्
योगमुत्पद्यते देवि मासानभ्यन्तरेण तु १४
एवं बीजस्य विन्यासो योनिनां शृणु सांप्रतम्
चण्डरश्मिप्रतीकाशं द्योतयन्तं समन्ततः १५
स्रवन्तममृतं दिव्यं जरारोगविनाशनम्
चन्द्रचन्द्रकसंकाशं योनिचक्रं विचिन्तयेत् १६
मध्ये नवात्मकं देवं तप्तहाटकसन्निभम्
ध्यातव्यं योगिभिर्नित्यं द्योतयन्तं समन्ततः १७
बीजयोनौ च वा रश्मिः देवदेव्यस्य रश्मयः
एकीभूतानि सञ्चित्य युगान्तकिरणात्विषः १८
बीजे तु ईश्वरः साक्षात् द्योतयन्तं देवि संस्थितम्
नवात्मानं वरारोहे ज्ञातव्यन्तु सदाशिवः १९
बीजयोनिनवात्मानां त्रयाणां रश्मयो बुधैः
पिण्डीभूताश्शिरस्थाने बिन्दुरेको विचिन्त्यता २०
तस्योपरि शिखा दिव्या नादं परमदुर्लभा
तस्यातिते स्थिता शक्तिः द्योतयन्ती समन्ततः २१
बिन्दोस्त्वीश्वरो ज्ञेयो + न्नदोर्ज्ञेयो सदाशिवः
शक्तिस्तु देवदेवेशि त्वमेव परिकीर्तिता २२

परत्वमपरश्चैव मातृका या प्रकीर्तिता
सांपृतं शृणु देव्यत्र तत्वानां कथयामि ते २३
उकारः प्रकृतिर्ज्ञेयो रूपत्रयसमन्विता
कृष्णं रक्तं तथा श्वेतं ध्यातव्यं योगिभिस्सदा २४
स्थानं पूर्वं मया ख्यातं ज्ञातव्यं देशिकेन तु
यकारं पौरुषं तत्वं शिवरूपं विचिन्तयेत् २५
सद्योतमदृशं वाऽपि अपरिध्वे तु पुष्करे
एतद्ध्यानपरो भूत्वा योगसिद्धिमवाप्नुयात् २६
वकारो नियतिः ज्ञेया तव वर्णं विचिन्तयेत्
अयं वा शुक्लकृष्णाञ्च रक्तसूत्रेण चोदितः २७
तादृशं ध्यायमानस्तु न्यासकाले वरानने
सिध्यते नात्र सन्देहः सत्यं देवि वदाम्यहम् २८
धूम्रवर्णाधरतलं लकारं कामरूपिणम्
द्योतयन्तं स्वकं स्थानं ध्यातव्यं शुद्धिमिच्छता २९
नीलमेघनिभाकारं मायातत्वसुभैरवम्
द्योतयन्तं स्वकं स्थानं ध्यात्वा सिद्धिर्न संशयः ३०
विद्यां वै रक्तवर्णाढयां न्यासकाले विचिन्तयेत्
सिध्यते ह्यविचारेण साधकस्सुसमाहितः ३१
पूर्वोक्ता ये महारूपाः तेन सिद्ध्यन्त्यसंशयः
ईश्वरस्तु रकारो वै चित्ररूप उदाहृतः ३२
द्योतयन्तं महातत्वं मूर्धस्थाने व्यवस्थितम्
सिध्यते ह्यविचारेण एवं न्यासं विचिन्तयेत् ३३
हंकारमीश्वरादूर्ध्वं देवदेवं सदाशिवः
ध्यातव्यं योगिभिर्नित्यं युगान्तकिरणत्विषा ३४
तेनेदं व्यापितं सर्वं त्रैलोक्यं सचराचरम्
अनेन सिद्ध्यते योगी सर्वज्ञत्वं प्रवर्तते ३५

बिन्दुनादं समाख्यातं शक्तेश्चैव समासतः
कथितं स रहस्यन्तु न मया गोपितं तव ३६
पृथिव्यादीनि तत्वानि शृणु देवि वदाम्यहम्
शुक्लपद्मोपरिष्ठात्तु शोभयन्ती महायशाः ३७
बालस्त्रीरूपिणी श्यामा आदित्यसमतेजसा
एवं रूपधरी ध्यात्वा विन्यसेत्पादयोर्धराम् ३८
सन्ततिध्यानयोगेन विषमाशु विनाशयेत्
आचार्यः सर्वभूतानां यथैव वसुधा भवेत् ३९
श्यामध्यानपरो भूत्वा आत्मन्यासन्तु कारयेत्
वायुञ्जानुप्रदेशे तु पीतवर्णं विचिन्तयेत् ४०
सिध्यतेऽनेन योगेन न्यासेन सुसमाहितः
आकाशं भुविरं रूपं ध्यातव्यं योगिभिस्सदा ४१
ऊरुयुग्मे महादेवि न्यासकाले विचिन्तयेत्
अहङ्कारं तथारक्तं गुह्ये चात्मनि विन्यसेत् ४२
आदित्योदयसङ्काशं न्यासकाले विचिन्तयेत्
कुङ्कुमारुणसङ्काशं चतुर्वक्त्रं चतुर्भुजम् ४३
चिन्तयेदक्षसूत्रैस्तु द्योतयन्तं समन्ततः
न्यासकाले तु देवेशि बुद्धिमेवं विधं न्यसेत् ४४
प्राकृतं पूर्वमाख्यातं पौरुषञ्च विशेषतः
ते त्वया विदिता देवि कलानां शृणु सांपृतम् ४५
निवृत्तिश्शुक्लवर्णाभा आपादात्कटिरन्ततः
द्योतयन्ती समन्तात्तु रश्मिभिर्हिमशीतलैः ४६
प्रतिष्ठा पीतवर्णाभा हृदि कट्यान्तु यावधि
न्यासकाले तु ध्यातव्या योगमुत्पद्यते सदा ४७
विद्या तु रक्तवर्णेन हृदि कर्णावधि स्थिता
द्योतयन्ती वरारोहे न्यासकाले विचिन्तयेत् ४८

आकर्णमूर्धनि यावत् शान्तिं वै विन्यसेत्सदा
चन्द्रातपप्रतीकाशां मुञ्चन्तीममृतं सदा ४९
ध्यातव्या योगिभिर्नित्यं न्यासकाले विचिन्तयेत्
सुसूक्ष्मा हृदयं यावत् ध्यातव्या नित्यमेव हि ५०
बालातपत्रनीकाशा न्यासकाले विचिन्तयेत्
अमृताकर्णमाश्रित्य अनेककिरणोज्वला ५१
नीवातातपसङ्काशा न्यासकाले विचिन्तयेत्
अमृतामृतकला या तु अनौपम्या ह्यनामया ५२
तद्ध्यानान्मुच्यते देवि जन्मसंसारबन्धनात्
मृत्युञ्जयेषिभिर्दिव्या ध्यातव्या नित्यमेव हि ५३
अमृतामृतेति या ज्ञेया जरामृत्युविनाशिनी
कर्णिके देवतान्यासं कर्तव्यं सिद्धिमिच्छता ५४
तेषां रूपं समाख्यातं यस्य एवं महात्मनः
चक्षुषा हि देवेशि वेदितव्यानि देशिकैः ५५
वक्त्रं तथैव विज्ञेयं वेदितव्यं प्रयत्नतः
हृदि पद्मस्य विन्यासं शृणु देवि वदाम्यहम् ५६
अनन्तं पूर्वमेवोक्तपद्मञ्च वरवर्णिनी
धर्मपादो भवेच्छुक्लो ज्ञानं रक्तं विचिन्तयेत् ५७
वैराग्यं पीतमित्याहुः ईश्वर्यं तमसन्निभम्
गात्रकाणि तथैवेह छदनानि तथैव च ५८
शक्त्यो गोरचनाभास्तु केसरा अरुणोपमा
एवं पद्मस्य विन्यासं यागकाले विचिन्तयेत् ५९
दीक्षाकाले तु देवेशि नित्यमेवं विचिन्तयेत्
तत्तन्यासे तु ते देवि ततस्तत्वं विचिन्तयेत् ६०
तेन सर्वमिदं तत्वं व्यापितं सर्वमेव तु
तस्य तेजस्मृतास्सर्वे ये केचित् समुदाहृताः ६१

तेजसा तस्य दीप्यन्ते सर्वतत्वा न संशयः
एकैके तु कृते न्यासे एकैकं तेन भाषयेत्  ६२
तदा तत्वगणास्सर्वे सिद्धिमुक्तिफलप्रदाः
मन्त्रास्तथैव ज्ञातव्या कलाश्चैव समन्ततः  ६३
एवं न्यासं पुरा कृत्वा सामर्थ्यं सर्वकर्मसु
उच्चाटे मारणे चैव ताडनेऽपि वरानने  ६४
शूलहस्तमहारौद्रा क्रोधलोहितलोचनाः
भ्रुकुटीकराळवदना क्रूरकर्मसुयोजयेत्  ६५
ऊर्ध्वकेशा महारौद्रा कृष्णवर्णा भयावहाः
कृशयन्तीं सदा देवि चिन्तयेन्मन्त्रदेवताम्  ६६
मुद्गरायुधहस्ताञ्च शूलखट्वाङ्गधारिणीम्
पाषाणधारिणीञ्चैव काष्ठहस्तांस्तथैव च  ६७
हुङ्कारमादिसंयुक्तां फट्कारान्तेन दीपिताम्
मारणोच्चारणादीनि कुरुते नात्र संशयः  ६८
शान्तिके पौष्टिके चैव शृणु देवि वदाम्यहम्
सौम्यां शुक्लीं महादेवि श्वेतपद्मे व्यवस्थिताम्  ६९
श्वेतपद्मधरास्सर्वे कुंभहस्तास्तथैव च
चन्द्रांशुधवलस्सौम्याः प्रासादं सव्यपाणिना  ७०
ध्यातव्या देवता देवि पौष्टिके शान्तितर्पणे
वशीकरण आकर्षे पाशमङ्कुशधारिणीम्  ७१
रक्तवर्णाश्च ते सर्वे ध्यातव्यास्साधकेन तु
स्तंभने कृष्णवर्णान्तु नित्यमेव विचिन्तयेत्  ७२
मूर्तिन्यासं पुराकृत्य पश्चान्यासं समारभेत्
एष देवि समाख्यातो न्यासः परमदुर्लभः  ७३
अनुकूले तु भक्ते तु मया तु कथितं तव
एवं न्यास इह प्रोक्तः सर्वमन्त्रेषु चोत्तमः  ७४

ब्रह्महत्यादिकैः पापैः न्यासादेव प्रमुच्यते
अभोज्य भक्षणं कृत्वा हत्वा लोकं चराचरम् ७५
मुच्यते नात्र सन्देहो न्यासं कृत्वा नराधमः
सुवर्णस्तेयगोदानं हुत्वा बहुतराणि च ७६
मुच्यते तत्क्षणाद्देवि न्यासं कृत्वा न संशयः
एवं न्यासविधिं कृत्वा आचार्यस्सुसमाहितः ७७
मोचयेद्दर्शनादेव नात्र कार्या विचारणा
कालयागविधानेन देशिको यजते यदि ७८
न शक्तो देवि तस्याहं प्रसक्तं गुणसंपदम्
एकाहमपि मया न्यासं कुरुते साधकोत्तमः ७९
मुच्यते नात्र सन्देहो जन्मसंसारबन्धनात्
सप्ताहमभ्यसेद्यस्तु इमं न्यासं समाहितः ८०
एकविंशकलानाशु नरकान्नयते शिवान्
मासादुत्पद्यते योगः त्रिसन्ध्यं यस्तु चिन्तयेत् ८१
षण्मासं योगयुक्तस्तु यं घर्मं मनसि चिन्तयेत्
सर्वं संपादयत्येष लोकस्यैव हिताहितम् ८२
वत्सराभ्यासयोगेन देवेश समनां व्रजेत्
त्रैलोक्यस्य तु वृत्तान्तं कथयेन्नात्र संशयः ८३
द्विरब्दं योगयुक्तस्तु लोकालोकञ्चराचरम्
गच्छते नाग्त्र सन्देहः साधकस्सुसमाहितः ८४
निदानखद्यमानानि क्षेत्रनादमनेकधा
सिद्ध्यते नात्र सन्देहः योगिनस्तु न संशयः ८५
उच्छिष्टान्तर्दधाने च पादलेपरसायने
आकाशगमनञ्चैव दण्डकाष्ठपवित्रकम् ८६
योगञ्च जनसिद्धिञ्च सिध्यते नात्र संशयः
ज्ञात्वा न्यासमिदं देवि विन्यासमन्यत्पलालवत् ८७

लक्षाह्यत्रैव ज्ञातव्या स्तत्वान्यत्रैव सुवृते
आत्माह्यत्रैव ज्ञातव्यो देवाश्चैव विशेषतः ८८
एतद्देवि न दातव्यं पुत्रस्यापि वरानने
साधकस्य च दातव्यमाचार्यस्य तथैव च ८९
अन्येषां दुष्टमर्त्यानां श्रेयसोऽपि न पातयेत्
देव्युवाच
पञ्चब्रह्मेशवाङ्गानां रूपाणि कथयस्व मे ९०
तैर्विना लभते सिद्धिं विद्याङ्गैश्च तथैव च
ईश्वर उवाच
पञ्चब्रह्मशिवाङ्गानां सामान्यं परमेश्वरि ९१
सर्वत्र जायते देवि रूपलक्षणसंयुतः
नवसूत्रे पुरा प्रोक्तः रूपास्ता एव शोभने ९२
वक्त्रयोगं समाख्यातं ज्ञातव्या देशिकेन तु
हृदयस्य प्रवक्ष्यामि रूपं शृणु सुलोचने ९३
शुद्धस्फटिकसंकाशं किरणैरपि सङ्कुलम्
द्योतयन्तं ह्यधश्चोर्ध्वं हृत्प्रदेशे व्यवस्थितम् ९४
हृदि ध्यानपरे देवि न्यस्यते नात्र संशयः
शिरन्यासं शिरो देवि हारकुन्देन्दुसन्निभम् ९५
द्योतयन्तं समन्तात्तु न्यासकाले विचिन्तयेत्
इन्दुकोटिप्रतीकाशं शिखां देविं विचिन्तयेत् ९६
स्त्रवन्तीममृता धाराः प्लावयन्तीं विचिन्तयेत्
तेन न्यासेन ध्यानेन साधकस्सुसमाहितः ९७
सिध्यते नात्र सन्देहो जरारोगविवर्जितः
कवचं सर्वगात्रेषु सूर्यकोटिसमप्रभम् ९८
सर्वविघ्नहरञ्चैव ज्वलन्तं सर्वतो मुखम्
न्यासेन सिध्यते देवि नात्र कार्या विचारणा ९९

अस्त्रं हस्तप्रदेशे तु न तु स्वाङ्गेषु योजयेत्
त्रासयन्तं महादेवि विघ्नाश्चैव विचिन्तयेत् १००
अस्त्रं पूर्वं जपित्वा तु अयुतानि दशैव तु
पश्चात्तु साधनं कुर्यात् विनिघ्नैः सिद्धिमाप्नुयात् १०१
तेन सर्वं समाहृत्य दिशासु विदिशासु च
अस्त्रमध्ये जपं कुर्यात् तदा सिध्यति नान्यथा १०२
विद्याङ्गा एवमेव स्यात् कथितं तव शोभने
तत्र पाशुपतं ह्यस्त्रं शिवाङ्गं घोरसंज्ञितम् १०३
विद्याङ्गामयुतं देवि जप्तव्यं सुसमाहितैः
तदा निर्विघ्नतो देवि सिध्यते साधकोत्तमः १०४
प्राकारे तु सदा चिन्त्ये जपकाले तु साधकः
तदा निर्विघ्नमायाति साधको नात्र संशयः १०५
जयसङ्कर्षणं कुर्यात् विद्याङ्गे सुसमाहितः
कृत्वा पञ्जरवत्योगं मध्ये तु जपमारभेत् १०६
अर्घ्यन्त्येकादशेनैव जपमध्ये निवेशितम्
प्रमाणं जपितं मन्त्रं पुनरेव तु सुवृते १०७
पूजयित्वा यथान्यायं कल्पोक्तं कर्म आचरेत्
तदा सिद्धिमवाप्नोति देव्या मानुषकृत्रिमाः १०८
क्रीडन्ते मन्त्रिणस्सिद्धाः पूर्वोक्तानां यथाक्रमम्
सर्वकर्मकरः श्रीमान् कर्मणा मनसा गिरा १०९
तत्वं दृष्ट्वा जपेत्तत्वं लक्षमेकं वरानने
योगसिद्धिमवाप्नोति मन्त्रास्सिद्ध्यन्ति नान्यथा ११०
रात्रौ शयनकाले तु शतमावर्तयेद्यदि
नष्टञ्च कथयेद्देवि शास्त्राणि विविधानि च १११
स एव प्रेरको देवः कथयेच्च न संशयः
गुरुं ज्ञात्वा महादेवि कल्पते नात्र संशयः ११२

देव्युवाच
शब्दस्पर्शादिरूपेभ्यः इन्द्रियेभ्यस्तथैव च
यस्मिन् स्थाने तु ते शोध्याः एकदिक्कामवेदितुः  ११३
ईश्वरः
शृणु देवि प्रवक्ष्यामि यस्मिन् सिद्ध्यन्ति शोभने
तथा ते कथयिष्यामि तदेकाग्रमनाः शृणु  ११४
पृथिव्यापस्तथा तेजो वायुराकाशमेव च
पञ्च पञ्च सुवैयोज्या देशिकेन महात्मना  ११५
पृथिव्यादिगुणा ये तु पृथिव्यांस्तांस्तु शोधयेत्
एवमष्टवं तथा तेजो आशुगे वै तथैव च  ११६
पृथिव्यां गन्धतन्मात्रं विषयां गन्धसंज्ञितम्
कर्मेन्द्रियचरुस्थञ्च श्रोत्रज्ञानेन्द्रियं स्मृतम्  ११७
एवमादिक्रमेणैव शोधनीया विपश्चिता
शाक्तौ शिवं तथैवेह एकैकं क्रमशस्तथा  ११८
शोधयेत्पञ्चसु तथा पृथिव्यादिषु शोभने
अहङ्कारस्तथा षष्ठो अनुलोमाद्विशोधयेत्  ११९
एषा ते कथिता दीक्षा मन्त्रोद्धारमशेषतः
कलानां निर्णयञ्चैव तत्वानां निर्णयस्तथा  १२०
पदानाञ्च समासेन व्याख्यातं तव शोभने
ज्ञात्वा भक्तिमयं शिष्यं दीक्षां व्याख्यातुमर्हसि  १२१
इति निश्वासकारिकायां अष्टचत्वारिंशत्पटलः

देव्युवाच
सकलं देवदेवेश श्रुतं विस्तरतः प्रभो
निष्कलं श्रोतुमिच्छामि सकलं व्याप्य विष्ठितम्  १
ईश्वरः

अतः परं प्रवक्ष्यामि शिवधर्मं सनातनम्
येन मुक्तस्सधर्मात्मा धर्मोत्सन्नो निगद्यते २
प्रभुस्वतन्त्रश्च सदा सदासंपूर्णलक्षणः
अमेयस्सर्वगश्शुद्धः सर्वशक्तिकलान्वितः ३
व्याप्य कृत्स्नां स्थितो लोकाननन्तादिशिवान्तकान्
एकान्तावस्थितो ह्येषः शिवशक्तिसमन्वितः ४
ईशत्यग्रे स भगवान् ईशिनीभिश्शिवोऽव्ययः
जगत्कृत्स्नं महायोगं शक्तियोगं मरीचिभिः ५
स्थाप्यते विंशके चैव पशून्यस्मात्स्वशक्तिभिः
शान्तत्वात् स्वकर्तृत्वात् शक्तिमत्वान्महौजसः ६
शासनाच्छमनाच्छक्तिक्षेत्रज्ञानुग्रहं प्रति
प्रकुर्वन्ति जगत्कृत्स्नं शक्तयस्ता महात्मनः ७
शिवेनाधिष्ठितं यस्मात् जगत्सर्वं चराचरम्
सर्वाकारमनाकारमनौपम्यमनामयम् ८
सर्वैस्सर्वकलाव्यापी सूक्ष्मस्तन्मयां गतः
मन्त्रतेजोमयोनित्यमचिन्त्यः परमश्शिवः ९
सर्वप्रमाणदूरस्थः तुर्यातीतः परापरः
वाग्विशुद्धः परज्योतिः स्वतेजो दृढगोचरः १०
अप्रमेयमनिर्देश्यमनौपम्यमनामयम्
सुसूक्ष्ममव्ययन्नित्यं कारणं ज्योतिरुत्तमम् ११
सोमार्कानलतेजोभिः पिण्डीकृतसहस्रशः
विद्युत्परार्धकोटीनां तत्तेजो व्याप्य तिष्ठति १२
वैद्युतश्चन्द्रसूर्यौ च नक्षत्राणि हुताशनः
तेजसा तस्य दीप्यन्ते महातेजाश्च स स्मृतः १३
मणेरिव मणिं तेजः स्वतेजोपरिसंवृतः
एवं व्रतः परो देवः स तेजस्तेजसामपि १४

व्योमस्थं व्योमवन्नित्यं व्योमसाधर्म्यरूपिणम्
निर्मलादर्शकप्रख्यं शरद्वारिसमप्रभम् १५
अभिख्यामिव सूर्याणां युगपद्युदयं यथा
अत्यन्तनष्टतमसा ऊर्ध्वभासा दिशो दश १६
विधा विचिन्त्यदलक्ष्यमचिन्त्यरूपमीश्वरम्
नित्यं सर्वगतं सूक्ष्मं कूटस्थमचलं ध्रुवम् १७
सर्वगं सर्वकृत्सर्वस्सवेशस्सर्ववित्प्रभुः
सर्वभूतात्मभूतस्थ परं व्योमशिवोऽव्ययः १८
भोज्यं भोक्ता च दाता च सर्वतत्वतनुः परः
निश्चित्य कर्तृकर्ता च सर्वभूतपतिश्शिवः १९
नानाशिवसहस्राणि पद्मसर्वयुतानि च
सर्वे शुद्धाश्च नित्याश्च ये स्थिताश्शिवगोचरे २०
सूर्यकोटिप्रभास्सर्वे शुद्धाश्चैव स्वभावतः
पृथग्रूपन्तु यत्प्रोक्तं साधकैः शास्त्रचिन्तकैः २१
महास्थानमहाज्ञानं महाप्रस्थानमेव च
महाद्युतिर्महाभूतिः महातेजा महायशाः २२
अप्रतर्क्यमविज्ञेयं स्वरूपे संप्रतिष्ठितम्
अग्राह्यं सर्वभूतस्थमक्षोभ्यञ्चाव्ययं तथा २३
अघोषमस्वरञ्चैव आत्मसंवेद्यमव्ययम्
आत्मसंस्थञ्च विज्ञेयमरूपञ्चाप्रतिष्ठितम् २४
अक्लेशमक्षयञ्चैव समस्तं व्याप्तरूपिणम्
अजञ्चानन्तरूपञ्च अगोत्रपितृमातृकम् २५
अनस्थिसज्ञरुधिरं अत्वचं ह्यकलेबरम्
अनादिमध्यनिधनमचाल्यमचलं ध्रुवम् २६
अप्रसारितविस्तीर्णमव्युच्छन्नं समन्ततः
समञ्च सर्वभूतेषु सततं वितनन्तनुत् २७

स बाह्येभ्यन्तरे सर्वे सर्वालयमनालयम्
निर्मलं निरहङ्कारं निर्बुद्धिञ्च निरिन्द्रियम् २८
निर्गुणं निश्चलञ्चैव निष्प्रपञ्चं निरामयम्
नित्योदयं निराभासं निर्विकल्पं निरामयम् २९
निस्संशयन्निरौपम्यन्नित्यं नित्योदितं तथा
न निम्नं नोधितञ्चैव न वक्रन्न च वा ऋजुः ३०
न दीर्घन्न च वा ह्रस्वं न स्थूलं न च वा तनुः
न त्रिकोणं चतुष्कोणं न चैव परिमण्डलम् ३१
न चैव कश्चिदाकारस्सर्वाकृतिनिराकृतिः
न परोक्षं समक्षञ्च न गतिर्न च वा गतिः ३२
नो परिष्ठान्न चाधस्ताद्वाग्रतो न च पृष्ठतः
न चास्ति न च वानास्ति सर्वस्थं किमवीष्ठितम् ३३
न शरीरं पृथक्त्वेन न चैकस्थं व्यवस्थितम्
न परं प्रत्ययं वेद्यन्नापरं किञ्चिदुच्यते ३४
शिवं सूक्ष्मञ्च विज्ञेयं सृष्टिसंहारवर्जितम्
न तत्र जायते सृष्टिः संहारो नैव जायते ३५
अनारंभमनुत्पाद्यमक्षयञ्चानलं तथा
अव्ययञ्च ध्रुवन्नित्यमनौपम्यमनामयम् ३६
अनाश्रितमनादञ्च अविकारी तदुच्यते
सदा शान्तं सुनिर्वाणं परितृप्तिञ्च सर्वतः ३७
सर्वभावविनिर्मुक्तं क्रियाकालविवर्जितम्
अभोज्यञ्चाप्यभुक्तञ्च स्वच्छञ्चैव सुनिर्मलम् ३८
अप्रमेयमविज्ञेयं सर्वज्ञं सर्वतोमुखम्
धर्माधर्मगुणैहीनं संश्रितं न च केनचित् ३९
न चिन्तयित्वा मा भाति न च शक्यं प्रकाशितुम्
विरजं चारजं शुद्धं शिवधर्म द्यविश्च यत् ४०

भावाभावविनिर्मुक्तं मायामायिविवर्जितम्
दूषणादोषरहितं न चलं नावचालितम् ४१
प्रत्यक्षादिप्रमाणैस्तु न च शक्यं प्रकाशितुम्
अनन्तनहनं सूक्ष्मं प्रमाणातीतलक्षणम् ४२
सर्वागमैरगम्यञ्च बहिरन्तश्च संस्थितम्
सर्वकारणधर्मञ्च कारणातीतलक्षणम् ४३
एवमेव महातत्वमसादृश्य गुणै स्थितम्
न च तच्छक्यते ज्ञातुं विना तस्याप्यनुग्रहात् ४४
कर्तानुमानबुध्या च शास्त्राणाञ्च विकल्पनात्
गुरुवक्त्रात्तु लभ्येत तच्छक्त्या संप्रचोदितात् ४५
तत्वरूपं वरं यस्मात् निस्तत्वं तत्ववर्जितम्
यः प्रपद्येदिदं सर्वं ज्ञातं तेनापि सर्वतः ४६
आदौ मध्ये तथाचान्ते वस्तु शुद्धश्च यत्पदम्
तदीर्यतेनात्र भेदेन मनसा तु मनोन्मनौ ४७
व्यापिनं सर्वभावानां शुद्धाशुद्धत्वलक्षणः
अशुद्धं शुद्धतत्वन्तु व्योमामृतपदोद्भवः ४८
न तस्माच्छक्यते वक्तुं विज्ञेयं निष्कलं शुभम्
स्वप्रकाशपरं वेद्यं न केनापि प्रकाशते ४९
यथा पुमान् स्वविषयान् स्वशक्त्यान्ववलोकते
तथाऽसौ परमो देवः स्वशक्त्यैवावलोकते ५०
सर्वज्ञश्च सुसंपूर्णः स्वभावविमलश्शिवः
सर्वदोषविनिर्मुक्तमसामान्यगुणोदयः ५१
न पार्वतीपतिरसौ च कपालशूली-
नासावपि त्रिपुरहानशशाङ्कमौलिः ।
एकान्तशान्तरहितः सततप्रवाहः
कोपप्रसादरहितः प्रभुरन्य ईशः ५२

शिवमादौ शिवमध्ये शिवमन्ते च सर्वदा
महामालञ्जनाजालव्यतीततनुरीश्वरः ५३
जन्ममृत्युजरामोहकामक्रोधभवोद्भवाः
न विद्यन्ते यतस्तस्य शान्तं शिवपदं ततः ५४
ब्रह्मादिकारणेशानां शिवत्व सा दर्शनात्
शिवत्वं गीयते शंभोः सदा सौम्यं महात्मनः ५५
शिवमेकान्तकल्याणमनौपम्यमनामयम्
सर्वमङ्गलमाङ्गल्यं नित्यं शुभकरं शिवम् ५६
अर्हस्तु पूजनीयार्थास्सर्वे भूतपतिर्द्विजैः
जगद्गुरुस्सविज्ञेयः सर्वालङ्कारसंयुतः ५७
कारुण्यभस्मलिप्ताङ्गः शान्तिखट्वाङ्गधारणः
निस्सहत्वजटाधारः शिवचन्द्रकिरीटवान् ५८
ज्ञानशूलधरो नित्यं कृपाजिह्वाग्रपन्नगः
निरावरणमन्नत्वं त्रैलोक्यं दिव्यचक्षुषः ५९
कामात्मतापनो देव इच्छाशक्तिविभूषितः
अचलश्शाश्वतो व्यापी अजो नित्यस्वयंभुवः ६०
अप्रवृत्तस्सुसंवृत्तो ज्ञाता कर्ता च शाश्वतः
सर्वज्ञः सर्वकर्ता च सर्वतोक्षिशिरोमुखः ६१
+++ सर्वभूतः शिवो ज्ञेयस्तु शाश्वतः
अनक्षरमनुत्पाद्यमनिर्देश्यमनामयम् ६२
तत्वावभासकं नित्यं ऐश्वर्यं ज्ञानमुच्यते
साक्षिवत्संस्थितो नित्यं त्रिप्रकारस्य कर्मणः ६३
स भित्वा नाभिमध्यं तं संसारं न च संमृशेत्
यस्य यस्य मनश्चेष्टा शुभे वा यदि वाऽशुभे ६४
समन्तात्सर्वभूतानां ज्ञस्वभावञ्च व्यापकः
क्षणं यत्पश्यते सर्वं सुखदुःखं हिताहितम् ६५

संसारमराडलं कृत्स्नमादिमध्यान्तसंस्थितम्
सर्वमात्मनि पश्येत न च संयुज्यते विभुः ६६
सर्वभूतकृतं कृत्स्नं सङ्कल्पाध्यवसायिनम्
शृणुते मनुते नित्यं न तु युज्यति सर्वतः ६७
शब्दस्पर्शञ्च रूपञ्च रसं गन्धं शुभाशुभम्
श्रोता वक्ता च भोक्ता च मन्ता च सुखदुःखयोः ६८
प्रादात्सर्वत्र सर्पादश्चेता पश्यन् शृणोति च
अशेषभुवनव्यापी निश्शेषो बन्धमोक्षकृत् ६९
सर्वज्ञः सर्वकरणः सृष्टिसंहारकारकः
अनादिमध्यनिधनः प्रभवः सर्वतत्वगः ७०
सृष्टिसंहारकर्ता च क्रीडया प्रभवेश्वरः
सर्वज्ञश्च प्रबुद्धश्च प्रकको बोधकस्तथा ७१
पालको जलपाल्यश्च निग्रहानुग्रहेश्वरः
उत्पादको ह्यनुत्पाद्य आशास्यः शासिता तथा ७२
ससर्वदीपसंवेद्यो ध्रुवश्शान्तोऽथ निर्मलः
इच्छया सकलो देव इच्छया कलवर्जितः ७३
इच्छया च सृजत्येन इच्छया संहरत्यपि
प्रवृत्तस्य विरोधीते विनाशोत्पत्तिकारणम् ७४
निर्मलोधिकमानश्च अप्रमेयः प्रमाणवित्
सर्वसंभवहेतुश्चाप्यहेतुश्च सनातनः ७५
सुधामा शाश्वतो नित्यः प्रभवः कारणेश्वरः
सर्वकारणधर्मश्च शक्तिभिः प्रविभाव्यते ७६
स्वतो धर्मश्च भगवान् प्रतीघातविलक्षणः
अनादिरव्ययश्चैव अविचाल्यो विचालकः ७७
भक्तो चैव तु भोक्ता च व्यापकः परमेश्वरः
शक्तिभिश्चाप्रमेयश्च तृप्तश्च भगवान् शिवः ७८

अक्षोभ्यश्चैव विक्षोभ्य तत्वानाञ्च विशेषतः
अतर्क्य चेष्टितो देवः प्रभुः प्रभवतामपि ७९
बुद्धिमत्पूर्वको देवः परं व्योम परात्परः
स तस्मात् ज्ञानमात्रेण निष्ठीवे हि स प्रेरितः ८०
ओषधी योगवच्चैव यथाऽप्य बलिना बलः
प्रेरको निष्कलो ह्येष यथा सकलनिष्कलः ८१
सुसूक्ष्मत्वादमेयत्वादीशित्वात्परमेश्वरि
शक्तिराद्यातिविमला शक्तिभिन्ना निवार्यते ८२
सुसमिद्धो यथा वह्नि स्थलन्दहति शाड्वलम्
भवेति शक्तिजिह्वत्वं प्रदीप्यन्तं निवार्यते ८३
उत्पत्तिविलयानान्तु स्थित्यनुग्रहकारिणः
कृतप्रसादनोपाय लक्षणं गीर्यते प्रभोः ८४
कालस्तरुष्वमूर्तोऽपि करोति कुसुमोच्चयम्
फलानाञ्च तथा शेषां पतनञ्च यथा निशम् ८५
तथोत्पत्तिविनाशानां कर्ता शंभुरमूर्तिमान्
अयस्कान्तगताशक्तिरमूर्ता कुरुते क्रियाः ८६
गृह्णात्यधो यथा तत्वं शिवशक्तिरनामया
शक्तयश्शङ्करवशाद्वर्तन्ते त्यन्तनिर्मलाः ८७
कर्ता स एव जगतः परोऽपि स इहोच्यते
न करोति स्वयं यस्मात् शान्तस्तेन निगद्यते ८८
न हि कर्ता कारयिता नित्या देवस्सदाशिवः
यथा कृषीवला हीनां स्वकर्माण्यनुवर्तिनाम् ८९
जरा जातिना प्रसादेन न विना फलदानि तु
एवं सर्वाणि कर्माणि जपध्यानानि कानिचित् ९०
महेश्वरप्रसादेन न विना फलदानि तु
अतीतस्सर्वभावानां अचिन्त्यगुणवर्जितः ९१

सर्वकृत् सर्वस्वभूतेन सनातनः
नचासौ चेन्द्रियग्राह्यो न करेण न चक्षुषा ९२
आत्मनैवात्मना ग्राह्यो सर्वशः प्रभुरीश्वरः
पूरयती निरवशेषं समस्ततनुरीश्वरोप्यतनुः ९४
सकलपशुबन्धमोक्षप्रलयोत्पत्तिहेतुरेक एषः
अधितिष्ठति भूतानि गूढश्शब्दादिवर्जितः ९५
सर्वशश्शान्तस्सर्वज्ञः प्रभुरीशान अव्ययः
ओतप्रोतमनाद्यन्तं शक्तिभिर्व्याप्य संस्थितः ९६
चराचरं विश्वमिदं ओजसा सर्वतोमुखः
सर्वतः सर्वभूतेषु स्थावरेषु चरेषु च ९७
सर्वबीजकलाव्यापी सर्वं व्याप्य व्यवस्थितः
अग्रे प्रकाशयेद्यस्मात् अग्रे शितवाच्छिवाध्वरे ९८
सर्वासित्वाच्च तत्वानां अग्निर्वै सर्वतोमुखः
सर्वान्तस्समाधिस्थ अन्तःकरणगोचरः ९९
यदग्रे लक्ष्यते सूक्ष्मं योगिभिस्तदुपास्यते
सर्वात्मा सर्वभूतानां सर्वभूतविवर्जितः १००
भावात्मा सर्वभावानां सर्वभावविवर्जितः
प्रधानगुणसंहर्ता तत्वं मया वरं स्मृतम् १०१
सर्वभूतगुणावस्थस्सर्वभूतगुहाश्रयः
सर्वभूतात्मसंस्थानं सर्वत्र गतमव्ययम् १०२
जयावृत्तं सुसंपूर्णं शुद्धं स्वात्मव्यवस्थितः
एवं परमनिर्वाणस्वमायी परमश्शिवः १०३
अनादिमध्यनिधनो निर्द्वन्द्वः च्छिन्नसंशयः
एष दुःखातिगो हेतुरेष क्षेमकरश्शिवः १०४
विकारदेशोपमतुल्यवर्जितः
तथोपमा रूपनिरस्तसंस्कृतिः ।

अभावभावेन विलक्षणो धियः
शिवस्सदाकारणकारणान्तरः १०५
वस्तु यस्मात् क्वचित् किञ्चित् तादृगन्यन्न विद्यते
स निर्वाणः परश्शुद्धो निर्मायी परमश्शिवः १०६
एष ते निष्कलो देवः सकलेन समन्वितः
अनुध्यानेन तन्नित्यं स्मरन्ती मनसा धियः १०७
कारिकायां महादेवि कथितं तव सुवृते
निश्वासे तु परे तन्त्रे निष्कलस्सकलस्य तु १०८
शिवर्धममिदं सारं सर्वतन्त्रोत्तमोत्तमम्
देयं शैवाभिषिक्ताय न दद्यात्परदीक्षिते १०९
इति निश्वासकारिकायां एकोन पञ्चाशत्पटलः

देव्युवाच
भगवन् देवदेवेश गोवृषाङ्कितशासन
सर्वज्ञः सर्वकर्ता च प्रसादी भव मे प्रभो १
सर्वेषामेव मन्त्राणां समुदायं महेश्वर
कथयस्व महादेव मन्त्रचारं मम प्रभो २
व्योमव्याप्यादितः कृत्वा पञ्चाङ्गानां तथैव च
ब्रह्मणाञ्चैव देवेश कथयस्व प्रसादतः ३
मातृकायां कथं ह्यात्मा भिन्नाभिन्नेषु वर्तते
कलेषु क्रियती संख्या प्रभुः किरति साङ्कुरः ४
मान्त्राणां वर्णसंख्यायां कथं ह्यात्मा व्यवस्थितः
दशात्ममादितः कृत्वा तस्याङ्गानां यथाक्रमम् ५
समुदायेन देवेश कथयस्व यथातथम्
पदेषु कियती संख्या प्रभुश्चरति नित्यशः ६
कलानां सर्वमन्त्राणां अन्तः करणवर्जितः

कथञ्चरति देवेश कथयस्व च शङ्कर ७
अध्यात्मकेन देवेश कथस्व मम प्रभो
ईश्वरः
शृणु देवि महाज्ञानं यत्त्वया परिपृच्छितम् ८
न कस्यचित् समाख्यातं कथयामि तवाखिलम्
सर्वेषामेव मन्त्राणां मन्त्रचारमनुक्रमात् ९
येन विज्ञातमात्रेण मुच्यते सिध्यतेऽपि च
मन्त्रचारं महादेवि दुर्लभं त्रिदशैरपि १०
एकैकपदवर्णेषु विभज्य वरवर्णिनी
कथयामि न संदिग्धं प्राणेन सह सुवृते ११
पूर्वमेव समाख्यातं सहस्राण्येकविंशतिः
षट् शतेन तथा प्रोक्ता प्राणसंख्या यथाक्रमम् १२
तान् प्राणान् देवदेवेशि विभज्य अनुपूर्वशः
पदैस्तु यावती प्राणाः एकैकस्य विभागशः १३
यथा च चरते देही कथयामि तवाखिलम्
एकैकस्य तु वर्णस्य या संख्या वहतीश्वरे १४
कलेषु यावती संख्या शृणु देवि यथाक्रमम्
एतद्भेदविधानज्ञो भिन्न देहस्स उच्यते १५
स ज्ञानी भूतले नित्यं मोचकस्स शिवं नयेत्
येन येन हि मन्त्रेण करणं कुरुते नरः १६
सामरस्य च भावेन अव्युच्छिन्नस्वभावतः
स एवं मन्त्रमात्मानं याति नास्त्यत्र संशयः १७
यस्मिन् यस्मिन् पदेनैव योजयेन्मन्त्रदेवतम्
तन्मध्येन तु मन्त्रज्ञो मोचयेन्मुच्यतेति च १८
येन येन कलेनैव मन्त्री मन्त्रतनुर्भवेत्
तेन तेन कलेनैव मोचयेत्तत्वविद्गुरुः १९

येन येन तु वर्णेन आत्मानं योजयेन्नरः
तेन तेन हि वर्णेन मोचयेन्मुच्यतेऽपि च २०
येन येन हि तत्वेन कुरुते न ++ तनुं प्रिये
तेन तेन हि तत्वेन मोचयेन्मुच्यतेऽपि च २१
मन्त्राणां यावती वर्णास्तद्ध्यानात्तावती स्मृताः
तेन यष्टे हुते चैव सिध्यते मुच्यतेऽपि च २२
मातृका यावती वर्णा अध्वानां तावती स्मृताः
तेन यष्टे हुते चैव सिद्यते मुच्यतेऽपि च २३
एतत्ते कथितं सर्वं मन्त्राणां तव सुवृते
ज्ञात्वा सर्वमशेषेण दीक्षायोगजपं कुरु २४
पदवर्णशिवं कृत्वा पूजयेत यथाक्रमम्
ह्रस्वदीर्घास्तु ये वर्णाः स्वरयुक्तास्तु ये स्मृताः २५
ते वर्णा देवतैर्युक्तास्तत्वैश्चैव यथाक्रमम्
प्रणवोद्धारभेदेन ज्ञात्वाऽत्रैव पदानि तु २६
एकैकं पूजयेद्वर्णमानुपूर्वेण मन्त्रवित्
होमं पूर्वोदितस्तेषां कर्तव्यो देशिकेन तु २७
कलाभेदेन देवेशि यजते यदिदेशिकः
कलापत्रेषु संस्थाप्य मन्त्रकर्णिकया न्यसेत् २८
स्वमन्त्रेण तु सर्वेषां पूजा होमविधिक्रिया
कर्तव्या देशिकेन्द्रेण सिद्धिकामेन भामिनी २९
सर्वे ते न तु भेदेन ज्ञातव्यास्तत्ववेदिभिः
एवं पूज्य यथा न्यायं दीक्षां कुर्वीत देशिकः ३०
एतत्सर्वं समासेन मया ख्यातं वरानने
वेदितव्यं प्रयत्नेन साधकैर्मोक्षकाङ्क्षिभिः ३१
पुनरेव प्रवक्ष्यामि भेदामृतमनुत्तमम्
यज्ज्ञात्वा मुच्यतेऽवश्यं भवसंसारबन्धनात् ३२

आध्यात्मकप्रयोगेन वेदितव्यं मनीषिभिः
पूर्वादारभ्य विज्ञेयमेकैकस्य यथाक्रमम् ३३
एकाशीति त्वभावेन विभज्य वरवर्णिनी
कथयामि न संदिग्धं अशेषन्तु तवानघे ३४
विभाजितेषु ये प्राणा एकैकस्य विभागशः
प्राणाश्शतद्वयं ज्ञेयाः प्राणतिष्ठतस्तथैव च ३५
षट् प्राणाश्च पुनर्ज्ञेया निमेषद्वयमीश्वरी
लवमेकत्तृटिस्त्रिंशत् ज्ञातव्यं सुरसुन्दरि ३६
एकैके तु पदे देवि प्रभुश्चरति नित्यशः
अहोरात्रेण देवेशि ज्ञातव्यं सुसमाहितैः ३७
वामे च पदवर्णेषु प्रभुश्चरति तां शृणु
व्योमव्यापिनि वर्णानां प्राणा वै षष्टि कीर्तिताः ३८
त्रिभिस्तु रहिता देवि निमेषार्धं तथैव च
तृटिस्तु पञ्च भूतानां एकैकस्य वरानने ३९
एवं ज्ञात्वा विमुच्यन्ते ह्यशेषपशुबन्धनात्
कथितं तव देवेशि पदवर्णेषु शोभने ४०
व्योमव्यापिनमाख्यातं सद्याद्यान् कथयामि ते
सद्यस्य वामदेवस्य अघोरस्य तथैव च ४१
पुरुषेशस्य देवेशि कथयामि निबोधये
सद्यः कलाभिरष्टाभिः एकैके तु यथा भवेत् ४२
चरते नित्यमीशानी कथयामि यथाक्रमम्
सहस्त्रद्वयसंयुक्तं तथा सप्तशतानि च ४३
ज्ञातव्यं योगिनां नित्यं चारज्ञेन महात्मना
अघोरे तावती ज्ञेया देशिकेन महात्मना ४४
वामस्य संप्रवक्ष्यामि तदेकाग्रमना शृणु
सहस्त्रार्धसमाश्चैव तथा षट् त्रिंशतानि च ४५

प्राणाष्षष्टि पुनर्देवि ज्ञातव्या देशिकेन तु
प्राण एकस्समाख्यातो लवमेकं तथैव च  ४६
त्रिभागन्तु तृटिर्देवि वेदितव्यं प्रयत्नतः
पुरुषस्य प्रवक्ष्यामि शृणु देवि समासतः  ४७
सहस्राः पञ्च विज्ञेयाः शताश्चत्वार एव तु
एतद्देवि समाख्यातं ज्ञातव्यं तत्ववेदिना  ४८
ईशस्य कथयिष्यामि शृणु देवि समासतः
सहस्रास्तु समाख्याताः चत्वारो वरवर्णिनी  ४९
शतानि त्रीणि विज्ञेया विंशतिश्च न संशयः
एकैकस्य तु ब्रह्मस्य कला वै यावती स्मृता  ५०
तेन संख्येन देवेशि प्रभुश्चरति नित्यशः
कलाचारं समाख्यातं संक्षेपान्न तु विस्तरात्  ५१
वेदितव्यं प्रयत्नेन योगिभिस्तत्वचिन्तकैः
शिवाङ्गान् संप्रवक्ष्यामि शृणुष्वावहिता प्रिये  ५२
येन विज्ञातमात्रेण सिद्धिमोक्षध्रुवं लभेत्
सर्वात्मेति समाख्यातं हृदयं परमात्मनः  ५३
षट् षडक्षरको मन्त्र उच्चारेण समो भवेत्
सुशिवोऽष्टाक्षरः प्रोक्तः तस्य पारं शृणु प्रिये  ५४
सहस्रद्वयसंयुक्तमेकैकस्य यथाक्रमम्
शतानि सप्त विज्ञेयाः ज्ञातव्यं देशिकेन तु  ५५
एतत्ते चारमाख्यातं सुशिवस्य वरानने
ज्वालिन्याः संप्रवक्ष्यामि शृणु देवि समासतः  ५६
सहस्रैकं समाख्यातं शतानि च नवानि तु
प्राणषष्टिश्च विज्ञेयाः त्रयः प्राणस्तथैव च  ५७
निमेषास्तु तथा त्रीणि लवमेकं तथैव च
तृटिविश्वसमायुक्तो एकैकस्य वरानने  ५८

एवञ्चरति देवेशि ज्वालिन्या वर्णसङ्ग्रहे
पिङ्गलस्य प्रवक्ष्यामि तन्मे निगदतः शृणु ५९
या संख्या चरते देवि तामेवमवधारय
एतस्मिन् देवदेवेशि प्रभुश्चरति नित्यशः ६०
वर्णचारं समाख्यातं पिङ्गलस्य वरानने
अस्त्रेन्द्रस्य प्रवक्ष्यामि शृणु देवि समासतः ६१
वर्णे वर्णे यथा देवं कथयामि समासतः
शतानि पञ्च संख्यानि प्राणानां सुरसुन्दरि ६२
प्राणाश्चतुर्दश प्रोक्तं निमेषकं तथैव च
तृटिश्चतुर्थभागञ्च प्रभुश्चरति नित्यशः ६३
एष ते वर्णचारस्तु अघोरास्त्रस्य कीर्तितम्
एतद्देवि समाख्यातं शिवपीठे तु ये स्थिताः ६४
भिन्नावस्थेन देवेशि कथितञ्चानुपूर्वशः
अभिन्नाः शिवसंयुक्ताः मन्त्रा विद्योदितप्रदाः ६५
तदेषां चारमाख्यातं तन्नित्या वस्तु ये स्मृताः
शिवस्यासनमास्थानमन्त्राः सर्वज्ञकीर्तिताः ६६
अप्रमेयाह्यनूपम्या अनिर्देश्या अनामयाः
पदवर्णविभेदेन कलाभेदेन ये स्थिताः ६७
नेत्रचारेण देवेशि मन्त्रा ज्ञेयाः सदा बुधैः
एकैकन्तु पदा मन्त्रं जपते साधको यदि ६८
तदा चारेण जप्तव्या साधकेन महात्मना
मातृकायाः प्रवक्ष्यामि सर्वशास्त्रसुसंयुतम् ६९
येन विज्ञातमात्रेण सिध्यते साधकेश्वरः
तस्मात्सर्वप्रयत्नेन मातृकाचारमभ्यसेत् ७०
एकैकोदयदा यज्ञे अचिरादेव सिध्यति
अकारादिक्षकारान्ता मातृका परिकीर्तिताः ७१

एभिश्चरति विश्वात्मा यथा शृणु सुलोचने
एकैकस्य तु वर्णस्य शतानि चतुरेव तु ७२
द्वात्रिंशतिस्तथा प्राणा विज्ञेयास्साधकैस्सदा
तृटिरेका तु विज्ञेया साधकेन महात्मना ७३
तृटित्रिभागो विज्ञेयो वर्णे वर्णे चरेत्प्रभुः
अभिन्नं यजते यस्तु तस्य चारो न विद्यते ७४
एतत्ते कथितं देवि मातृकाचारमुत्तमम्
दशात्मदेहं वक्ष्यामि तदेकाग्रमना शृणु ७५
सहस्रस्य द्वयं ज्ञेयं शतमेकं तथैव च
प्राणाष्षष्टिस्तथैवेह एकैकस्य वरानने ७६
भिन्नस्य चारमाख्यातं शिवेन परमात्मना
अभिन्नेषु वरारोहे भवेन्नित्योदितः प्रभुः ७७
हृदयस्य प्रवक्ष्यामि चरं शृणु सुलोचने
सहस्रत्रितयं ज्ञेयमेकैकस्य वरानने ७८
पञ्चाशीतिस्तथा प्राणा निमेषद्वयमेव च
द्वयमेकञ्च देवेशि तृटिरेका प्रकीर्तिता ७९
तृटिरेका समाख्याता त्रयांशमपि सुवृते
हृदयस्तु समाख्यातः शिरसः कथयामि ते ८०
तत्वानां वाचनी संख्या सकलाद्या वरानने
संख्या वै तावती प्रोक्ता शिरसस्तु न संशयः ८१
अस्त्रं तथैव विज्ञेयं चारज्ञेन महात्मना
नेत्रस्यैव प्रवक्ष्यामि चारं शृणु सुलोचने ८२
सहस्राः सप्त विज्ञेयाः शतद्वितयमेव च
एतच्चारं समाख्यातं एकैकस्य वरानने ८३
ज्ञातव्यं देशिकेन्द्रेण सिद्धिमोक्षार्थकाङ्क्षिणा
वर्णस्थं कथितं देवि भिन्नचारकथा भवेत् ८४

शिवपीठे यदा देवि न दोषां चारमादिशेत्
सोनादिकस्तु भगवान् अनाख्येयं ह्यनामयम् ८५
वर्णस्थस्य पदस्थस्य भिन्नाभिन्नस्य वर्णितम्
पीठं त स तु देवेशि कथितञ्चानुपूर्वश ८६
एवं चारविभेदज्ञो मुच्यते नात्र संशयः
समुदायेन मन्त्राणां कथितं तव शोभने ८७
योगे योगजपश्चैव ज्ञातव्यो देशिकेन तु
संवत्सरतनुर्देवो यदि स्याद्व्रजने गुरुः ८८
एकोदयेन ज्ञातव्यं देशिकेन महात्मना
षड्वर्णं यजते मन्त्री तस्यैव जपमारभेत् ८९
निष्कलेन वरारोहे क्लेशेनैव सिद्ध्यति
भिन्नावस्थं त्रिधा कृत्वा न भूयो जन्मभाक् भवेत् ९०
सिद्धिन्यासेन सिद्ध्यर्थं संहारो मोक्षमेव तु
उत्पत्तिप्रलयं ज्ञात्वा सिध्यते नात्र संशयः ९१
इति निश्वासकारिकायां पञ्चाशत्पटलः

देव्युवाच
उत्पत्तिं प्रलयञ्चैव भूतानामागतिं गतिम्
एतदिच्छामि विज्ञातुं भगवन् वक्तुमर्हसि १
ईश्वरः
उत्पत्तिं विलयञ्चैव एतत्प्रश्नवरं महत्
तदहं संप्रवक्ष्यामि त्वत्प्रियार्थं वरानने २
उत्पत्तिर्निष्कलो ज्ञेयः प्रलयस्सकलस्मृतः
एतत् ज्ञानपदं दिव्यं स देवासुरमानुषम् ३
ऊर्ध्वेनैव तु सो जातः अधो नैव मृतो भवेत्
एतत्सूतकमित्याहुः सर्वप्राणिषु वर्तते ४

ऊर्ध्वं प्रेतकमेवोक्तं ज्ञातव्यञ्च प्रयत्नतः
द्वावेतौ त्यजते यस्तु स भवेत्तत्वपारगः ५
मृतके सूतकेनैव युक्तं सर्वमिदं जगत्
मृतकं यो न जानाति सूतकञ्च स्वदेहतः ६
न चासौ ज्ञानविज्ञेयो ज्ञानं तस्य कुतो भवेत्
भोक्तव्यं सर्वतो देवि त्यक्ते मृतकसूतके ७
कर्तव्योऽनुग्रहो देवि विज्ञातं मृतकसूतके
सूतकं देहमध्यस्थं मृतकञ्च तथैव च ८
परञ्च देहमध्यस्थं प्रविचार्य पृथक्पृथक्
उत्पत्तिप्रलयञ्चैव भूतानामागतिं गतिम् ९
ज्ञानार्थं चिन्तयेद्यस्तु स भवेत्तत्वपारगः
देवी
भगवन् श्रोतुमिच्छामि प्राणिनाञ्च हिताहितम् १०
कथं प्राणस्य सञ्चारः प्रतिसञ्चार एव च
कति प्राणास्मृता देव अब्दे तु कथयस्व मे ११
कस्मिन् काले चिरायु स्यात् कथं हीनायुरेव च
कथं दीर्घायुषञ्चैव कथं स्त्रीबालयोरपि १२
विनाशं देवदेवेश कथयस्व प्रमाणतः
ईश्वरः
शृणु देवि परप्रश्नः त्वया देवि उदाहृतः १३
अयुते द्वे सहस्रैकं षट् शतानि तथैव च
मया पूर्वं समाख्यातं त्वयाऽपि विदितं तथा १४
तथैव प्राणसंख्यातो विभज्य कथयामि ते
वर्षे वर्षे यावती प्राणा मासे पक्षे तथैव च १५
अह्निप्राणास्तु यावन्तो मृतौ संख्या तु यावती
गणितं गणितैर्देवि प्रमेयपरिमाणतः १६

कथयामि यथातथ्यं अशेषं तव सुवृते
अहोरात्रेण ज्ञातव्यो कालज्ञेन महात्मना १७
विभज्य सर्वथा प्राणान् पूर्वोक्ता ये प्रकीर्तिताः
एते प्राणा मया प्रोक्ता शतभागविभाजिताः १८
विभाजिते भवेद्देवि एकैकस्य विभाकशः
शतद्वयञ्च विज्ञेयं प्राणानां वरवर्णिनी १९
षोडशश्चैव विज्ञातो शब्दे तत्परिमाणतः
तृटिरष्टौ तु विज्ञेया अहो जीवस्य सुवृते २०
रात्रिर्वै तावती प्रोक्ता ज्ञातव्या चारवेदिना
न न प्राणा स्मृतः पक्षो मासस्तद्विगुणेन च २१
पक्षश्चतुर्गुणेनैव ऋतवः परिकीर्तिताः
अनेन अहमुख्येन ज्ञातव्यं तत्ववेदिना २२
शतत्रयं तथा षष्ठिः संवत्सरमुदाहृतम्
प्रहरे प्रहरे चैव वर्षाह्यत्र त्रयोदश २३
द्विगुणे पञ्चविंशत्या ज्ञातव्या वर्षाणि तु
अनेन क्रमयोगेन वेदितव्यं प्रयत्नतः २४
सांपृतं शृणु देव्यत्र अतिगुह्यं वरानने
न केनचिदहं पृष्टो न मया कथितं क्वचित् २५
तदहं संप्रवक्ष्यामि शृणुष्वेकमना मम
भास्करव्योदये जातं बालकं कश्चमी दिशेत् २६
द्वितीये वर्षे चैव तृतीये स चतुर्थके
पञ्च षट् सप्तमाष्टौ च यावद्वादशकोर्ध्वतः २७
प्रथमे दुतये चैव पुरुषेति समादिशेत्
यावद्वर्षा भवेद्यूनां तावदायुर्विनिर्दिशेत् २८
लौकिके प्रचुरे चैव तिलाभं परिकल्पते
प्राणसंख्यैस्तु देवेशि ये शवाः परिकीर्तिताः २९

बालमध्यमवृद्धेति अदेशतत्वकारयेत्
प्रमेयप्राणवर्षा ये मूर्तिबाले तमादिशेत् ३०
त्रिभागभाजितेनैव मध्यमं वृद्धमादिशेत्
एवं क्रमेण देवेशि ज्ञातव्यं तत्ववेदिना ३१
द्वितीये प्रहरे चैव त्रिजातेति तमादिशेत्
एवञ्चतुर्थमादेशं कृत्वा देवि समादिशेत् ३१
मृते वा देव देवेशि विदितव्यं प्रयत्नतः
एवं ध्यानपरो भूत्वा योगी वै सुसमाहितः ३२
तलामलकवत्सर्वं पश्यते नात्र संशयः
यो वेगिनि बिलेनैव देवतारमितं शुभम् ३३
संज्ञेयचारवन्देवि मुच्यते नात्र संशयः
धानाधिवहने चैव नारी त्येवं समादिशेत् ३४
अधो नाडीप्रभावेण शृणु देवि वदाम्यहम्
प्रथमे विषुवे लग्ने पुरुषस्मृतजातकः ३५
अवसाने स्त्रियञ्चैव मध्यजातं नपुंसकम्
यदाचारविभागे तु अविधज्ञास्तु योगवित् ३६
तदा ममास्तु विज्ञेयं तेन मृत्युं समादिशेत्
चतुष्षष्टिस्मृता मर्म देहिनां देहमुत्तमम् ३७
केचित्प्रत्ययभूतानि केचिदाध्यात्मिकानि तु
यानि कानि तथा चान्ये ज्ञातव्यानि यथाक्रमम् ३८
आध्यात्मिकानि देवेशि दुर्विज्ञेयानि तानि वै
औत्पादकोनि यानि स्युः कथयामि समासतः ३९
अकस्माज्ञायते देवि देहे देहभृतां वरे
सीदन्ति सर्वाण्यङ्गानि दाहः शोषः क्षयो भवेत् ४०
उत्पत्तिकेन देवेशि वेदनार्तस्य योगिनः
नाडीसञ्चारतत्त्वज्ञो लक्षभेदा कृतश्रमः ४१

उत्पत्तिका नाम मार्गाणां कृतकादि समादिशेत्
मृत्युञ्जयादिभिर्योगैः पुनस्ताः समये बुधः ४२
प्रत्यक्षं स्यन्दते मर्म ज्ञातव्यं तत्ववेदिना
यस्मिन् यस्मिन् भवेत्स्वेदः शृणुष्व वदामि ते ४३
गुल्फदेशे तु प्रथमं हस्ताङ्गुष्ठौ तु मूलतः
बाहुसन्धिस्त्रितीया तु स्तनाभ्यान्तु चतुर्थकम् ४४
पञ्चमं वोष्ठदेशे तु योगिभिस्समुदाहृतम्
कण्ठस्यैवोपरिष्ठात्तु षष्ठं वै परिकीर्तितम् ४५
मूर्धानं बहतेह्येकं महामर्ममुदाहृतम्
जानुसन्धिर्महामर्म चाष्टमं परिकीर्तितम् ४६
मेढ्रहस्ता महामर्म वेदितव्याः प्रयत्नतः
हृदये तु महामर्म देवि ते समुदाहृतः ४७
तानि वक्ष्यामि देवेशि यथातथ्येन मे शृणु
आध्यात्मिकानि यानि स्युः तानि वक्ष्यामि ते शृणु ४८
घोषमाणक्रमेणैव श्रुत्वा तं शृणु ते पुनः
तदा देवि विजानीयात् सद्यो मृत्युमुपस्थितः ४९
लक्षयेद्बाह्यतः प्रोक्तं पूर्वदुष्टानि यानि वै
न पश्यति रसो जिह्वे षण्मासमधिकं पुनः ५०
एवमादीनि चान्यान्नि वेद्यानि भुवि मानवैः
यो नरं वहते चैव मर्मस्तावत्तत स्मृतः ५१
एकस्मिन्वेगमायाति द्वितीये मन्दगामि च
तेषां वै सन्निरोधेन मर्मणाञ्चैव सुन्दरि ५२
ज्ञातव्यं योगिभिर्नित्यं तस्य मृत्युरुपस्थितः
अयात्मादात्मनः पश्येद्यदि स्यात्तत्ववेदिनः ५३
तदा मृत्युत्रयं चक्रं आश्रयीत विचक्षणः
तदा तु प्रशमं यान्ति नात्र कार्मा विचारणा ५४

एवं ते कथितं देवि अभिप्रीत्या मया तव
वेदितव्यं प्रयत्नेन न दद्याद्यस्य कस्यचित् ५५
देव्युवाच
ये त्वया कथिता मर्मा प्रत्यक्षं परमेश्वर
कथं संहारकाले तु वेदितव्यं हि योगिभिः ५६
किमादिसंहरेन्मर्म लक्षणं किन्नु संभवेत्
एतदिच्छामि विज्ञातुं भगवन् वक्तुमर्हसि ५७
ईश्वरः
शृणु देवि परं गुह्यं मर्माणां कथयामि ते
येन विज्ञातमात्रेण चारज्ञो नावसीदति ५८
प्रत्यहं मर्मणां दृष्ट्वा लक्षणं वै विचक्षणः
ज्ञात्वा श्रेयांसि कुर्वीत तदाऽसौ नावसीदति ५९
मर्माणि पञ्चविंशत्तु कालचक्रमुदाहृतम्
तदा प्रभृति कर्तव्या कालस्यैव प्रतिक्रिया ६०
द्वादशाब्दान् पुनर्वक्ष्ये त्रिविधं चक्रयोगतः
तत्र ज्ञात्वा पुनस्सम्यग्यथा मृत्युञ्जयो भवेत् ६१
सपक्षमासकथितं तद्भेदं कथयेत्पुनः
मृतसञ्जीवनञ्चैव कथयिष्ये यथा भवेत् ६२
तेभ्यो गुह्यमिदं देवि मर्माणान्तु परीक्षणम्
तथा येन प्रकारेण रोधितेन तु लक्षणम् ६३
तथा ते कथयिष्यामि हितार्थं सर्वयोगिनाम्
मणिबन्धेन शून्येन शृणु तस्यैव लक्षणम् ६४
मन्दायासौ सदा हस्तावङ्गुल्यं शिशिरायता
तिलको दह्यते यस्य संहृतं तं विनिर्दिशेत् ६५
एतद्देवि विदित्वा तु कुर्यात्तस्य प्रतिक्रियाम्
मासैकादशभिश्चैव मृत्युमभ्येति सुवृते ६६

स्कन्धशूलं प्रजायेत वातभग्नेव लक्ष्यते
मुहुर्मुहुः प्रकंपश्च संहृतं तं विनिक्षिपेत् ६७
मासैस्तु दशभिश्चैव मृत्युमभ्येति नान्यथा
शङ्खौ तु हीयमानौ तु शृणु वक्ष्यामि लक्षणम् ६८
अकस्मात्कंपते शीर्षं नेत्रं विसृपते प्रिये
निरुद्धं तं विजानीयात् प्रत्यक्षञ्चैव दृश्यते ६९
एवं वै लक्षणं यस्य सोऽष्टमासान्न जीवति
कण्ठनाड्युपरिष्टात्तु स्तंभिते लक्षणं शृणु ७०
जिह्वा न परिवर्तेत स्फुटवाच प्रवर्तते
शोषितस्तु वरारोहे सप्तमासान्न जीवति ७१
कण्ठं स्तंभित मर्मस्य शृणु वक्ष्यामि लक्षणम्
कण्ठशोषं भवेत्तीव्रं निश्लेष्मं का समावहेत् ७२
पाषाणसदृशञ्चैव भुक्तमन्नं न जीर्यते
एवं वै लक्षणं यस्य चतुर्मासान् स जीवति ७३
वृषणधस्थिते मार्गे स्तंभिते लक्षणं शृणु
रक्तवर्णं भवेन्मूत्रं दहती च न संशयः ७४
एतद्वै लक्षणं यस्य त्रिमासान् स तु जीवति
मुष्कसूत्रप्रदेशे तु यस्यैवं शूलमावहेत् ७५
वृषणस्य तु मध्ये तु कृष्णवं यदि पश्यति
एवं लक्षणतो बुध्वा द्वौ मासौ स तु जीवति ७६
स्तनस्यैवोपरिष्टात्तु स्पन्दनं यदि संभवेत्
गते दक्षिणतो देवि जीवेन्मासं स पक्षकम् ७७
ज्ञातुं सन्धिमधस्तात्तु स्पन्दनं स्तंभ्यते यदि
मासमेकं न जीवेत इति शास्त्रेषु निश्चितम् ७८
अकस्माच्छ्रवणं देवि न शृणोति यथा पुरा
स्तंभितं तं विजानीयादर्धमासं स जीवति ७९

नेत्रे वाश्रुवहे कस्मात् विना दोषेण भामिनी
ततोऽसौ मृत्युमभ्येति दिवसैर्दशभिस्तथा ८०
पादस्यैवापरिष्ठात्तु यदि वै स्तंभितो भवेत्
तस्य मृत्युं विजानीयात् पञ्चाहात्तु न संशयः ८१
अकस्माच्चलनं चापि विस्मयञ्चैव जायते
विस्वरश्चैव जायेत हीनायुषोजि भामिनी ८२
एवं वै लक्षणं यस्य जीवते स दिनत्रयम्
चक्षुषी नैव दृश्येत पूर्वदृष्टञ्च रूपकम् ८३
एवं लक्षणतो दृष्ट्वा द्विदिनं स तु जीवति
गुल्फदेशे यदा स्पन्दं निष्पन्दं भवते यदि ८४
एवं लक्षणवाङ्गात्रे दिनमेकं स जीवति
हृदयं वेपते यस्य मूर्छा कंपस्य जायते ८५
अजितं तं विजानीयाद्दिनार्धं सोऽपि जीवति
कण्ठे गुडुगुडोपेतत्किञ्चित्स्पन्दति सुवृते ८६
प्रहरैकेन देवेशि तस्य मृत्युं समादिशेत्
तालुमध्ये गतो वायुः किञ्चित्स्पन्दति सुवृते ८७
अतीतं तं विजानीयात् शतं प्राणान् स जीवति
एवं मर्मविभागज्ञः साधको नावसीदति ८८
प्रत्यहं प्रत्यवेक्षेत न स जानाति नान्यथा
एकादश शतञ्चाष्टौ नव सप्त तथैव च ८९
षट् पञ्चचतुरश्चैव द्वौ मासौ तु विचक्षणैः
मासं स पक्षकञ्चैव मासं मासार्धमेव च ९०
दश पञ्चदिनाश्चैव त्रीणि चैव दिनद्वयम्
अहरेकं विजानीयाद्दिनार्धं प्रहरं तथा ९१
प्रहरस्यार्धमर्धेन श्वासप्राणशतेन तु
मणिबन्धादितः कृत्वा वेदितव्यं प्रयत्नतः ९२

एवं ज्ञात्वा च बुध्वा च कुर्यात्तस्य प्रतिक्रियाम्
क्षेत्रं तीर्थं पवित्राणि जपहोमक्रियास्तथा ९३
मृत्युञ्जयादिदेवेशि सेवितव्यानि यत्नतः
एतैर्माया मया प्रोक्ताः यथासंख्येन सुवृते ९४
पुनरन्यत्प्रवक्ष्याम्मि शृणु देवि यथाक्रमम्
समेन सव्यमर्माणां यदि निष्पन्दता भवेत् ९५
वायोर्दोषं विजानीयात् कुर्याद्वायुप्रतिक्रियाम्
श्लेष्मणा चैव देवेशि निष्पन्दं यान्ति ते पुनः ९६
तान्येव प्रत्यवेक्षेत कुर्यात्पित्तप्रतिक्रियाम्
अन्यद्गुह्यतमं देवि शृणुष्व कथयामि ते ९७
येन विज्ञातमात्रेण सर्वदुःखं न जायते
इडा सुषुम्नयोश्चारं ज्ञातव्यं योगिभिस्सदा ९८
तेन विज्ञायते देवि लोकस्यैव हिताहितम्
आत्मनश्च विजानाति यथाकालं विभागशः ९९
दिनमेकं वहेद्यस्तु दक्षिणेन यशस्विनी
उत्पातं किञ्चिदाख्याति न तत्र भयमादिशेत् १००
दिनद्वयं निवर्तेत वहित्वा दक्षिणेन तु
गोत्रस्याचाशुभं विद्यान्न मृत्युं तस्य चादिशेत् १०१
दिनत्रयं वहेद्यस्तु यदि वै दक्षिणेन तु
महद्भयं भवेद्देवि ग्रामगोत्रस्य सुवृते १०२
चतुर्थेऽहनि योगेन निवर्तेत वरानने
आत्मनस्त्वशुभं विद्यान्महाक्लेशेन जीवति १०३
पञ्चाहमेकमार्गस्थं वहित्वा विनिवर्तते
आत्मनो मृत्युरायाति इति शास्त्रस्य निश्चयः १०४
पञ्चमस्योपरिष्ठात्तु यं दिवै विनिवर्तते
राज्ञश्चैवाशुभं विद्यादाज्येन च वियुज्यते १०५

सप्ताहाद्यदि देवेशि निवर्तेत च योगिनः
वाहनानां क्षयं दृष्ट्वा कथयेच्छिवयोगवित् १०६
अष्टाहं वह्नते यस्तु तदूर्ध्वं विनिवर्तते
राज्ञां चैव भयं विद्यान्महाक्लेशेन जीवति १०७
नवमेऽहनि देवेशि वहित्वा विनिवर्तते
राजानमशुभं विद्यान्महाक्लेशेन जीवति १०८
दशमेऽहनि देवेशि वहित्वा विनिवर्तते
राज्ञां मरणमाशु स्याद्यदि वै विनिवर्तते १०९
ततस्त्वेकादशेनैव न तस्य भयमादिशेत्
जनानामशुभं विद्याद्यावत्पञ्चदशेऽहनि ११०
दक्षिणेन यथा प्रोक्तं वामेनैव तथैव हि
एवं ज्ञात्वा तु मेधावीं न सीदेन्नैव योगवित् १११
एवञ्चारविधानज्ञो योगविन्नावसीदति
एतद्देवि समाख्यातं रहस्यं गुह्यमुत्तमम् ११२
त्वया गुप्ततरं कार्यं न दद्याद्यस्य कस्यचित्
चारेण ज्ञायते ++ कारयोगे न संशयः ११३
नारौ जयस्तु विज्ञेय सारे सिद्धिर्न संशयः
इति निश्वासकारिकायां एकपञ्चाशत्पटलः

देव्युवाच
विज्ञप्ते किं प्रमाणन्तु ज्ञातव्यं देशिकेन तु
निस्सते किं प्रमाण स्यात् प्रविशेपि महेश्वर १
अन्तरे चायनस्यैव एतदिच्छामि वेदितुम्
ईश्वरः
महत्पुण्यमिदं देवि न पृष्टं केनचित्पुरा २
तदहं संप्रवक्ष्यामि साधकानां हितावहम्

प्राणस्यैव निरोधेन स्थातव्यं देशिकेन तु ३
एवं क्रमेण देवेशि अविच्छिन्नस्तु साधकः
तावत्तक्षणमात्रेण स सिद्धेनैव साधकः ४
भवते नात्र सन्देहः सत्यं देवि वदाम्यहम्
यदा प्राणनिरोधस्तु भवते साधकस्य तु ५
तदाऽसौ ज्ञातविज्ञेया ज्ञेयं तस्य क्रतो भवेत्
ऊर्ध्वभागे चरे यावदधश्शून्यं विनिर्दिशेत् ६
ऊर्ध्वशून्यमधश्शून्यं मध्ये तु जयनं भवेत्
उत्कर्षणी कला सूक्ष्मा सुसूत्रे च द्वितीयका ७
अधो भागे स्थिते चैते ज्ञातव्ये तत्ववेदिना
ऊर्ध्वं सञ्चरतस्तस्य कले दक्षिणतः स्थिते ८
तदहस्संप्रबुद्धस्तु सर्वसिद्धिप्रदश्शुभः
अधो मुखे प्रयातस्य कले द्वे वामतस्थिते ९
निशान्तन्तु विजानीयाच्चारज्ञे कथितं तव
यावद्दक्षिणतो याति तावद्वामेन शोभने १०
तावच्छून्यं विजानीयात्त्रीण्येव वरवर्णिनी
मध्ये तु निश्चलं शून्यमयनं तं विनिर्दिशेत् ११
तस्य संस्पर्शभावेन यदा युज्यति साधकः
तदा निर्वाणतां याति नात्र कार्या विचारणा १२
तस्य संस्पर्शभावस्तु कथितस्तव शोभने
शून्यस्थानानि वक्ष्यामि शृणुष्वावहिता प्रिये १३
येन विज्ञातमात्रेण अभावपदमाप्नुयात्
निवृत्तिमध्यभागे तु प्रतिष्ठा तिर्यगुत्तरे १४
विद्या दक्षिणतः प्रोक्ता शान्तिः पूर्वदिगाश्रिता
नादस्तु पञ्चमो ज्ञेयः स शिवः परिकीर्तितः १५
कलाश्चतस्रो या प्रोक्ता नादसञ्चरणात्मकाः

पञ्चमस्तु शिवः प्रोक्तः सुसूक्ष्मः कथितस्तव १६
नादपूजां करोत्येवमनुध्यानेन सुवृते
जीवस्तु नाद इत्युक्तः स्पर्शशक्तिमयस्मृतः १७
जीवस्पर्शविनिर्मुक्तो गुरुवक्त्रे प्रतिष्ठितः
द्विविधेन तु देवेशि कर्तव्योऽनुग्रहस्सदा १८
एतद्देवि न दातव्यं ज्ञानं ज्ञेयमिदं शुभम्
देयञ्च गुरुभक्ताय शिवभक्ताय धीमते १९
अन्यथा दुष्टमर्त्यानां श्रेयस्सिद्धिनिपातयेत्
इति निश्वासकारिकायां द्विपञ्चाशत्पटलः

देव्युवाच
शीघ्रगं सलिलं यद्वत् जलं दहति पावकः
मारुतः प्रवहं ब्रूते मन्त्रिणं मोक्षकस्तथा १
केन मात्राविभागेन येन च च्छिवकृद्भवेत्
एतदिच्छामि विज्ञातुं भगवन् वक्तुमर्हसि २
ईश्वरः
त्रिभेदं कथयिष्यामि अक्षरस्यैव सुवृते
येन विज्ञातमात्रेण मुच्यते नात्र संशयः ३
एकारेण यदा सान्तं संभिन्नं वरवर्णिनी
बिन्दुनादेन ज्ञातव्यं शीघ्रगं सलिलं नदेत् ४
श्रुत्वा पापैः प्रमुच्यन्ते नात्र कार्या विचारणा
तेन विज्ञातमात्रेण अमृतत्वाय कल्पते ५
ह सुकारसमायुक्तो ज्वलन्निव समं नदेत्
आकारेण यदा भिन्नं देवदेवं सदातने ६
मारुतः प्रवहं ब्रूते मया पूर्वमुदाहृतम्
सीतकंपेन ह्रस्वेन मुखेनैव करोति यः ७

एवं वेद्यस्वदेहे तु ज्ञात्वा पापक्षयो भवेत्
ढ उकारविभागेन श्रुत्वा पापैर्विमुच्यते  ८
ह आकारविभागेन ज्ञात्वा मुच्येत बन्धनात्
आकारेण तु विन्यस्य ध्यानादुत्क्रमते ध्रुवम्  ९
संहतप्राणिकरणं संमुखं पर्यवस्थितम्
अधस्ताद्वायुना दीप्तमीकारं वह्निदेवतम्  १०
सप्ताहमभ्यसेद्देवि ज्योत्स्ना भावं स पश्यति
शृणोति विविधान् नादान् मासादभ्यन्तरेण तु  ११
सिद्धगन्धर्वदेवांश्च तिर्यग्वायुपथे स्थितः
त्रिभिर्मासैस्स पश्येत प्रत्यक्षं सर्वतः स्थितम्  १२
यदा संहरते मानं योगी प्राणमशेषतः
अभ्यासेन तु देवेशि निश्चलः संप्रजायते  १३
एष ते कथितो देवि आदिभिन्नस्य सुवृते
षण्मासानभ्यसेद्यस्तु उच्चामरपुरं व्रजेत्  १४
इच्छया संहरेत्प्राणानिच्छया विकिरेत्पुनः
संवत्सरेण मुक्तात्मा भवेत्स्वच्छन्दमृत्युकः  १५
उत्तिष्ठमादितः कृत्वा सर्वं सिद्ध्यति नान्यथा
ह्रस्वकारविभिन्नस्य शृणुष्व सुरसुन्दरि  १६
रश्मिनाऽकर्षणं कुर्यात् स्वदेहेनैव योगवित्
उदरे रक्तवर्णन्तु मध्याह्ने तेजमालिनम्  १७
तृतीये शीतरश्मिञ्च ध्यायेन्नित्यं स्वदेहतः
अहन्यहनि चाभ्यासं कर्तव्यं योगिना प्रिये  १८
अभ्यासमासमात्रेण पश्यते त्रिविधं पुटम्
योगमुत्पद्यते तस्य अचिरादेव योगिनः  १९
रक्तेनाकर्षणं कुर्याद्देवदैत्यवराङ्गनाः
एवमादीनि चान्यानि कुर्यादाकर्षणानि च  २०

चित्तमाकर्षणञ्चैव सालभक्षास्तथैव हि
चित्तगृहाणि रम्याणि वाहिनीश्च तथैव च २१
शरीरव्याधिनिर्नाशकुष्ठव्याधिक्षयं महत्
षण्मासयोगयुक्तस्य इत्येतत्समुदाहृतम् २२
संवत्सरेण योगीन्द्र उच्चावचपरा वपुः
स्थूलात्स्थूलतरो भूत्वा सूक्ष्मात्सूक्ष्मतरः पुनः २३
स तनुर्वितनुश्चैव जायते नात्र संशयः
ह्रस्वकाविभिन्नस्य कथितं तव शोभने २४
षड्वर्णेन विभिन्नस्य शृणु देवि वदाम्यहम्
सकृत्प्रभावविशदं चन्द्रार्कग्रहणं स्थितम् २५
विमनस्कं परं शान्तं केवलं तच्छिवात्मकम्
शून्यमाकाशभूतन्तु जरामृत्युविनाशनम् २६
अभ्यासमासमात्रेण शृणु देवि वदाम्यहम्
क्षुत्पिपासाविनिर्मुक्तो निर्द्वन्द्वच्छिन्नं संशयः २७
देवगन्धर्वसिद्धाश्च त्रिभिर्मासैः स पश्यति
देवैश्च सततं याति षण्मासाभ्यन्तरेण तु २८
संवत्सरेण युक्तात्मा योगिनस्सुसमाहितः
पश्यते देवि भूतेशं गणेशपरिवारितम् २९
स्वभावस्मरणाद्देवि कालक्षेपस्समुक्तिदः
ध्याननिर्मथनाद्देवि सिद्धिरुत्पद्यते ततः ३०
एतत्त्रिभेदभिन्नस्य ज्ञानसिद्धिर्न संशयः
देव्युवाच
दूरस्थश्च समीपस्थः पीठस्थः पीठवर्जितः ३१
मलिनो निर्मलश्चेति त्वया पूर्वमुदाहृतः
किं दूरमन्तिको वाऽपि दूराद्दूरतरन्तु किम् ३२
सन्निकृष्टं ततो देव भेदानि कथयस्व मे

ईश्वरः
अतिगुह्यतरं प्रश्नं केनचिन्नापि पृष्टवान्  ३३
तदहं संप्रवक्ष्यामि साधकानां हिताय वै
दूरस्थं कथयिष्यामि सर्वयोगिहितावहम्  ३४
येन विज्ञातमात्रेण आत्मा वै योग्यतां व्रजेत्
दशरूपा मया ख्याता सर्वे दृश्यन्ति शोभने  ३५
विद्यातत्वेन ते प्रोक्ता बिन्दुतत्वे वरानने
खड्गेन गच्छतस्तस्य द्रष्टव्यं लक्षमुत्तमम्  ३६
शीतरश्मिर्यथा सौम्यमभ्यासाज्जायते प्रिये
बीजद्वयसमायोगाज्जायते नात्र संशयः  ३७
रूपं तत्र मया देवि पूर्वन्तु कथितं तव
एतद्वारं मया ख्यातं ज्ञातव्यं तत्वचिन्तकैः  ३८
समीपं दीपदृष्ट्या तु व्याख्यातं तव शोभने
तत्त्वया विदितं सर्वं  मयापि कथितं तव  ३९
पीठस्थं चक्षुषा ख्यातं मयापि कथितं पुरा
त्वया देवि तथा ज्ञातं किमन्यत्कथयामि ते  ४०
दूरस्थं दिव्यमित्याहुः समीपं दिव्यसंज्ञितम्
पीठस्थं नयनं प्रोक्तं बिन्दुतत्वं समासतः  ४१
देहस्थं मलिनं प्रोक्तं सर्वतत्वेषु शोभने
ज्ञातव्यं योगिभिर्नित्यं अधमं योगिसिद्धिदम्  ४२
निर्मलो देहहीनस्तु ज्ञाते सिद्धिर्न संशयः
सर्वकर्माणि कर्तव्याण्याशु सिद्धिमवेप्सता  ४३
निर्मलन्तु विनिर्दिष्ट सर्वतन्त्रेषु शोभने
शक्तिचेष्टाविकाराणि कुरुते नित्यमेव च  ४४
सकलस्तु स विज्ञेयः शक्तिचेष्टा अदेहतः
दृश्या शक्तिरिति ख्याता त्वयापि विहिता तथा  ४५

विज्ञानमपि शो ब्रूयान्नशोभमुपयात्यसौ
यथा बिन्दुर्मया ख्यातः शक्तिस्तु विदिता तथा ४६
प्रत्यक्षं भवते सूक्ष्मं सुसूक्ष्मं दिव्यमुच्यते
उच्चारं दूरमित्युक्तं कथितं तव शोभने ४७
दूराध्यातमिति प्रोक्तं कथितन्तु मया तव
एतत्तस्मिन् मया ख्यातं परस्यैवापरस्य च ४८
त्वयापि विदितास्सर्वे सकलाः परमेश्वर
एतद्देवि रहस्यन्तु मया ख्यातं समासतः ४९
वेदितव्यं प्रयत्नेन गुरुमाराध्य यत्नतः
एतत्प्रश्नपरं देवि सर्वेषामपि चोत्तमम् ५०
परीक्षा पूर्वमेवोक्तं दातव्यं तादृशाय तु
देव्युवाच
शक्तिचेष्टाविकारे तु यत्त्वयोक्तं महेश्वर ५१
तेन युक्तानि चेष्टानि कुरुते कथयस्व मे
ईश्वरः
एतत्प्रश्नं परं देवि सर्वेषामपि चोत्तमम् ५२
तदहं संप्रवक्ष्यामि तदेकाग्रमनाः शृणु
आधारो नाद इत्युक्तः स जीवः परिकीर्तितः ५३
तेजस्पर्शमृता शक्ति नादं व्याप्य व्यवस्थिता
स नादो बिन्दुमाश्रित्य शक्तिना प्रेरितो यदा ५४
तदा तत्क्षोभमायाति बिन्दुशक्त्या प्रचोदितः
बिन्दोर्वर्णाः समुद्भूताः यतः शास्त्रञ्च वाङ्मयम् ५५
शक्त्या समरसी भूत्वा बिन्दुनादे व्यवस्थिताः
सुषुप्त इत्व चात्मानं सुखदुःखं न बाधते ५६
बिन्दुदेवं तथैवेह ज्ञातव्यञ्चैव देहिना
सर्वज्ञानता शुद्धा शिवकायाद्विनिर्गता ५७

बिन्दुनादस्तत्वेषु चेष्टते परमेश्वरि
बिन्दुनादस्य या चेष्टा त्त्वानाञ्चैव सुवृते ५८
ज्ञातव्या सा सदा तज्ज्ञैः शिवशक्तिसमन्विता
शक्तेः समरसो देवि कथितञ्चानुपूर्वशः ५९
बिन्दो रूपप्रकाशस्तु नादशब्दस्तु यत्स्मृतः
तत्सर्वं शक्तिना व्याप्तं वेदितव्यं प्रयत्नतः ६०
बिन्दुनादो वरारोहे यदा शक्तिसमन्वितः
त्रिभिरेव तु संयुक्तः स जीव इति कीर्तितः ६१
शिवशब्दो वरारोहे त्रिभिरेभिः प्रकीर्तितः
ईषत्स्पर्शसमायुक्तमुखनासापुटस्य तु ६२
सा शक्तिः कथिता देवि शिवतत्वे प्रकीर्तिताः
इति ते कथितं देवि शक्तेस्समरसं तथा ६३
परीक्षा पूर्वमेवोक्ता दातव्या तादृशाय तु
देव्युवाच
प्रणवत्रयन्तु देवेश योगाध्याये यदुक्तवान् ६४
तदहं श्रोतुमिच्छामि भगवन् वक्तुमर्हसि
ईश्वरः
देहस्थं यजातान्तेषां व्योमस्थञ्च गतथैव हि ६५
योगकाले च देवेशि प्रणवेन यजेत्सदा
अाधस्तात्पञ्चतत्वानि ब्रह्मोङ्कारेण पूजयेत् ६६
विद्यातत्वे स्थिता ये तु रुद्रोङ्कारेण पूजयेत्
शिवतत्वे स्थिता ये तु विधनेन प्रपूजयेत् ६७
मानसं योगकाले तु पूजनीयः परः शिवः
शिवपूजाविधौ पश्चाद् योगं सेवेत योगवित् ६८
तत्वाद्या मया प्रोक्ता ब्रह्माद्यैश्च समायुताः
तेषां स्थलं पवित्राद्यं प्रणवेन तु दापयेत् ६९

देव्युवाच
रूपस्पर्शादिशब्देभ्यः स्थिरकालास्सर्वतस्थिताः
यस्मिन् पूर्वाणि देवेश कस्मिन् स्पर्शः प्रतिष्ठितः ७०
शब्दं कथय देवेश एतदिच्छामि वेदितुम्
ईश्वरः
जीवस्य भूतसंस्थस्य त्रिस्थाने शृणु दर्शनम् ७१
येन ज्ञातेन दृष्टेन श्रुतेन वरवर्णिनी
मुच्यते नात्र सन्देहः सिद्धिश्चैव न संशयः ७२
शुद्धस्फटिकसङ्काशं हृत्पद्मे तु विचिन्तयेत्
अङ्गुष्ठपर्वमात्रन्तु पञ्चवक्त्रं महेश्वरम् ७३
पूर्वोक्तविविधा रूपाः शिवस्य कथिता मया
एतद्रूपं मया ख्यातं सर्वतन्त्रेषु सुवृते ७४
स्पर्शे च शृणु देवेशि कथयामि न संशयः
दिवारात्रविभागेन अयने विषुवे तथा ७५
सङ्क्रान्त्यादिषु देवेशि स्पर्शस्तु समुदाहृतः
उच्चारं स्पर्शमित्येते केचिदाहुर्मनीषिणः ७६
स्पर्शमन्ये वदन्त्येवं बिन्दुमन्ये तथैव च
इदं तेनाभिजानन्ते विवदन्ति परस्परम् ७७
शब्दाशयमिति ज्ञेयं तस्मिन् पक्षास्तु ये स्मृताः
तस्मिन् स्थितः शिवस्साक्षात् कथितं तव सुवृते ७८
एतत्ते पूर्वमाख्यातं त्रिभेदमनुपूर्वशः
नाशिष्याय प्रदातव्यं रहस्यमिदमुत्तमम् ७९
देव्युवाच
व्योमनाभदिशा पत्रं न मया च न धारितम्
तदहं श्रोतुमिच्छामि भगवन् वक्तुमर्हसि ८०
ईश्वरः

व्योमेत्याकाशमित्युक्तं व्योमसूर्यः प्रकीर्तितः
व्योमपद्ममिति प्रोक्तं व्योमप्रोक्तः सदाशिवः ८१
कलाश्चतस्रो याः प्रोक्ताः कराटकास्ते प्रकीर्तिताः
व्योमनालस्मृताकाशं दिशा पत्राः प्रकीर्तिताः ८२
कर्णिकास्तु स्मृतास्सूर्यः कर्णिकास्थः सदाशिवः
दिशा पत्रेषु देवेशि विद्येशान् परिकल्पयेत् ८३
नवकालाग्निरुद्रस्तु अधस्रोते व्यवस्थितः
शिखादूर्ध्वमुखास्तस्य व्यापकन्ति व्यवस्थिताः ८४
जलबुद्बुदसङ्काशं तत्र देवस्सदाशिवः
स्वच्छं सुनिर्मलं तेजः सुषिरज्योतिरुत्तमः ८५
पुष्करास्तु मया ख्यातां केसरास्तु तथैव च
एतच्च बिन्दुयोगन्तु कथितं तव शोभने ८६
पुरुषत्रयविज्ञानं तत्क्रियादर्शनं तथा
अत्र पद्मे तु विज्ञेयं योगिभिस्तत्र चिन्तकैः ८७
शिवशास्त्रस्य सद्भावमस्मिन् पद्मे प्रकीर्तितम्
पत्यक्षं दृश्यते देवि तत्वा ये पूर्वचोदिताः ८८
स्वेन स्वेन तु रूपेण सर्वतन्त्रे व्यवस्थिताः
तां दृष्ट्वा योगविच्छ्रीमान् सर्वज्ञत्वं प्रपद्यते ८९
लीयते तस्य मध्ये तु स्वशरीरेण योगिनः
एतद्रहस्यं परमं कथितं तव शोभने ९०
सुपरीक्ष्य च दातव्यं न च नास्तिकनिन्दिते
इदं ते कथितं देवि तारकं ज्ञानमुत्तमम् ९१
देव्युवाच
चिन्ताध्यानमिदं देव न मया वेदितं पुरा
एतदिच्छामि विज्ञातुं भगवन् वक्तुमर्हसि ९२
ईश्वरः

यददृश्यध्यानमित्युक्तं चिन्ता मानस उच्यते
मानसं मनसालोक्य यद्दलं प्रतिपादयेत् ९३
चित्तचैतन्यसंयोगात् स वै मानस उच्यते
ध्यायेल्लक्षवरं दिव्यं पूर्वदृष्टं वरानने ९४
चैतन्यं तद्गतेनैव ध्यानमेतत्प्रकीर्तितम्
एतद्देवि समाख्यातं ध्यानमानसमेव तु ९५
द्विविधोत्पाद्यमर्थन्तु सदा तेनैव युज्यते
तदा योगमिति प्रोक्तं युक्तस्य वरवर्णिनी ९६
देव्युवाच
सन्धानं श्रोतुमिच्छामि भगवन् वक्तुमर्हसि
कस्मिन् सन्ध्या कथं संज्ञो भगवन् कथयस्व मे ९७
ईश्वरः
साधु पृष्टं त्वया भद्रे तथा ते कथयाम्यहम्
त्वदीयं पद्मकं देवि न दृष्टं केनचित्पुरा ९८
केचित्त्रितत्वसन्धानमिच्छन्ति वरवर्णिनी
अन्येव पशुसन्धानं कथयन्ति वरानने ९९
तादृशं तत्वसन्धानं वदन्ति गुरवो बहुः
ईदृशं तत्वसन्धानं न विज्ञातन्तु देशिकाः १००
पूर्वमात्मनि मेधावी शिखां कृत्वा स्वकां तनुम्
तदा कर्मसमर्थन्तु भवते साधकेश्वरः १०१
आत्मनञ्च पशुञ्चैव एकीकृत्य विचक्षणः
तदा तत्वे तु संयोज्य विधिं कुर्यादशेषतः १०२
पूर्वाहुत्या तु दातव्या तदन्ते चोद्धरेत्क्रमात्
उद्धृत्यचात्मसंस्थन्तु कृत्वा तत्वविदं शुभम् १०३
पृथिवीं तु तथोद्धृत्य आप्येन सह योजयेत्
विलीनामापमध्ये तु आप भूतां विचिन्तयेत् १०४

एवमभ्यस्तथा तेजो वायुरा ++ तथा
एवं वै सर्वतत्वानि कर्म कृत्वाऽनु संशयेत् १०५
तत्वसन्धानमित्युक्तं अस्मिन् तन्त्रे वरानने
एवं संस्थितस्तत्र पशुनालोकयेत्तदा १०६
सर्वध्यानसमाप्तौ तु शृणु देवि यथा पुनः
तत्वनीलं नयेत्तत्वं तत्वे तत्वे नियोजयेत् १०७
तत्वसिद्धिं यदा तत्वं दीक्षानिर्वाणगामिनी
सर्वतन्त्रेषु सामान्यं विधिमेतत्समारभेत् १०८
एवं वै यो न जानाति न हि नोच्छ्रयते पशून्
देव्युवाच
किं तत्वं प्रथमं देव द्वितीयञ्च तथैव च १०९
तत्वे लीनन्तु कर्तृत्वं तत्वसिद्धिस्तु क स्मृतः
ईश्वरः
तत्वन्तु प्रथमाचार्यः तव देवि उदाहृतः ११०
तत्वनीलन्तु यत्प्रोक्तं पशुतत्वं समासतः
पशुतत्वेषु संयोज्य पृथिव्यादिष्वनुक्रमात् १११
त्रितत्वापरशुद्धिन्तु आचार्यस्तत्वपारगः
विद्यातत्वास्पदं कृत्वा योजयेत्परमे पदे ११२
युक्ते यद्धर्मसंज्ञो वै स धर्मः कथितस्तव
देव्युवाच
भूतात्मा तत्र बाह्यात्मा अन्तरात्मा तु इन्द्रियः ११३
परमात्मा स्थिता देवि मनोऽहङ्कारबुद्धिषु
भूतात्मा इन्द्रियात्मा च परमात्मा तथैव च ११४
चतुर्थश्चैव देवेशि एतेषां व्यापकश्शिवः
भूतात्मा संस्थितो भूतैः इन्द्रियात्मा तथेन्द्रियैः ११५
परमात्मा स्थितो देवि मनोऽहङ्कारबुद्धिभिः

त्रिरात्मानं विनिर्मुक्तं चतुर्थं परमेश्वरि ११६
निरात्मा स तु विज्ञेयः स जीवः परिकीर्तितः
तस्य सादात्मकं देहं कृत्वा चैव विभागतः ११७
तदात्त्वनुग्रहं कुर्याद्योगं स्थाप्य शिवं तथा
एतत्समासतो देवि रहस्यं कथितं तव ११८
इति निश्वासकारिकायां त्रिपञ्चाशत्पटलः

देव्युवाच
ये केचिद्रूपकादेव कथिता इह शासने
तस्मिन् दृष्टे तु पद्मे वै द्रष्टव्यं ब्रूहि मे प्रभो १
ईश्वरः
सर्वशास्त्रेषु कथितं स्पष्टेन सुरसुन्दरि
अन्यथा कल्पिते तमिन् लौकिकार्थपरायणः २
कालज्ञानमिदं देवि कथितं भाति नाशनम्
येनैकांकाररूपाणि कथितानि मया पुरा ३
एवं प्रत्यक्षरूपाणि कथितानि मया पुरा
एवं प्रत्यक्षरूपाणि वेदितव्यानि शोभने ४
व्योमपद्मस्य मध्ये तु ये रूपाः कथिता मया
सुखदुःखं विजानाति लोकस्यैव हिताहितम् ५
क्षीणायुश्चैव दीर्घायुरुत्पाताश्च सहस्रशः
सुभिक्षञ्चैव दुर्भिक्षं देशभङ्गं तथैव च ६
नृपराष्ट्रविनाशञ्च सर्वज्ञानाति योगवित्
गृहक्षेत्रविनाशञ्च वैश्यशूद्रं तथैव च ७
बालस्त्रीवाहनञ्चैव सर्वज्ञानानि योगवित्
धनलाभविधानञ्च विप्रक्षत्रविशां तथा ८
सर्वसंशयविच्छेत्ता विना क्लेशेन योगवित्

ज्ञायते नात्र सन्देहः शिववर्जितयोगवित् ९
अनावृष्टिं सुवृष्टिञ्च सर्वस्य निष्पत्तिनाशनम्
सर्वज्ञानातियोगीन्द्र कथयेच्च हिताहितम् १०
एतद्देवि रहस्यन्तु कथितं वै समासतः
न भेत्तव्यं प्रयत्नेन आत्मनः श्रेय इच्छया ११
योगिना पृष्टस्तस्यैव कथयेच्च शुभाशुभम्
योगमार्गेण देवेशि कथयेच्च हिताहितम् १२
व्योमपद्मे च हृत्पद्मे शिवशक्ते तथैव च
एकस्मिन् स क्षयेल्लक्षं त्रिस्थानेष्वपि पश्यति १३
पद्मवर्णं यदा पश्येत्स्फुटो ध्यानेन योगवित्
अथ लाभं भवेत्तस्य अचिरेण न संशयः १४
श्रवणव्याकुलञ्चैव यदि पश्येत तत्ववित्
द्रव्यनाशं शरीरस्य कथयेत्तस्य तत्ववित् १५
कृष्णवर्णं यदा पश्येद्ध्यायमानस्तु योगवित्
अहार्द्धमरणं तस्य आदिशेन्नात्र संशयः १६
गन्धकस्यैव सङ्काशं किञ्चिद्भ्रान्तेन राजते
चतुर्भिः वत्सरैः मृत्युमादिशेत्तस्य योगवित् १७
कृष्णन्तु रक्तवर्णं तत्किञ्चित्किञ्चिद्विभावते
एकादशाब्दे मरणं कथयेत्तस्य योगिनः १८
कृष्णशूलिनिभक्तश्च वातोद्धूतेव लक्षयेत्
दशाभिर्वत्सरैर्देवि मरणं तस्य जायते १९
गृहसङ्घमिवाभाति ध्यायमानस्य योगिनः
वक्षस्याभ्यन्तरेणैव मरणं तस्य चादिशेत् २०
कृष्णं पिङ्गलवर्णेन पश्यते यदि योगिनः
नवभिः वत्सरैर्मृत्युं कथयेत्तु सुनिश्चयम् २१
कृष्णं किञ्चित्सितं किञ्चित् यदि पश्यति योगिराट्

सप्तमे वत्सरे तस्य व्यादिशेन्मरणं ध्रुवम् २२
किञ्चित्पीतं सितं किञ्चित् कृष्णेन सह संयुतम्
षड्भिस्तु वत्सरैर्मृत्युरात्मनोऽपि परस्य वा २३
धूम्रं किञ्चित् सितं किञ्चित् कृष्णेन सह संयुतम्
पञ्चाब्दान्मृत्युरादिष्ट आत्मनोऽपि परस्य वा २४
नीलबिन्दुसुरक्तेन कृष्णेन सह संयुतम्
ध्यानमात्रे यदा पश्येद्वत्सराष्टौ स जीवति २५
शबलं नीलकृष्णञ्च यदि पश्यति योगवित्
त्रिरब्दान्मृत्युरायाति आत्मनश्च परस्य वा २६
कृष्णैकं यदि पश्येत स्त्रवन्तान्नीलमंभसा
द्विरब्दान्मृत्युरभ्येति कथयेत्तस्य योगवित् २७
कपिलं संहरेत्तेन नीलेन सह संयुतम्
यदि पश्येत वैकृष्णं दशाहात्स विनश्यति २८
अप्राप्तयोरवा देवि मृतेति कथयेत्पुरा
अग्निवद्विस्फुलिङ्गात्तु मुञ्चन्तः कृष्णबिन्दुकाः २९
मृतभूद्धे द्विरादेशं कुरुते चैष योगिनः
सितं स कुङ्कमाभन्तु रश्मियुक्तं यदा भवेत् ३०
राज्ञां विदिश्यते पुत्रलाभः सर्वसुखप्रदः
रश्मिन् नृपेति देवेशि नृपन्ते सितबिन्दवः ३१
स्त्रीजाति स्वेतिचादेशं कथयेत्तस्य योगवित्
शुक्ले च बिन्दवे भाति ध्यायमानस्य योगिनः ३२
नपुंसकमिति ज्ञेयं जनयिष्यति सुवृते
रक्तञ्च सिञ्चितं किञ्चित् कृष्णान्नीले न संयुतम्
यदि पश्येन्नसौ जीवेत् द्वादशाब्दं वरानने
शिरसो रहितं पश्येद्यदि स्याच्छिवयोगिनाम् ३४
मरणं तस्य चादिष्टं सप्ताहेन न संशयः

त्रिशिरमात्मानं पश्येद्ध्यायमानः परस्य वा ३५
दिनद्वयेन मरणमादिशेच्छिवयोगवित्
दिशश्चासीर्यदा पश्येद्ध्यायमानस्तु योगवित् ३६
मरणं तस्य चादिष्टमहोकेन सुलोचने
नासाभ्यन्तरे ह्येते कथितं तव शोभने ३७
सीतनिष्पन्दनं बिन्दुं यदि पश्यति योगवित्
जीवत्यब्दशतं सोऽपि परिपूर्णायुरीश्वरी ३८
सीतपीतेन संयुक्तं यदि पश्यन्ति योगिनः
धननाशं विजानीयात् ब्राह्मणस्य न संशयः ३९
सितरक्तं यदा पश्येद्ध्यायमानस्तु योगिराट्
धनलाभं विजानीयात्क्षत्रियस्य न संशयः ४०
सितनीलं यदा पश्येत् बिन्दुदेवन्तु योगिनः
वैश्यस्य धनलाभञ्च आदिशेत्तु वरानने ४१
सितपीतेन कृष्णेन कपिलेन यदायुतम्
शूद्रस्य धनलाभन्तु आदिशेद्वरवर्णिनी ४२
नीले सितं यदा पश्येच्छूद्रेण सह संयुतम्
गजस्यागमनं विद्यात् क्षत्रियस्य न संशयः ४३
सितं पीतं स रक्तेन यदि पश्यन्ति योगिनः
आशुभ्यागमनं विद्यात् क्षत्रियस्य न संशयः ४४
रूक्षवर्णं यदा पश्येद्ध्यायमानस्तु योगवित्
दुर्भिक्षमादिशेत्तस्य अन्यदेशमुपक्रमेत् ४५
धूम्रवर्णे च संपश्येद्यदि स्याच्छिवयोगवित्
रक्तवर्णं यदा पश्येद्ध्यायमानस्तु योगवित् ४६
महता शस्त्रपातेन क्षत्रियस्य पराभवः
रक्तवर्णं यदा पश्ये स्त्रूवं रुधिरं यदि ४७
राज्ञां मरणमादेशं तस्मिंस्थाने विनोर्दिशेत्

रक्तवर्णाचलञ्चैव उत्पतेन्निपतेद्यदि ४८
देशभङ्गं विजानीयात् तस्माद्राष्ट्राद्विनिष्क्रमेत्
रक्तकृष्णं स पीतेन कपिलेन समायुतम् ४९
तस्करैः पीड्यते देशं ज्ञात्वा तस्मादपक्रमेत्
धूम्रकृष्णं सितं रक्तं कपिलं नीलमेव च ५०
क्वचिद्वर्षति पर्जन्यः क्वचित्तत्र न वर्षति
रुधिरारुणवर्णाभं यदि पश्यति योगवित् ५१
मरणं तत्र चादिष्टं शान्तिं तत्रैव कारयेत्
ध्यायमानो यदा बिन्दुः विस्फुलिङ्गैर्विराजते ५२
रूक्षवर्णश्च विज्ञेयं तत्र स्थानेऽक्षमादिशेत्
स्वदेहे पश्यते देवि वारिपूर्णाञ्च बिन्दुकाम् ५३
सुवृष्टिन्तु विजानीयात् सर्वसस्यस्य संपदम्
रजोधूलितभागैकं यदि पश्यति बिन्दुकम् ५४
अनावृष्टिभयं विद्यात्तस्माद्देशादपक्रमम्
एतद्देवि समाख्यातं हितार्थं सर्वदेहिनाम् ५५
ज्योतिर्ज्ञानमिदं दिव्यं सर्वेषामपि चोत्तमम्
षण्मासाद्ध्यानयोगेन योगिनं कथयेत्सदा ५६
संवत्सरेण दृष्ट्वा तु कथयेदशुभं शुभम्
द्विरब्दान्मासयोगेन योगीन्द्रं परमेश्वरि ५७
श्रुत्वा दृष्ट्वा यथाऽव्यक्तं कथयेत्तदशेषतः
तथा कथयते योगी त्रैलिक्ये चैव शोभने ५८
कथयेत्सर्ववृत्तान्तमाश्चर्याणि अनेकधा
षण्मासाद्योगयुक्तस्य सिद्धिरस्ति वरानने ५९
वशीकरणविद्वेषी उच्चाटावेशकर्मणि
कुरुते नात्र सन्देहः सत्यं देवि वदाम्यहम् ६०
दशधा सिद्धिरित्येवं बिन्दुमध्ये उदाहृतः

एवं ज्ञात्वा तु सिद्धिस्तु जायते नात्र संशयः   ६१
हृत्पद्मचक्रमेतत्तु ध्यातव्यं सुसमाहितैः
पश्यते नित्यमुक्तस्तु मासेनैकेन सुवृते  ६२
पद्ममध्ये तु ध्यातव्यं सद्य एव प्रदृश्यते
सतताभ्यासयोगेन ज्वलन्तं बिन्दुसंशयः   ६३
स्त्रवते जन्मदुःखात्तु जन्महेयाद्विमुच्यते
तेजोभिः बहुभिर्व्याप्तं बिन्दुरूपैरनेकधा  ६४
समूहाज्वलते चक्रं तेजश्चक्रं तदुच्यते
विद्याचक्रस्य सद्भावं निमेषार्द्धेन जायते    ६५
दृश्यते तत्र सुव्यक्तं बिन्दवोऽनेकरूपिणः
यल्लक्षं ज्ञायते योगी चेतनां तत्र योजयेत्  ६६
चेतनारहितं लक्षं स सिद्धिफलदायकम्
तस्माल्लक्षे तु आत्मानं योजयेत्परमेश्वरि  ६७
विद्याचक्रं यदा ध्यातं तद्वारीणसमन्वितम्
ज्योतिरुत्पद्यते तस्य सप्ताहान्नात्र संशयः   ६८
एवं ध्यानपरो भूत्वा जपत्यागं समारभेत्
एवं कारणयोगस्तु एव देवि उदाहृतः   ६९
सिध्यते त्वविचारेण भक्तियुक्तस्य मध्यतः
तदा निर्बीजमायाति न पुनस्संप्ररोहति  ७०
कर्णमध्यगतं ध्यायेत् शिवचक्रं वरानने
त्रैलोक्ये तन्न पश्यामि येन सिध्यन्ति योगिनः   ७१
अक्षरः कथितो देवि क्षरयोगविवर्जितः
ध्यायेन्नित्यं वरारोहे तत्वज्ञानं गुरोर्मुखात्  ७२
तेनेदं व्यापितं सर्वं  त्रिजगत्संप्रकीर्तितम्
तस्मात्तत्तु विदित्वा वै सिध्यते लक्षमुत्तमम्  ७३
एतद्देवि समाख्यातं तत्वामृतमनुत्तमम्

न देयन्त्वपि देवेशि गोपितव्यं प्रयत्नतः ७४
तस्मिन् तन्त्रेऽभिषिक्ताय दातव्यं परीक्ष्य च
अन्यतन्त्राभिषिक्ताय दद्याद्यदि देशिकः ७५
आत्महानिर्भवेत्तस्य विघ्नैश्चैवाभिभूयते
चतुर्थं युगमासाद्य असत्यनिरता जनाः ७६
न तेषां दर्शयेद्ज्ञानमात्मनः श्रेय इच्छता
अन्याभिषेकयुक्तस्य यदि वै कथयेद्गुरुः ७७
ब्रह्महत्या दशैनैव युज्यते नात्र संशयः
अभिषिक्ते तु देवेशि विलोमं यदि कुर्वते ७८
तदेव द्विगुणञ्चैव पापं तस्य समादिशेत्
ज्ञानाच्चैव यदाज्ञानादवज्ञां कुरुते नरः ७९
न निर्देशायितुं शक्यः प्रायश्चित्तं वरानने
अतत्वप्रतिबुद्धस्य न किञ्चिदपि सिध्यति ८०
तस्मात्तत्वविदाचार्यः सेवितव्यो हितैषिभिः
शिवतत्वमिदञ्चैव तुल्यमेव न संशयः ८१
एवं ज्ञानविभेदज्ञः आचार्यः छिन्न संशयः
मातुराक्रोशयोगेन मोचयेन्नात्र संशयः ८२
न निन्द्याद्गुरु वा देवि शिवतत्वविदां सदा
विशेषतत्वविच्चैव मनसापि न लङ्घयेत् ८३
आज्ञातत्तु गुरूणां हि सर्वं कुर्वीत पूरकः
अवमानं न कुर्वीत कृत्वा नरकभाक् भवेत् ८४
अन्येषां गौरवर्णाश्च पुत्रका गुरवश्च वै
चोदको बोधकश्चैव मोक्षदस्तु गुरुत्रयम् ८५
तयोरभ्यधिको देवि मोक्षदस्तु न संशयः ८६
इति निश्वासकारिकायां समुदायप्रकरणे चतुःपञ्चाशत्पटलः
देव्युवाच

मृत्योस्तु लक्षणं देव श्रुतं विस्तरतः प्रभो
त्वत्प्रसादान् महादेव ज्ञानसद्भावमुत्तमम् १
येन पापेन तद्धोरं मृत्युसंसारमद्भुतम्
व्याधिनक्रसुसंकीर्णं जरामरणनाशनम् २
विस्फुरन्तो यथा मत्स्याः स्वल्पतो ये महेश्वर
गृह्यन्ते मृत्युना सर्वे बकरूपेण शङ्कर ३
तादृशं लक्षणं दृष्ट्वा यथा मुच्यन्ति देहिनः
तदहं श्रोतुमिच्छामि भगवन् वक्तुमर्हसि ४
ईश्वरः
शृणु देव परं गुह्यं मन्त्रसारमनुत्तमम्
येन विज्ञातमात्रेण मुच्यते नात्र संशयः ५
पूर्वमेव मया ख्यातं चक्रे मृत्युञ्जयात्मके
योगः पूर्वं मया ख्यातः तेन मुच्यति सुवृते ६
तच्चक्रं त्रिविधं ध्यात्वा मूर्ध्नि वक्त्रे च शोभने
हृदये तु पुनर्योगी प्लावयन्तं विचिन्तयेत् ७
न च स्रोतो विभासेन स्रवन्तं यदि पश्यति
ध्यायेदहन्यहनि हर्यो गीतेन मुच्यति ८
मासादूर्ध्वमधश्चैव सत्यं देवि वदाम्यहम्
तेजो मध्ये तथा योगं बैन्दवं प्रथितात्मजः ९
स्रवन्ते मेघवर्षेव तदा मुच्यन्ति योगिनः
मेघबृन्दनिभाकारं घननिष्कंपबिन्दुभिः १०
चिन्तयेत्प्लवयन्तीव तदा मथ्यन्ति योगिनः
ध्यानं पूर्वं मया ख्यातं चक्रस्यैव सुशोभने ११
एतत् ज्ञानपरो भूत्वा मुच्यते नात्र संशयः
देवी
एतद्ध्यानन्तु देवेश स्रात्मनो वै हितावहम् १२

परेषां भवते यत्तु तन्मे व्याख्यातुमर्हसि
ईश्वरः
सिद्धयोगविदो देवि वाचा मृत्युहरो भवेत् १३
कर्मणा हरते कश्चित् ध्यानेनैव महेश्वरी
ध्यानेन तच्छरीरस्थं चेताश्चेतसि योजयेत् १४
तस्थो भूत्वा हरेन्मृत्युं परेषां वरवर्णिनी
यथा मन्त्रज्वलेनैव परदेहगतं विषम् १५
हरते नात्र सन्देहः तथा मृत्युमपीक्षणात्
अन्यद्गुह्यतमं देवि कथयामि तवाखिलम् १६
येन विज्ञातमात्रेण गृहात्परगृहान् व्रजेत्
मृते सञ्जीवहेतुस्ते प्रयोगं कथयामि ते १७
तच्छृणुष्व हि देवेशि अनुपूर्वं यथाक्रमम्
मृतं देवि परिक्लेशं आदावेव वरानने १८
ब्रह्मक्षत्रविशां शूद्रे परीक्षेत यथाक्रमम्
दारिद्रव्याधिमूलो वा वर्थरूपेण वृत्तयः १९
विरूपव्यङ्गखट्वाङ्गं केकये विकटस्तथा
एवमादिषु ये प्रोक्ता लक्षणेन विवर्जिताः २०
न तेषु योजयेद्देवि योजयेल्लक्षणान्विते
चतुर्विं शत्पृथिव्यादि विभागेन यथा स्थिताः २१
यस्मिन् यस्मिंस्तु संयोज्य तत्वानि वरवर्णिनी
नव सूत्रे यथा प्रोक्तं तथा कुर्यात्तु योगिनः २२
तेन तत्वविभागेन ये तत्वाः परिकीर्तिताः
कालाग्निमादितः कृत्वा भुवनानि यथाक्रमम् २३
तत्वानि पूर्वं विन्यस्य त्रितत्वं त्रिविधं न्यसेत्
पुर्यष्टकसमायुक्तं रेचकेन वरानने २४
विशेत्परपुरे योगी गृहादन्यगृहं यथा

तत्रान्त्ये संस्थितो योगी क्रीडते चित्तसंपदा २५
एवन्नरानराद्येषु भुवनेषु यथाक्रमम्
स जीवे तु पुरे देवि विधिं वक्ष्यामि तं शृणु २६
पूरकं पूर्वमभ्यस्य ग्रहन्यहनि योगवित्
रेचकेन पुनर्देवि विशेत्परपुरं स्वतः २७
तस्य जीवं स्वजीवेन एकीकृत्य विचक्षणः
तत्वं तत्वेषु सन्धाय तिष्ठते तत्र योगवित् २८
न विरोधस्तु तस्यैव शिवस्य परमेश्वरि
यदा तिष्ठति तत्रैव स्वगृहं नश्यते तदा २९
ग्रथवा नैव भुञ्जीत सिद्धिकर्मविधानवित्
पुनरेव वरारोहे विधिं वक्ष्यामि तं शृणु ३०
न च प्राणनिरोधेन रेचकपूरकेन च
दिव्यदृष्टिविभागेन बिन्दुदेवं समभ्यसेत् ३१
तत्स्थो भूत्वा महादेवि ग्रभ्यसेल्लक्षमुत्तमम्
ग्रभ्यासमासमात्रेण बिन्दुस्थमनुपश्यति ३२
तानि पूर्वं मया ख्याता नान्यं वक्ष्यामि तं शृणु
तस्मिन् बिन्दुगतात्मानं ध्यायेन्नित्यं समाधितः ३३
सिध्यते नात्र सन्देहो देहेनानेन सुवृते
क्रमते योगिनः श्रीमानतिरस्कृतशासनः ३४
स्थूलात्स्थूलतरो भूत्वा सूक्ष्मात्सूक्ष्मतरस्तथा
क्रीडते योगविच्छ्रीमान् समीपं सम्यगृच्छति ३५
देवी
जपेन ध्यानयोगेन सिद्धिरेषा प्रजायते
त्वया देव समाख्याता कालज्ञाने महेश्वर ३६
तदहं श्रोतुमिच्छामि सिद्धिमोक्षो यदा भवेत्
ईश्वरः

एतद्गुह्यं प्रवक्ष्यामि शृणु देवि यथातथम् ३७
येन विज्ञातमात्रेण मुच्यते मृत्युदुःखतः
जपेन्मृत्युञ्जयं तत्र तत्काले वरवर्णिनी ३८
एकैकाष्टसहस्रेण मुच्यते नात्र संशयः
एकैकाष्टसहस्रेण हुतेन तु वरानने ३९
मुच्यते नात्र सन्देहः सत्यन्देवि वदाम्यहम्
ध्यानं रात्रिदिवा कार्यं मासमेकन्तु योगिना ४०
मुच्यते देवदेवेशि शिवध्यानेन योगवित्
सुषुम्ना प्रवहेनैव ध्यायेन्नित्यं सुयन्त्रितः ४१
मुच्यते पश्य देवेशि कालमध्यवशं गतम्
इडाप्रयोगकाले तु कुर्यादध्ययनं सदा ४२
तदा विमुच्यते योगी नात्र कार्या विचारणा
द्विमार्गरोधनं कृत्वा मध्येन निधनश्शुचिः ४३
मुच्यते मृत्युदुःखेभ्यः स्रवन्तममृतं यदि
एवं कालविभेदज्ञो मृत्योस्स परिमुच्यते ४४
अथ एवं न विज्ञातं साधकेन यशस्विनी
पूर्ववल्लीनयोगेन लक्षयेद्वासरं क्रमात् ४५
पूर्वमुक्तादिना ये तु तस्मिन् प्राणाद्विमुच्यते
तदा सायुज्यमाप्नोति विशदे च परे पदे ४६
नाडीसञ्चारतत्वज्ञः चक्रविन्मार्गकोविदः
अमृतध्यानमित्युक्तं स मृत्युं विजयिष्यति ४७
एककालं जपेद्ध्यायेत् वत्सरेण वरानने
योगीन्द्रो हनते मृत्युरात्मनोऽपि न संशयः ४८
त्रिकालध्यानयोगेन वत्सरेण स योगवित्
होमध्यानप्रयोगेन परेषां विजयिष्यति ४९
उद्घाताष्टशतेनैव मृत्युरूपा दुरासदान्

नाशयेद्योगविच्छ्रीमान् प्रतिनाडीप्रयोगतः ५०
उद्घातकशतकं तावदशेषं कथितं तव
त्वया गुप्ततरं कार्यं न दद्याद्यस्य कस्यचित् ५१
देव्युवाच
ध्यानयोगविधानेषु अविधिज्ञो यदा भवेत्
केनोपायेन देवेश कालमृत्युंजयो भवेत् ५२
अल्पसत्वा महादेव मानवा भुवि वासिनः
अग्रदधानरूपाणां गुरुशुश्रूषवर्जिताः ५३
योगध्यानसमर्थाश्च कथं मृत्युञ्जयो भवेत्
अप्रत्यक्षस्य प्रत्यक्षं भगवन् वक्तुमर्हसि ५४
ईश्वरः
शृणु देवि प्रवक्ष्यामि कालमृत्युञ्जयो यथा
अप्रत्यक्षे निजे मृत्युं कथयामि तवाखिलम् ५५
योगध्यानविनिर्मुक्तं नात्यन्तव्रतयन्त्रणा
प्रत्यक्षं दृश्यते देवि कालचक्रं महाभयम् ५६
भीमदंष्ट्रं महारौद्रं करालं भीमदर्शनम्
पिं भ्रूश्मश्रुनेत्रञ्च कोपनं भीमदर्शनम् ५७
शिरोरुहे प्रदीप्यन्तं जटामकुटधारिणम्
दुष्प्रेक्ष्यं ब्रह्मविष्णिवन्द्रैः कालचक्रं भयावहम् ५८
लेलिहानमिवाभाति ग्रसन्तं सर्वजन्तवः
सर्पकुण्डलिनं चैव रौद्रवक्त्रं भयावहम् ५९
मकुटेन विचित्रेण युगान्तकिरणात्विषा
दीप्यते यन्मुखं रौद्रं कालस्य सुरसुन्दरि ६०
संहरन्तमिवाभाति स देवासुरमानुषम्
रुद्रेशं कालचक्रन्तु मयापि कथितं तव ६१
एवं दृष्ट्वा च बुध्वा च कुर्यात्तत्वप्रतिक्रियाम्

कांसस्य सुविशुद्धस्य फलमादाय पञ्च वै ६२
द्वादशाङ्गुलविस्तारं शशिबिंबसमप्रभम्
सुराजितं सुहृष्टञ्च सुदण्डञ्च सुधारकम् ६३
सुशोभनं समञ्चैव कुर्यादार्शनं बुधः
हेमदण्डमयं वाऽपि रौप्यदण्डमयं तथा ६४
ताम्रजं वाऽपि कुर्वीत वर्तुलं सुषिरं तथा
अधस्ताद्देशिके कुर्याच्छ्रयादिवि सुसंश्रितः ६५
बद्धपद्मासनां देवीं पद्मस्योपरि संस्थिताम्
सुरभिर्वसका कार्या गोवृषश्च सुशोभना ६६
सघण्टामण्डनोपेतो वृषभस्सुरभिस्तथा
वज्रं शक्तिं तथा दण्डं खड्गं पाशं तथाङ्कुशम् ६७
गदां त्रिशूलहस्तांश्च लोकेशान् कारयेत्तथा
शिल्पिनं संप्रवक्ष्यामि तदेकाग्रमना शृणु ६८
सुव्यप्ताङ्गः शुचिर्दक्षो देवाग्निगुरुपूजकः
कृतज्ञः शिवसंपन्नो मातापितृहिते रतः ६९
इतिहासविधिज्ञश्च पुराणशास्त्रकोविदः
धर्मज्ञः सत्यसन्धश्च अहिंसानिरतः सदा ७०
चित्रकर्मविधिज्ञस्तु अक्रूरश्च जितेन्द्रियः
जपाध्वरविधिज्ञश्च जपासक्तमतिस्सदा ७१
एकादशेषु सक्तात्मा मन्त्रेषु कृतनिश्चयः
मातापितृरतश्चैव जीवपितृश्च शोभने ७२
स्वदारनिरतश्चैव परदारविवर्जितः
ईदृशं कल्पिनं प्राप्य दीक्षयित्वा विधानवित् ७३
तेनैव कारयेद्देवि शोभनं तद्धि दर्शनम्
एवं कृत्वा वरारोहे आचार्यः सुसमाहितः ७४
कुर्यात्तत्र विधिं देवि कालचक्रं विधानवित्

तिथिनक्षत्रवारेषु तारयोगेषु शोभने ७५
अधिवासन्तु कुर्वीत शुक्लपक्षत्रयोदशीम्
पञ्चमीं दशमीञ्चैव एकादश्यां तथैव च ७६
पूर्वोक्तेन विधानेन अधिवास्य ततः शुभम्
त्रिरात्रमुपवासेन कालचक्रं जयेद्बुधः ७७
अधिवासनं विहायाथ प्रथमेऽहनि शोभने
द्वितीयेऽहनि कुर्वीत यागं कालेश्वरस्य तु ७८
मण्डले तर्पणं कृत्वा आचार्यः सुसमाहितः
तद्गुणेऽष्टसाहस्त्रं त्वमतीशं वरानने ७९
हुत्वा चैव पुनर्देवि हस्तं कृत्वा तु देशिकः
जपेच्च नियतो मन्त्री अमृतीशं वरानने ८०
प्रभाते विमले दिव्ये तृतीयेऽहनि देशिकः
जप्त्वा हुत्वा च देवाय शिवभक्तांश्च भोजयेत् ८१
ततः पुण्याहशब्देन गृह्णीयाद्दर्शकं बुधः
गृहीत्वा दर्शकञ्चैव कालचक्रमनुस्मरन् ८२
मुखमावृत्यवस्त्रेण लक्षणेनैव सुशोधकः
मार्जयेन्नेत्रवस्त्रेण अमृतीशं जपेन तु ८३
ततस्तत्पाटयेदक्ष्णो पश्यते दर्शकं बुधः
पूर्वरूपं समं कृत्वा तस्मिन् कालस्य चोत्तमम् ८४
मध्येन तु यदा देवि ज्ञायते च शुभाशुभम्
मेषे तु कथितं नित्यं चिन्तितं विपदं सदा ८५
वृषे च पुष्पदं ज्ञेयं मिथुने गर्भचिन्ततम्
कर्कटे तु भवेच्छत्वन्नीचे तु व्यवहारिका ८६
राजचिन्ता वरारोहे सिंहे चैव सदा भवेत्
कन्ये चिन्ता वरारोहे नित्यमेव वराङ्गना ८७
तुलायां धातुरादिष्टः पीडा वै वृश्चिकेन तु

धनुषे जपचिन्ता तु मकरे कलहं ध्रुवम्  ८८
कुंभे तु विजयो नित्यं मीनस्थानं समादिशेत्
मिथुनेन तथा प्रोक्तं लाभमेव सदा बुधैः  ८९
नास्ति लाभं सदा नित्यं कर्के देवि समादिशेत्
सिंहे कन्ये जयं लाभं नवमं वृश्चिकेन तु  ९०
धनुषी जयलाभाय मकरेन कदाचन
कुंभे मीने जयं लाभं नित्यमेव विनिर्दिशेत्  ९१
एवमेव वरारोहे कथितं तव सुवृते
ज्ञातव्यं देवदेवेशि देशिकैर्मोक्षकाङ्क्षिभिः  ९२
इति निश्वासकारिकायां पञ्च पञ्चाशत्पटलः

देव्युवाच
विद्याचक्रं त्वया देव कथितं न तु विस्तरात्
द्वादशे पुष्करे देव के वर्णाः परिकीर्तिताः  १
द्वादशञ्चैव संकान्त्या न ज्ञाता तावदेव मे
आध्यात्मिकेन देवेश कथयस्व प्रसादतः  २
ईश्वरः
शृणु देवि परं गुह्यं मन्त्राद्यं कथयामि ते
येन विज्ञातमात्रेण विद्यातत्वमधो भवेत्  ३
द्वादशाः पुष्करा ये तु मया पूर्वमुदाहृताः
अकाराद्यास्तु ये देवि कथिताह्यनु पूर्वशः  ४
द्विदशारं लिखेच्चक्रं वर्णैकैकन्तु विन्यसेत्
पूर्वमादिक्रमेणैव विन्यसेदनुपूर्वशः  ५
अकारः प्रथमो ज्ञेयो मेषराशिः प्रकीर्तितः
एवमादिक्रमेणैव यावत्सर्वमशेषतः  ६
ध्यात्वा चैवं विधञ्चक्रं द्वा ++++

भास्करेण समास्सर्वे राशयः कथिताः पुरा
उदयं मेषमादौ तु मीनान्ते तु यथाक्रमम् ७
मुहूर्तसन्ध्यामिति यः पुण्यकालाः प्रकीर्तिताः
आदित्याः संप्रवर्तन्ते त्वया पूर्वमुदाहृताः ८
कथितं ज्ञायते शंभो कथयस्व प्रसादतः
ईश्वरः
शृणु देवि प्रवक्ष्यामि यत्त्वया परिपृच्छितम् ९
तत्सर्वं कथयेद्देवि यथार्थं तव सुवृते
राशीनां सङ्क्रमञ्चैव पुण्यकालं यथा भवेत् १०
यथा च जायते देवि लौकिकं कालसञ्चरम्
यथावाध्यात्मिकञ्चैव तथा त्वं शृणु सुवृते ११
राशिसङ्क्रमणञ्चैव आदित्यस्य वरानने
कथयामि न सन्देहः मासि मासि यथाक्रमम् १२
मेषतुलादौ विषुवं कथितं तव शोभने
कर्कटे मकरे चैव कथयामि यथा शृणु १३
मासमासादितः कृत्वा आषाढान्ते तु शोभने
विज्ञेयो लौकिकं कालमुत्तरायणमुत्तमम् १४
श्रावणञ्चादितः कृत्वा पुण्यान्तेन तु शोभने
विज्ञेयं दक्षिणञ्चैव लौकिकं कथितं तव १५
पुण्यकालं समाख्यातं बुधैश्चैवोत्तरायणम्
दक्षिणस्योत्तरं श्रेष्ठं पुण्यं कथयन्ति मनीषिणः १६
उत्तरं शुक्लवर्णाभं कृष्णं दक्षिणमुच्यते
उत्तरं दिवसं प्रोक्तं देवानां सुरसुन्दरि १७
दक्षिणं रात्रिरित्युक्तं कथितं तव सुवृते
चैत्रमासादितः कृत्वा यावन्मासास्तु कार्तिकः १८
युगादियुगमन्त्ये तु कथयन्ति मनीषिणः

चैत्रमासा युगादिस्तु युगान्त्यः कार्तिकस्मृतः १९
तस्मात्सर्वाणि कर्याणि युगादौ तु समारभेत्
वृषसिंहे सा ख्याते विष्णुपादे सुलोचने २०
तस्मिन् दत्तं हुतञ्जप्तं पद्मेन परिसंख्यति
मिथुनं कन्यका चैव धनुषी मीनमेव च २१
षडशीति मुखेत्येव चत्वारः परिकीर्तिताः
तेषु जप्तं हुतं जप्तं तावत्संख्येन कीर्त्यते २२
मासि मासि रवेश्चारं लौकिकं कथितं तव
ज्ञातव्यं देशिकेन्द्रेण आत्मनः श्रेय इच्छता २३
एतत्ते कथितं देवि लौकिकं तव सुवृते
आध्यात्मिकञ्चैव तथा कथयिष्ये यथा भवेत् २४
यथा मासप्रमाणस्तु मासे मासे सुशोभने
कथयिष्ये यथा सर्वं प्रानीनि यथाक्रमम् २५
देवी
राशीनां श्रोतुमिच्छामि विज्ञानं लौकिकं प्रभो
कथयस्व ममेशान हितार्थं सर्वदेहिनाम् २६
ईश्वरः
शृणु देवि प्रवक्ष्यामि +++ मादिशेत्
कराटके शुष्कवृक्षे वा शून्यागारे तथैव च २७
रौद्रयाभिमुखञ्चैव राशीनां फलमादिशेत्
पापगृहस्य वेलायां मध्याह्ने यदि वा पुनः २८
अशुभं क्षिप्रमादिष्टमात्मनोऽपि परस्व वा
एवमूर्ध्वमधश्चैव शकुनानि यथाक्रमम् २९
ज्ञेयं सर्वमशेषेण ततः कर्म समारभेत्
भूम्याः परिग्रहश्चैव तथा भूमि परीक्षणम् ३०
साधकस्याभिषेके तु आचार्याणां तथैव च

शकुनानाद्यनादृत्य कुरुते कर्म मानवः ३१
कर्मणः प्रतिघातानि विघ्नान्यभिभवन्ति च
तस्मात्सर्वेषु कार्येषु शकुनं प्रतिपूजयेत् ३२
मध्ये तु भास्करं स्थाप्य गृहचक्रं प्रपूजयेत्
यात्राकालं भवन्त्येते साधकस्य फलप्रदम् ३३
दिने दिने स्मरेद्यस्तु गृहचक्रं सुलोचने
गुढास्तस्य भवेद्देवि नित्यं सानुग्रहास्सदा ३४
अथवा पूजयेद्देवि मासि मासि विचक्षणः
संकान्त्या भावितात्मा तु धनधान्यं विवर्धयेत् ३५
गृहास्सानुग्रहाश्चैव भवन्त्येव न संशयः
न तस्य चाशुभं किञ्चित् शुभं नित्यं भवेद्भुवि ३६
एवं यः पूजयेद्देवि गृहचक्रं समाधिना
संपूज्यस्सर्वलोकस्य भवेन्नैवात्र संशयः ३७
यो विरोधयते देवि साधकस्य गृहोत्तमः
तं गृहं पूजयेन्नित्यं कर्णिकास्थन्तु नित्यशः ३८
तदा सानुग्रहो याति स गृहो नात्र संशयः
एतत्ते कथितं देवि गृहचक्रं समासतः ३९
पूजनीयं प्रयत्नेन साधकैः सुसमाहितैः
इति विश्वासकारिकायां षट् पञ्चाशत्पटलः

देव्युवाच
ग्रहचक्रं त्वया देव सूत्रितं न तु विस्तरात्
तदहं श्रोतुमिच्छामि विस्तरेण ब्रवीहि मे १
ईश्वरः
शृणु देवि प्रवक्ष्यामि ग्रहचक्रं समासतः
मौक्तिकं पुण्यकालञ्च कथयामि वरानने २

अष्टधा चक्रमालिख्य तत्वां तत्रैव विन्यसेत्
सकलादिक्रमेणैव विन्यसेदनुपूर्वशः ३
ब्रह्माणं मध्यतस्थाप्य ग्रहान् पत्रेषु विन्यसेत्
सोमन्तु पूर्वतः स्थाप्य अग्नावङ्गार्कं तथा ४
बुधन्तु दक्षिणे पत्रे विपरीतं पुनर्न्यसेत्
शनैश्चरन्तु देवेशि नैर्ऋते चैव विन्यसेत् ५
गुरुन्तु पश्चिमे चैव वायव्ये राहुमेव च
शुक्रं स्थाप्योत्तरे चैव केतुमीशानतो न्यसेत् ६
ब्रह्मस्थानन्तु यत्प्रोक्तं भास्करम् तत्र विन्यसेत्
पत्रान्ते तु ततो देवि पुरा ये तु प्रकीर्तिताः ७
ते तु रन्ध्रोपरन्ध्राश्च ज्ञातव्यास्तु समाहितैः
एवं ग्रहाणि संस्थाप्य लक्षयेच्च क्रमाद्बुधः ८
शुभानी चाशुभानी संलक्षयीत यथाक्रमम्
यत्पत्रे गच्छतो कुर्यात्तत्स्थाने दीप्तिमादिशेत् ९
तत्काले कुरुते कार्यं क्षिप्रमेव विनश्यति
शुभाशुभञ्च यत्किञ्चित् न कुर्वीत विचक्षणः १०
मध्याह्ने न च गन्तव्यं क्षिप्रमेव विनश्यति
भुक्तं पत्रे तु यद्देवि अङ्गारादीनिमादिशेत् ११
वर्तमाने तु देवेशि अतीतं कथयन्ति ते
अग्रतो यस्तु वर्तेत स धूमेति समादिशेत् १२
भविष्यति भयं घोरं आदिशेत वरानने
क्रूराश्च सौम्यतां यान्ति सौम्याः क्रूरत्वमेव च १३
कर्णिकान्तस्थितः सूर्यः त्रीणि च त्रीणि लोकयेत्
यथा यथा क्रमेच्चक्रं तथा तु भयमादिशेत् १४
सौम्याः शुभकरा देवि पञ्चस्थानेषु वा दिशेत्
अत्रापि दोषमादेशः स मुखे भास्करस्य तु १५

अादित्यः पूर्वतः कृत्वाप्याकारे शकुनो यदि
स्थितः सौम्यमुखश्चैव न तत्र भयमादिशेत् १६
क्षीरिणो फलिनिश्चैव व्याहारे शकुनो यदि
तथैव पूजयेद्योगी चक्रवद्बिन्दुचिन्तकः १७
अथ चैवोपरिष्ठात्तु चक्रं योज्यं विचक्षणैः
तन्मध्ये चिन्तयेद्बिन्दुं नादं तं मध्यतः पुनः १८
तन्मध्ये भगवान् शक्तिः सर्वबीजकलोदरि
न लेकयमिति निक्षिप्य जीवं दीपशिखोपमम् १९
शनैः शनैः तमानीय योगी योगविशारदः
दिव्यदृष्ट्या तु तं पश्येत्पुर्यष्टकसमन्वितम् २०
मृते शरीरे चाख्यातं शोधनं पूर्वमेव तु
तत्वस्थाने तथा योज्य ध्यानेनैवानयेद्वसु २१
तावदाकर्षयेच्चक्रं त्रैलोक्यं क्षिप्रमध्यतः
याममूर्तिमनुप्राप्तं शिवस्य वरवर्णिनी २२
शक्तिनादं तथा बिन्दुं हंसयोगिनिचोदितः
स्त्रवन्तममृतं दिव्यं चिन्तयेत विचक्षणः २३
संपिण्डितं शिखाद्वारे द्योतयन्तं समन्ततः
मृतकाले वरारोहे स्वजीवं विशते पुनः २४
तदा चोत्तिष्ठते देवि शिवकायमचेतनः
बिन्दुनादञ्च शक्तिञ्च मध्ये दीपशिखोपमः २५
पुनर्जीवयते जन्तुः सर्वपापविवर्जितः
योगमुत्पद्यते तस्य शुद्धस्य तु न संशयः २६
अनेन विधिना देवि योगां मृत्युञ्जयो भवेत्
मृतसञ्जीवनो योगः कथितस्तव शोभने २७
नानेन सदृशो योगः देवि मृत्युञ्जयं प्रति
अथवा बिन्दुमध्यस्थचिन्तयीत विचक्षणः २८

जीवं दीपशिखाकारं सूर्यकोटिसमप्रभम्
स जीवं बिन्दुसंयुक्तं द्योतयन्तं विचिन्तयेत् २९
कर्णिकास्थं वरारोहे आपमैन्दवपुष्करे
एवमुक्तिषु तेजन्तु यदि नीतो यमालयम् ३०
आनयित्वा मृतैर्देहं ततश्चाप्यायनं कुरु
स्रुवन्तं चिन्तयित्वा तु ततस्तत्स्थमनो भवेत् ३१
कलमृत्युवशं प्राप्तं विमोचयति लीलया
एवं सर्वेषु कार्येषु कर्तव्यं सुरसुन्दरि ३२
नास्ति तेनात्र सन्देहः सत्यं देवि वदाम्यहम्
आलेख्यन्तु यदा देवि प्रयोगामृतमुत्तमम् ३३
न लेख्यं तं महादेवि वाचा नैव प्रकाशयेत्
इदं मृत्युञ्जयं ख्यातं कालचक्रं समासतः ३४
मृत्युञ्जयप्रयोगञ्च अशेषं तव कीर्तितम्
देव्युवाच
मृत्युञ्जयादिभिर्योगैः कालचक्रादिभिस्तथा ३५
सिद्धः कर्मणि निष्णातो हरते मृत्युमात्मनः
परेभ्यो हरते मृत्युंजययोगविधानतः ३६
त्वया विदितं देव त्वत्प्रसादात्सुदुर्लभः
भूयः कौतुकमापन्ना भगवन् वक्तुमर्हसि ३७
ईश्वरः
शृणु देवि परं गुह्यं सर्वस्वं गोपितं मया
न मया कस्यचित्ख्यातं इदं गुह्यमनुत्तमम् ३८
मृत्युसञ्जीवनं योगं कथयामि समासतः
एकरात्रं द्विरात्रं वा त्रिरात्रञ्चतुरेव वा ३९
मृतकायन्तु रक्षेत योगी योगबलाश्रितः
घृते वा तैलद्रोण्यां वा रक्षयेन्मृतदेहकम् ४०

जपयोगविधानज्ञो जीवापयति लीलया
सदाशिवान्तं सञ्जप्य अमृतीशं वरानने ४१
प्रभाते विमले देवि तृतीयेऽहनि देशिकः
जप्त्वा हुत्वा च देवेशि शिवभक्तांश्च भोजयेत् ४२
ततः पुण्याहशब्देन गृह्णीयाद्दर्शकं बुधः
गृहीत्वा दर्शकञ्चैव कालचक्रमनुस्मरेत् ४३
मुखमावृत्य वस्त्रेण सुशुक्लेनैव साधकः
मार्जयेन्नववस्त्रेण अमृतीशजपेन तु ४४
तत उल्लेखयेदक्ष्णोः पश्येच्चादर्शकं पुनः
पूर्वरूपसमायुक्तं मुखं कालस्य पश्यति ४५
किञ्चिच्छेषं त्रिभागञ्च त्रिभागत्वं तथैव च
अर्धञ्च स त्रिभागञ्च च्छर्षञ्च पश्यति ४६
तद्दृष्ट्वा भीषणं चक्रं साधकस्तु समाहितः
ध्यात्वा मृत्युञ्जयं चक्रं प्लावयित्वा विचक्षणः ४७
जपेन पश्यते देवि तन्मुखं रौद्रदर्शनम्
जपेच्छतसहस्रन्तु सहस्राष्टौ तथैव च ४८
दशद्वादशसाहस्रं जपेत नियतः शुचिः
ततः प्रणश्यति वक्त्रं कालस्य वरवर्णिनि ४९
अमृतीशं जपेत्पूर्वं लक्षमेकं वरानने
पश्चादेकं प्रकुर्वीत कालस्यैव प्रतिक्रियाम् ५०
शतजप्तेन देवेशि तथा पञ्चदशेन तु
अङ्गुलं पश्यते वक्त्रं कालेनैव न संशयः ५१
एवं क्रमेण देवेशि वक्त्राद्वक्त्रं प्रणश्यति
छादितस्य तु वक्त्रस्य सहस्रैर्दशभिस्तथा ५२
कथ्यन्ते नात्र सन्देहः कालस्य वरवर्णिनी
नष्टे वक्त्रे वरारोहे कालमृत्युंजयो भवेत् ५३

शरीरान्निष्क्रमेत्कालान्न पुनः प्राप्नुयात्प्रिये
एवं मृत्युञ्जयो देवि सुखोपाय उदाहृतः ५४
न मया कस्यचित्पीतं इदं गुह्यमनुत्तमम्
न देयन्तु त्वया देवि पापशीलरतोत्विदम् ५५
न भवेत्प्रत्ययस्तस्य न च सिध्यति सुन्दरि
इदं मृत्युञ्जयं ख्यातं कालचक्रमुदाहृतः ५६
मृत्युञ्जयप्रयोगोऽयमशेषस्तव वर्णितः
देवी
मृत्युञ्जयादिभिर्योगैः कालचक्रमयैस्तथा ५७
सिद्धकर्मविधिज्ञाश्च हरते मृत्युमात्मनः
परेभ्यो हरते मृत्युञ्जपहोमपिधानतः ५८
तन्मया विदितं देव त्वत्प्रसादात्सुदुर्लभम्
भूयः कौतुकमापन्ना भगवन् वक्तुमर्हसि ५९
मृतस्य श्रोतुमिच्छामि जीवनं भवतेन वा
ईश्वरः
शृणु देवि परं गुह्यं सर्वस्वं गोपितं मया ६०
न मया कस्यचित्ख्यातमिदं गुह्यमनुत्तमम्
मृतसञ्जीवनं योगं कथयामि समासतः ६१
एकरात्रं द्विरात्रं वा त्रिरात्रं चतुरेव वा
मृतं शरीरं रक्षेत योगी योगबलाश्रयः ६२
घृते वा तैलद्रोण्यां वा रक्षयेन्मृतदेहकम्
जनस्य प्रत्ययं ह्येतद्राज्ञां कृत्वा तु अत्रतः ६३
जपहोमविधानेन जपापयति लीलया
सदाशिवत्वं संप्राप्तं कालाग्निमयं गतम् ६४
अनन्तादिमनुप्राप्तमानयेच्च यथाक्रमम्
आनयेद्योगविच्चक्रं पूर्ववद्बिन्दुचिन्तकः ६५

ग्रधश्चैवोपरिष्ठात्तु चक्रं योज्य विचक्षणः
तन्मध्ये चिन्तयेद्बिन्दुं नादं तस्यैव मध्यतः ६६
तस्य मध्ये भवेच्छक्तिः सर्वबीजकलोदरि
त्रैलोक्यमध्ये निक्षिप्य जीव दीपशिखोपमम् ६७
शनैश्शनैस्तथानीय योगी तत्वविदां वरः
योगं दृष्ट्वा तु संपश्येत् मृत्व्वष्टकसमन्वितम् ६८
मृतं शरीरमाख्यातं शोधनं पूर्वमेव तु
तत्वस्थानान्तरे योज्य ध्यानेनानयते पशुम् ६९
तावदाकर्षयेच्चक्रं त्रैलोक्यं क्षिप्रमध्यतः
यावन्मूर्धानमव्याप्तं शिवस्य वरवर्णिनी ७०
शक्तिनादस्तथा बिन्दुहंसकोटिमिवोदितम्
स्रवन्तममृतं दिव्यं चिन्तयेत्तु विचक्षणैः ७१
पिण्डीभूतं शिखाद्वारे द्योतयन्तं समन्ततः
मृतकाले वरारोहे स जीवो विशते पुनः ७२
तदा तु तिष्ठते देवि शिवकायमचेतनम्
पुनर्विलीयते जन्तुः सर्वपापविवर्जितः ७३
योगमुत्पद्यते तस्य संशुद्धस्य न संशयः
ग्रनेन विधिना देवि योगी मृत्युञ्जयो भवेत् ७४
मृतसञ्जीवनं योगं कथितं तव शोभने
नानेन सदृशो योगो देवि मृत्युञ्जयं प्रति ७५
ग्रथ च बिन्दुमध्यस्थं चिन्तयेत्तु विचक्षणः
जीवं दीपशिखाकारं सूर्यकोटिसमप्रभम् ७६
स जीवं बिन्दुसंयुक्तं प्रविशन्तं विचिन्तयेत्
कर्णिकास्थं वरारोहे पूर्ववच्चैव पुष्करे ७७
एवमुत्तिष्ठतेजन्तु यदि नीतो यमालयम्
ग्रानयित्वा मृतं देहं तत ग्राप्यायनं पुनः ७८

स्रवन्तं चिन्तयित्वा तु ततः स्वस्थमना भवेत्
कालमृत्युवशं प्राप्तं जीवापयति लीलया ७९
एवं सर्वेषु कर्तव्यं योगिना सुरसुन्दरि
बध्यन्ते नात्र सन्देह सत्यं देवि वदाम्यहम् ८०
अलेख्योऽयं प्रयोगस्तु वचसैव प्रकाशयेत्
इदं देवि रहस्यन्तु न दद्याद्यस्य कस्यचित् ८१
इति निश्वासकारिकायां क्रियाकारणे अरिष्टसमुदाय प्रकरणे
सर्वमृत्युञ्जये मृतसञ्जीवनन्नाम सप्तपञ्चाशत्पटलः

देव्युवाच
ग्रहचक्रं त्वया कथितं न तु विस्तरात्
तदहं श्रोतुमिच्छामि विस्तरेण ब्रवीहि मे १
शृणु देवि प्रवक्ष्यामि ग्रहचक्रं समासतः
लौकिकं पुण्यकालञ्च कथयामि वरानने २
अष्टारञ्च क्रमाल्लिख्य तत्र तत्रैव विन्यसेत्
सकलादिक्रमेणैव विन्यसेदनुपूर्वशः ३
ब्रह्माणं मध्यतस्थाप्य ग्रहान् पत्रेषु विन्यसेत्
सोमन्तु पूर्वतस्थाप्य आग्नेयेङ्गारकं तथा ४
बुधन्तु दक्षिणे चैव विपरीतं पुनर्न्यसेत्
शनैश्चरञ्च देवेशि नैर्ऋत्यां विन्यसेद्बुधः ५
गुरून्तु पश्चिमे चैव वायव्ये राहुमेव च
शुक्रमुत्तरतो न्यस्य केतुमीशानतो न्यसेत् ६
ब्रह्मस्थानन्तु यत्प्रोक्तं भास्करं तत्र विन्यसेत्
यत्वयानन्तकृतो देवि अरावे तु प्रकीर्तिताः ७
एवं गृहाणि संस्थाप्य लक्षयेच्च क्रमाद्बुधः
शुभानि चाशुभान्नि स्युर्लक्षयीत यथाक्रमम् ८

यत्पत्रं गच्छते भूतस्तस्य दीप्तं समादिशेत्
तत्काले कुरुते कार्यं क्षिप्रमेव विनश्यति ९
शुभाशुभन्तु यत्किञ्चिन्न कुर्वीत विचक्षणः
अध्वानञ्च गतेच्छुश्च क्षिप्रमेव विनश्यति १०
भुक्ते पत्रे महादेवि अङ्गारिरायेति चादिशेत्
सङ्क्रमास्तत्र देवेशि अतीतं कथयन्ति ते ११
अग्रतो यस्तु वर्तेत तद्धूमेति समादिशेत्
भविष्यति भयं घोरमादिष्टञ्च वरानने १२
क्रूराश्च सौम्यतां यान्ति सौम्याः क्रूरत्वमेव च
कर्णिकान्तस्थितस्सूर्यः स्वपत्रारायवलोकयेत् १३
यथा यथा भ्रमेच्चक्रं तथा तु भयमादिशेत्
सौम्या शुभसमाचारा पश्चात्स्थानेषु चादिशेत् १४
तदादिदोषमादेशं सुमुखे भास्करस्य तु
आदित्ये पृष्ठतः कृत्वा व्याहरेच्च क्रमं यदि १५
स्थित्वा सौम्यमुखञ्चैव न तत्र भयमादिशेत्
क्षीरेण फलिताश्चैव आहरेच्च क्रमं यदि १६
क्षेममारोग्यलाभञ्च आदिशेन्नात्र संशयः
विटङ्के शुष्कवृक्षे वा शून्यागारे तथैव च १७
रौद्रयाभिमुखश्चैव न सिद्धिफलमादिशेत्
पापगृहस्य वेलायां व्याहरेच्च क्रमं यदि १८
अशुभं क्षिप्रमादिष्टमात्मनोऽपि परस्य वा
एवमूर्ध्वमधश्चैव सक्रमान्न यथाक्रमम् १९
ज्ञात्वा सर्वमशेषेण ततः कर्म समारभेत्
भूम्याः परिग्रहे चैव तथा भूम्याः परीक्षणे २०
साधकस्याभिषेकन्तु आचार्याणां तथैव च
समयी पुत्रकानान्तु सिद्धासिद्धं तथैव च २१

भक्तिभक्तशेषन्तु ज्ञातव्यं स क्रमेण तु
पापे पापमतिं विद्यात् शुभे तु शुभमादिशेत् २२
वेदाग्निगुरुभक्तश्च शास्त्रे शक्तस्तथैव च
सङ्क्रमोक्तं कृतं कर्म भवते नात्र संशयः २३
क्रूरकर्म कृते चैव देवाग्निगुरुवर्जितः
आदधानापीस्तु ना भवन्ते सङ्क्रमोज्भितः २४
तस्मात्सर्वेषु कालेषु सङ्क्रमं प्रति पूजयेत्
सङ्क्रमे पूजिते देवि भवन्ति फलदायिनः २५
मध्ये तु भास्करं स्थाप्य ग्रहचक्रन्तु पूजयेत्
यात्राकाले भवन्त्येते साधकस्य फलप्रदाः २६
दिने दिने स्मरेद्यस्तु ग्रहचक्रस्य शोभने
ग्रहाश्चक्रभवेयुश्च नित्यं सानुग्रहाः प्रियाः २७
अथवा पूजयेद्यस्तु मासि मासि विचक्षणः
संक्रान्त्यां भावितात्मा तु न धान्यपतिर्भवेत् २८
ग्रहास्सानुग्रहाश्चैव भवन्ते नित्यमेव तु
न तस्य चाशुभं किञ्चिच्छुभन्नित्यं ददन्ति ते २९
एवं यः पूजयेद्देवि ग्रहचक्रं ++ ना
संपूज्य सर्वलोकस्य भवते नात्र संशयः ३०
यो यो विबुध्यते देवि साधकस्य गृहोत्तमः
तं गृहं पूजयेन्नित्यं कर्णिकास्थं वरानने ३१
तदा सानुग्रहो याति स गृहो नात्र संशयः
एवं ते कथितं देवि गृहचक्रं समासतः ३२
पूजनीयः प्रयत्नेन साधकैस्सुसमाहितैः
देव्युवाच
लौकिकीं कालमीशानं न मया विदितं प्रभो ३३
भास्करेण समास्सर्वे राशयः कथिताः पुरा

उदयं मेषमादौ तु मीनान्तेषु यथाक्रमम् ३४
मुहूर्तं सर्वतिथयः पुण्यकालप्रवर्तकः
आदित्यात्संप्रवर्तन्ते त्वया पूर्वमुदाहृतः ३५
कथं विज्ञायते शंभो कथयस्व प्रसादतः
ईश्वरः
शृणु देवि प्रवक्ष्यामि यत्त्वया परिपृच्छितम् ३६
तत्सर्वं कथयिष्यामि हिताय तव सुव्रते
राशिसङ्क्रमणञ्चैव पुण्यकालं यथा भवेत् ३७
यथा विज्ञायते देवि लौकिकं कालसञ्चरम्
आध्यात्मिकञ्चापि तथा शृणुष्व सुरसुन्दरि ३८
राशिसङ्क्रमणञ्चैव आदित्यस्य वरानने
कथयामि दिनं देहं मासि मासि यथाक्रमम् ३९
मेषं तुलादौ विषुवं कथितं तव शोभने
कर्कटे मकरे चैव कथयामि तथा शृणु ४०
माघमासादितः कृत्वा आषाढान्तेन शोभने
विज्ञेयं लौकिकं कालमुत्तरायणमुत्तमम् ४१
दक्षिणादुत्तरं पूज्यं कथयन्ति मनीषिणः
उत्तरं शुक्लवर्णाभं कृष्णं दक्षिणमुच्यते ४२
उत्तरन्त्वहरित्युक्तं देवानां सुरसुन्दरि
दक्षिणं रात्रिरित्युक्तं देवानां सुरसुन्दरि ४३
चैत्रमासादितः कृत्वा यावन्मासन्तु कार्तिकम्
युगादियुगमन्त्यञ्च कथयन्ति मनीषिणः ४४
चैत्रमासो युगादिः स्याद्युगान्तं कार्तिको मतः
तस्मात्सर्वाणि कार्याणि युगादौ तु समारभेत् ४५
वृषसिंहे समाख्याता नाम्ना विष्णुपदीति च
तस्मिन् भुक्तं हुतं जप्तं अक्षयं समुदाहृतम् ४६

वृश्चिककुंभे महादेवि पद्मेति परिकीर्तितम्
तस्मिन् दत्तं हुतं जप्तं पद्मेति परिसंख्यते ४७
मिथुनं कन्यके चैव धनुषी मीनमेव च
षडशीति मुखेनैव अपराः परिकीर्तिताः ४८
तेषु दत्तं हुतञ्चैव तावत्संख्येति कीर्तिताः
मासि मासि खेश्चारं लौकिकं कथितं तव ४९
ज्ञातव्यं देशिकेन्द्रेण आत्मनः श्रेय इच्छता
एतत्ते कथितं देवि लौकिकं चारमुत्तमम् ५०
श्रावणाञ्चादितः कृत्वा पुष्यान्तेन तु शोभने
++ ज्ञेयो दक्षिणश्चैव लौकिकः कथितस्तव ५१
पुनराध्यात्मिकञ्चैव कथयिष्ये यथा भवेत्
ईश्वरः
शृणु देवि प्रवक्ष्यामि राशीनां ज्ञानमुत्तमम् ५२
सत्यमेव यथा देवि ज्ञायते च शुभाशुभम्
मेषे तु कथितं नित्यं चिन्तितद्विपदस्सदा ५३
वृषे तु पुष्पदं ज्ञेयं मिथुने गर्भचिन्तितम्
कर्कटे तु भवेच्चिन्ता नित्यं वै व्यवहारिका ५४
राज्यचिन्ता वरारोहे सिंहे चैव सदा भवेत्
कन्यायां कन्यका चिन्ता तुले लाभं समादिशेत् ५५
वृद्धिर्वै वृश्चिके चैव धनुषो जयचिन्तनम्
मकरे तु महादेवि कलहं चिन्तितं भवेत् ५६
कुंभे च विषयन्नित्यं मीने स्थानं समादिशेत्
शेषे वृषे तथा देवि लाभमेव समादिशेत् ५७
मिथुने तु तथा प्रोक्तं लाभमेव समादिशेत्
मिथुने तु तथा प्रोक्तं लाभमेव समादिशेत् ५८
नास्ति लाभं सदा नित्यं कर्कटेन समादिशेत्

सिंहे कन्ये तथा लाभं लाभं वृश्चिककेन तु ५९
धनुषी जयलाभाय मकरेन कदाचन
कुंभे मीने जयं लाभं नित्यमेव विनिर्दिशेत् ६०
एवमादि वरारोहे कथितं तव सुवृते
रक्तो मेषो वृषः पीतो नीलं मिथुनमुच्यते ६१
कर्कटं कपिलं विद्यात् सिंहो धूम्रस्तथैव च
कन्या तु पाराडुरं विद्यात् चित्रवर्णतुला तथा ६२
वृश्चिकः कृष्णवर्णास्तु धनुश्चनल उच्यते
मकरं मूषिकं विद्यात् कुंभश्च करदं विदुः ६३
बहुरूपधरो मीन इत्येतत्समुदाहृतम्
मेषे तु ब्राह्मणश्चोक्तो वृषे तु क्षत्रियस्मृतः ६४
मिथुने वैश्यमित्याहुः कर्कटे शूद्र एव च
कर्कटे शूद्र एव ++ सिंहेन्दु ++ स्वजन ++ ६५
+++ कन्ये विद्याद्वराङ्गना
पुत्रो वा यदि वा मित्रो जाया वा तस्करस्तुले
वृश्चिके तु स्वयं भूत्य तद्वच्चोरश्च धावति ६६
मकरे दूषकः प्रोक्तः कुंभे पत्नीं विनिर्दिशेत्
ज्ञातव्यं देवदेवेशि शेषोऽन्यो विस्तरोन्यथा ६७

इति निश्वासकारिकायां क्रियाकाराडे समुदायप्रकरणे
ग्रहचक्रोपन्यासो नामाष्टपञ्चाशत्पटलः

देव्युवाच
विद्याचक्रं त्वया देव कथितं मम विस्तरात्
द्वादशे पुष्करे देव के वर्णाः परिकीर्तिताः
द्वादशैव च संकान्त्यो ममाख्यातुमर्हसि
आध्यात्मिकेन देवेश कथयस्व प्रसादतः २

ईश्वरः
शृणु देवि परं गुह्यं अवाह्यं कथयामि ते
येन विज्ञातमात्रेण विद्यातत्वलयो भवेत्  ३
द्वादशं पुष्करं यत्तु मया पूर्वमुदाहृतम्
अकाराद्यास्तु देवेशि कथिता अनुपूर्वशः  ४
द्वादशारं लिखेच्चक्रं कर्णिकैकन्तु विन्यसेत्
पूर्वमादिक्रमेणैव विन्यसेदनुपूर्वशः
अकारः ++++ राशिः परिकीर्तितः  ५
एवमादिक्रमेणैव यावत्सर्वमशेषतः
ध्यात्वा चैव विधं चक्रं पशुदेहन्तु देशिकः  ६
दीक्षयेदात्ममिस्थन्तु देशिकः सुसमाहितः
प्रत्यक्षे विहितं दीक्षा सर्वथा कथितं मया  ७
तस्माद्ध्यायेत्सदा चक्रं सिद्धिराशु प्रजायते
भ्रूमध्ये चिन्तयेच्चक्रं द्वादशारं वरानने  ८
एकैकक्रमयोगेन अभ्यसेत्तु दिने दिने
अनेन विधिना सिद्धिः वत्सरार्धेन जायते  ९
चतुर्विं शद्दलं कृत्वा पत्राणि तु समालिखेत्
आत्मसंस्थं पशुं कृत्वा रेचके पूरकेण तु  १०
ध्यानेनालोक्य भेत्तव्यं शतमेकैकमादरात्
पूर्णाहुतिस्तु दातव्या एकैकस्य समाप्तये  ११
परमाक्षरेण देवेन यावत्सर्वं समाप्यते
तदा सायुज्यमायाति साधको नात्र संशयः  १२
नवात्मानं वरारोहे पुष्करान्तेन कारयेत्
ध्यातव्यं गोमचक्रन्तु स बाह्याभ्यन्तरे स्थिता  १३
संवत्सरमयञ्चक्रं योऽभ्यसेत्सुसमाहितः
कथयेत्सर्वलोकस्य हिताहितशुभाशुभम्  १४

एतत्ते कथितं देवि चक्रं संवत्सरात्मकम्
ज्ञानेन मुच्यते देवि नात्र कार्या विचारणा १५
यत्तत्र ग्लानिमायाति ++ हृत्परमेश्वरि
समासात्कथितो देवि शुभाशुभमनेकधा १६
कृष्णवर्णं यदा म्लानमरितत्कालमादिशेत्
रक्तवर्णं यदा देवि विधामानन्तु पश्चिमे १७
इत्येतत्कथितं देवि अतिप्रीत्या मया तव
त्वया गुप्ततरं कार्यं न देयं पापकर्मणे २३
दातव्यं गुरुभक्तो यः श्रद्दधानाय धीमते
अन्येषां दृष्टसत्वानां सर्वस्यापि च पातयेत् २४
देवी
आकाराद्याशुरादेव राशयस्ते प्रकीर्तिताः
मेषादौ च तथा राशौ क्रमते भास्करः कथम् २५
लौकिकेन प्रमाणेन पुनराध्यात्मिकेन तु
एतदिच्छामि विज्ञातुं भगवन् वक्तुमर्हसि २६
ईश्वरः
शृणु देवि प्रवक्ष्यामि हयरविरथस्य तु
क्रमन्ते जयमास्थाय विधेनैकेन सुवृते २७
कोटयश्शतमध्वनां खगमस्य तु
अहनैकेन शोयाति लीलया परमेश्वरि २८
राशौ राशौ क्रमेत्सूर्यो योजनानदि पार्वति
तावतां संप्रवक्ष्यामि शृणु चैकमना मम २९
राशिद्वादश विज्ञेया अहैकेनोदयन्ति ते
तदहं द्वादशांशेन अध्वानं वरवर्णिनी ३०
क्रमते भास्करश्चैव राशौ तत्कथयामि ते
अष्टौ कोटिः क्रमेत्सूर्यः त्रयस्त्रिंशत्तु वत्सरात् ३१

सहस्राणि त्रयस्त्रिंशत् कथितन्तु वरानने
एतत्त्रयन्तु विज्ञेयं योजनात्र समासतः ३२
त्रयस्त्रिंशद्योजनानां ज्ञातव्यं तत्ववेदिना
योजनस्य त्रिभागैकं कथितं तव शोभने ३३
राशिराशिक्रमात्सूर्यः कथितस्तव शोभने
एकराशौ तथा सर्वं विभज्य कथयामि ते ३४
मासं सप्तकिलं जानि कथितानि मया तव
चत्वार्यपि सहस्राणि चत्वार्यपि शतानि च ३५
शतानि चैव तत्वानि कथितानि वरानने
योजनानि तथा प्रोक्ताः चत्वारिंशत्समासतः ३६
योजनानि च चत्वारि क्रोशमेकं तथैव च
क्रमसहस्रमेकन्तु चक्रं पञ्चशतानि च ३७
पञ्च पञ्च शतञ्चैव कर्माणि पुनरेव तु
हस्तद्वयमथ ज्ञेयमङ्गुल्या पञ्चमेव च ३८
वक्रराशौ यथा सर्वे संख्याता कथिता तव
लौकिकं कथितं ध्यानं पुनराध्यात्मिकं शृणु ३९
अहर्निशन्तु हाख्यातिं सहस्राण्येकविंशतिः
षट् शतानि च विज्ञेयं प्राणाकारं समन्ततः ४०
अहश्च कथयिष्यामि योगिनाञ्च जपं सदा
सहस्राणि दश प्रोक्ता तथाह्यष्टशतानि च ४१
द्वादशांशेन देवेशि प्राणानि विभजेत्पुनः
विभक्ते तु पुनर्देवि शतानि नवमेव तु ४२
एकस्मिंस्तु पुनर्देवि राशौ प्राणानि सोदरि
पञ्च सप्तति विज्ञेया एकैकस्य समासतः ४३
द्वादशांशेन देवेशि कथितानि मया तव
द्वादशाङ्गप्रमाणस्य प्रचारं सूर्ययोगतः ४४

कथितन्तु वरारोहे विदितव्यन्तु देशिकैः
अष्टौ कोटि स्मृता ये तु लक्षत्रयस्त्रिंशमेव च ४५
सहस्राणि त्रयस्त्रिंशत् कथितानि समासतः
त्रिंशतो योजनाश्चैव त्रयस्त्रिंशत्तु योजनाः ४६
योजनस्य त्रिभागैकं मया पूर्वमुदाहृतम्
प्राणा नव शतस्येह प्रोच्चारः कथितस्तव ४७
एकसप्ततिलक्षाश्चतुः साहस्रमेव च
चत्वारिंशत् सहस्राणि कथितानि समासतः ४८
योजनानां तथा प्रोक्ताः चत्वारिंशत्तथा पुनः
योजनाश्चैव चत्वारः कालमेकं तथैव च ४९
क्रममेकसहस्रञ्च तथा पञ्चशतं क्रमात्
कामास्तु पञ्च पञ्चार्धः तौ तद्वयमेव च ५०
अङ्गुलानि तथा पञ्च मया ते समुदाहृतः
पञ्च सप्तप्रमाणस्य अध्वानं कथितं तव ५१
यावता क्रमते सूर्यः प्राणास्तावत्प्रकीर्तिताः
विशेषं किन्तु वक्ष्याम्मि प्राणस्य सुरसुन्दरि ५७
योजनेन क्रमेत्सूर्यो गतिस्तु कथिता तव
प्राणस्य रक्षमात्रेण यथावत्कथितं मया ५८
प्राणस्य योजनाह्येषा कथिता तव शोभने
एष ते प्राणसञ्चारो रविसञ्चार एव च ५९
कथितं स रहस्यञ्च मया ते कथितं तव
द्वा सप्तति सहस्राणि नाडीनान्तु वरानने ६०
क्रमेण तानि सर्वाणि भुज्यन्ते परमेश्वरि
नाडीचक्रमशेषेण रहोनुध्योह्यशेषतः ६१
वेदितव्यानि सर्वाणि देशिकेन महात्मना
आत्मा यो वै तमद्यैवह नाडीलः परिचारितः ६२

क्रमशश्चैव तान्सर्वान् भुङ्क्ते वै परमेश्वर
अहोरात्रेण देवेशि ज्ञातव्यं देशिकेन तु ६३
देव्युवाच
द्वासप्तति सहस्राणि नाडीनां परमेश्वर
कथञ्चरति आयातु एतदिच्छामि वेदितुम् ६४
एकैकस्य तु नाड्यो वै ++ कियति स्मृताः
चतुष्षष्ट्या तु ये नाड्याः त्वया देव उदाहृताः ६५
एकैकीयती संख्या नाडीति परिवारिताः
एतदिच्छामि विज्ञातुं परं कौतूहलं हि मे ६६
शृणु देवि परं गुह्यं कथयामि तवाखिलम्
येन विज्ञातमात्रेण देशिकः पशुहा भवेत् ६७
सकलं निष्कलञ्चैव शून्यञ्चैव विशेषतः
प्रणवान्तञ्चैव देवेशि वेदितव्यं प्रयत्नतः ६८
सकलं देहमध्यस्थं महातीतन्तु निष्कलम्
अयनं शून्यमित्याहुः प्रशान्तं शक्तिरिष्यते ६९
द्विहीनं सकलं प्रोक्तं द्वादशान्तं तु निष्कलम्
षडंशं च भवेच्छून्यं प्रशान्तञ्चाङ्गुलायतम् ७०
एतद्भेदचतुष्कन्तु हिताय तव कीर्तितम्
एतेषां यः परो देवः पारं पर्यव्यवस्थितः ७१
न चाऽसौ सकलो देवो निष्कलोपिनचैव सः
शून्यो न चैव देवेशि प्रशान्तं नैव तत्पदम् ७२
परात्परं परातीतं दृष्ट्वा प्रन्तत्सुरैरपि
एतद्भेदचतुष्कन्तु उपादानञ्च तस्य वै ७३
अन्यथा नैव ज्ञातेन शास्त्रकोटिशतैरपि
अयुते द्वे सहस्रैकं षट् शतानि च संख्यया ७४
यावच्चरति आत्मा तु तावद्धोक्ता न संशयः

द्वासप्तति सहस्राणि नाडीनां कथितं तव ७५
निष्कलं सकलञ्चैव शून्यावस्थं तथैव च
प्रशान्तं शक्त्यवस्थानं कथितं तव शोभने ७६
प्रबुद्धः परमात्मा तु स्थानेषु च चतुष्वपि
सुप्रबुद्धस्तु विज्ञेयो जनन्तन्तु चतुष्वपि ७७
सुशुद्धिशुद्धशुद्धेति कथितं तव शोभने
अकारं त्रिरणुर्विद्यात् अणुरेकस्तु बिन्दुकः ७८
एवं व्याप्य परो देवः सकलावस्थितश्शिवः
भुङ्क्ते वै परमेशानः सर्वनाड्यामशेषतः ७९
मन्त्रातीतः स्वतन्त्रश्च द्विधावस्थः परश्शिवः
उच्चारं मन्त्रमित्युक्तं सर्वतन्त्रे वरानने ८०
स्वयं निष्क्रमते यस्तु अनुस्वारस्स उच्यते
निरोधाद्यूर्ध्वगामी च व्यापिनी च सुदैवतैः ८१
अनुच्चारस्तु विज्ञेयः षडेते तु न संशयः
एकैकस्य तु तत्त्वस्य नाडी नाद्यावतिर्भवेत् ८२
तावन्ती संप्रवक्ष्यामि तदेकाग्रमनाः शृणु
सकलादिक्रमेणैव कथयामि तवाखिलम् ८३
सहस्राणि नव प्रोक्ता एकैकस्य समासतः
एवं तत्वेष्वनुष्ठाय आत्मा चरति सुवृते ८४
चतुष्षष्टिस्तु या नाड्यो मया पूर्वमुदाहृताः
तासान्तु यावती संख्या कथयामि वरानने ८५
एकैकस्य तु नाड्या वै सहस्रपरिवारिताः
शतमेकन्तु देवेशि तथा वै पञ्चविंशतिः ८६
एकैकशस्तु नाड्यायाः परिवारसमायुताः
सकलादिक्रमेणैव आत्मा सञ्चरते सदा ८७
पश्यते देवदेवेशि योगी योगपदे स्थितः

उपचारस्मृतो देवि यथात्मा चरति प्रिये ८८
तत्वे समरसो भूत्वा तिष्ठते परमेश्वरः
उपचारेण बुध्वा तु योगिभिः परमेश्वरि ८९
सिद्धिरापातयत्याशु गच्छेत्तत्परमं नरः
नाडी सञ्चरणाद्देवि ज्ञानं समुपजायते ९०
इत्येवमुपचारेण सञ्चारैरुपचर्यते
नाड्यावस्थगतात्मानं मनसा चिन्तयेद्यदा ९१
स एकः कथितो देवि नाड्यावस्थागतः प्रभुः
सर्वेषाञ्चैव नाडीनां व्यापयित्वा व्यवस्थिताः ९२
नाडीसमरसो देवि वेदितव्यः प्रयत्नतः
नाडीसमरसं ज्ञात्वा योगिनस्सुसमाहिताः ९३
तदा सिद्धिश्च मुक्तिश्च भवते नात्र संशयः
एष ते देहसञ्चारे रविसञ्चारमेव हि ९४
कथितं स रहस्यन्तु न मया गोपितं तव
तिर्यङ्नरामराख्येषु एष एव विधिस्मृतः ९५
एक एव तु आत्मानं सर्वेषामेव देहिनाम्
नाडीसञ्चारणं केचित् सर्वेषामेव देहिनाम् ९६
कथितं स रहस्यन्तु न मया गोपितं तव
देहे तु राशयस्सर्वे विद्योताः परमेश्वरः ९७
न मया वर्जिता देव त्वत्प्रसादात्तु दुर्ल्लभाः
पुनश्च श्रोतुमिच्छामि भगवन् वक्तुमर्हसि ९८
अहोरात्रविभागेन प्राणसञ्चारयोर्गतिः
न मया चैव विज्ञातं भ्रमतीव च मे मनः ९९
द्वादशैव च सङ्क्रान्त्यो न विज्ञाता महेश्वर
कियती प्राणसंख्यानं सङ्ख्याल्या कथयस्व मे १००
ईश्वरः

अध्वनस्य प्रयोगेण उदयः कथितो मया
अहैकस्य विभागेन न त्त्वया विदितं पुरा १०१
प्रमाणस्य तदर्धेन व्याख्यातं सञ्चरं तथा
अधुना कथयिष्यामि शृणु देवि समासतः १०२
अहोरात्रेण सन्त्योध्वादशां परिकीर्तिताः
विभज्य कथयेद्देवि प्रमाणानि यथाक्रमम् १०३
द्वादशांशीकृते प्राणे एकैकस्य विभागतः
घटिका पञ्चविज्ञेया राशौ राशौ न संशयः १०४
घटिका पञ्चकीरे तु सङ्क्रान्तिः परिकीर्तिताः
अहोरात्रेण देवेशि द्वादशं कथितस्तव १०५
घटिके देवदेवेशि यावत्प्राणा शृणुष्व मे
शतानि त्रीणि चाख्यातं प्राणानां तव शोभने १०६
विंशत्त्रिंशञ्च ज्ञातव्यमेकैकस्य न संशयः
घटिका पञ्च देवेशि ना करञ्जपमारभेत् १०७
एवमादिक्रमेणैव जपेदेकैकमक्षरम्
एवन्तु जपतो मन्त्रः सिध्यते नात्र संशयः १०८
देवी
अहोरात्रेण देवेशि जपस्तु कथितः प्रभो
विदितञ्च गृहीतञ्च त्वत्प्रसादान्महेश्वर १०९
अहमेकेन देवेश यजन्तु कथयस्व मे
ईश्वरः
प्रहरं त्रिविधं कृत्वा जपेन तु समासतः ११०
नीश + दुच्चार्यमित्युक्ते शुकदेहो प्रतिष्ठितः
निष्कलस्सकलातीतो निष्कलस्सजपस्मृतः १११
द्वादशांशेन ते प्राणा मया पूर्वमुदाहृताः
दिवा तु कथिता देवी तपतः सर्वदाजपः ११२

प्रहरे प्रहरे देवि त्रीणि पत्राणि लोकयेत्
निष्कलं जपतो मन्त्री एकैकन्तु निरीक्षयेत् ११३
भागे भागे जपः प्रोक्तः शतानि नवमेव तु
एतद्रहस्यं देवेशि कथितं तव सुवृते ११४
एवमालोक्य जपतः साधकस्य समाहितः
पश्यते हृदि पद्मे तु सप्तरात्रान्न संशयः ११५
पश्यमानो जपेद्यस्तु यदि स्यात्साधको भुवि
ब्रह्महत्यादिकान् पापान् त्रिभागेन प्रणाशयेत् ११६
एकवृध्या जपेद्यस्तु यावदेकादशं गुरोः
विनिवृत्तिं ततः कुर्यात् कोटिसप्तफलं भवेत् ११७
अहस्तु यावती प्रोक्ता रात्री वै तावती स्मृता
एवं जपेत यो योगी योगमुत्पद्यते द्रुतम् ११८
मातृजान् पितृजान् दोषान् सप्तजन्मकृतादपि
हरते जपमात्रेण एकाहेन न संशयः ११९
ब्रह्महत्यानि पापानि कृत्वा च शतशोऽपि वा
निष्कलं जपतो मन्त्रमहेनैकेन शुध्यति १२०
निष्कलं जपते यस्तु नापायं तस्य विद्यते
नैव पुण्यं भवेत्तस्य स शिवः तिष्ठते क्षणैः १२१
द्विमात्रं प्रणवं देवि निष्कलस्य प्रकीर्तितम्
नमस्कारं भवेदेवं शक्ति योऽपूर्वचोदिता १२२
एष ते कथितो देवि द्वादशारस्य शोभने
संवत्सरमयञ्चक्रं कथितन्तु समासतः १२३
एवन्ते चक्रसद्भावं जपसद्भावमुत्तमम्
तत्वसद्भावमाख्यातं योगसद्भावमेव च १२४
विदिता ते महादेव देहसंक्रान्तिरुत्तमा
त्वत्प्रसादान्महादेव यत्सुरैरपि दुर्लभम् १२५

भूयोऽहं श्रोतुमिच्छामि संशयो मे महेश्वर
बिन्दुनादसमायोगात् षड्भागं परिकीर्तितम्  १२६
न मया विदितं देव उत्तरायणदक्षिणम्
मध्येन परमेशानं तन्मे व्याख्यातुमर्हसि  १२७
ईश्वरः
शृणु देवि प्रवक्ष्यामि प्रयोगमिदमुत्तमम्
न मया ++  त् ख्यातं तत्ते वक्ष्यामि सुवृते  १२८
सकलं निष्कलञ्चैव कलाढ्यं शून्यमेव च
बिन्दुनादं तथा शक्तिं कथयामि शमासतः  १२९
मासैकस्य यावती प्राणा एकैकस्य विभागशः
कथयामि वरारोहे तदेकाग्रमनाः शृणु  १३०
प्रहरं षड्विधं कृत्वा सकलादि प्रयोजयेत्
नादान्तेन तु देवेशि ज्ञातव्यं देशिकेन तु  १३१
खमलं क्षपणञ्चैव क्षयः कण्ठोष्ठ्यमेव च
बिन्दुनादञ्च देवेशि उभयत्र प्रकीर्तितम्  १३२
उत्तरे वर्तमानस्तु यदा दक्षिणतां व्रजेत्
दक्षिणं प्रथमादिञ्च मध्ये तु विषुवं स्मृतम्  १३३
तां तु शक्तिं विजानीयात् परैशा सह संयुताम्
प्रहरैकस्य भागैक षड्भागपरिकल्पितम्  १३४
षड्भागे तु कृते सम्यगुत्तरे जपतत्वयः
दक्षिणञ्च तथैवेह कथितं तव शोभने  १३५
मध्ये तु विषुवन्देवि सा तु शक्तिरुदाहृता
तस्य लक्षमहं वक्ष्ये विषुवस्य महेश्वरि  १३६
ईषत्स्पर्शनमायुक्तं मुखनासापुटस्य तु
सा शक्तिः कथिता देवि शिवतत्त्वं प्रकीर्तितम्  १३७
उत्तरन्तु समाख्यातं विद्यातत्वं समन्ततः

दक्षिणं वाक्यतत्वन्तु ज्ञातव्यं देशिकेन तु १३८
एभ्योऽपि चरितो देवि शक्तिध्यानविवर्जितः
न तस्य स्पर्शमाख्यातं न रूपं न च भावना १३९
प्रशान्तञ्च परातीतमव्ययं गुणवर्जितम्
विज्ञप्तिस्सा तु विज्ञेया पारं पर्येण संस्थिता १४०
त्रितत्वं कथितं ह्येतत्समासेन तु शोभने
एवं बहुविधं देवि तत्वमेतदुदाहृतम् १४१
विस्तरेण तु विख्यातमल्पबुध्या प्रबोधनम्
प्रहरं षड्गुणेनैव मया तु कथितं तव १४२
विभाजिते भवेद्देवि एकैकस्य विभागतः
शतानि चैव चत्वारि तथा पञ्चाशमेव च १४३
मासमेकैकशो देवि कथितं तव शोभने
कर्णिकास्थस्मृतस्सूर्यः कर्णिकास्थः सदाशिवः १४४
दिशापत्रे तु देवेशि विद्येशान् परिकल्पयेत्
नवमः कालरुद्रस्तु अधस्त्रोते व्यवस्थितः १४५
शिखातूर्ध्वमुखा तस्य व्यपयन्ति व्यवस्थिताः
जलबुद्बुदसङ्काशं तत्र देवं सदाशिवम् १४६
स्वस्थं सुनिर्मलं तेजः सुषिरज्योतिरूपिणम्
अक्षराणि मया ख्याता केसराणि तथैव च १४७
एतद्वै बिन्दुयोगन्तु कथितं तव शोभने
अहोरात्रेण चाख्यातं लौकिकेन वरानने १४८
वर्षा चत्वारि विज्ञेयो वेदितव्यं हि देशिकैः
++ तद्देवि न दातव्यमन्यायपथवर्तिने १४९
अश्रद्धधाने पापिष्ठे न दद्याद्ज्ञानमुत्तमम्
दातव्यं गुरुभक्ताय शिवभक्ताय धीमते १५०
शिवशास्त्ररतायैव शिवध्यानरताय च

तादृशाय तुन दातव्यं नान्यथा तु प्रदापयेत्  १५१
इति निश्वासकारिकायां क्रियाकाराडे समुदायप्रकरणे
हंसावारो नाम एकोनषष्टिः पटलः

देव्युवाच
शिवाध्ययनयुक्तस्य ज्ञातव्यं ज्ञानमुत्तमम्
तदहं श्रोतुमिच्छामि भगवन् वक्तुमर्हसि  १
ईश्वरः
शृणु देवि प्रवक्ष्यामि ज्ञानसद्भावमुत्तमम्
वागीश्वरीति विख्याता माता शास्त्रस्य सर्वतः  २
तदहं संप्रवक्ष्यामि तदेकाग्रमनाः शृणु
वागीश्वरीं यजेत्पूर्वं  शैवशास्त्रजिगीषया  ३
ततोप्यध्ययनं कुर्यात् पुत्रकस्साधकोऽपि वा
आचार्ये वा तु देवेशि पूजितव्या हि यत्नतः  ४
अपूजयित्वा तु देविं कुतस्सिद्धिमवाप्नुयात्
न ख्यातिं लभते देवि न च शास्त्रार्थविद्भवेत्  ५
इष्ट्वा तु देवदेवेशि वागीशं लोकमातरः
तदात्माध्ययनं कुर्यान्मेधावी भवते ततः  ६
सा देवी दुर्गा ज्ञातव्या चरिडकालोकविश्रुता
कालरात्रिसविख्याता दक्षा कात्यायनीति च  ७
उमा देवी च विज्ञेया दद्याद्देवी सरस्वती
जगन्माता च विज्ञेया जगद्धात्री तथैव च  ८
जगदुत्पादिनी देवी आपो गुल्फे तु संस्थिताः
जङ्घे तेजो मये तस्या वायुर्जानौ तु संस्थितः  ९
ऊरुयुग्मे स्थितं व्योम तत्वमेवमुदाहृतम्
कटिप्रदेशे विज्ञेयमहंकारं सुमध्यमे  १०

श्रोणीतटे स्थिता बुद्धिरष्टरूपमयी पुरः
मष्कसूत्रप्रदेशे तु तत्वानि परिकीर्तिता ११
ओष्ठयुग्मे स्थिता विद्या नासामन्त्रास्तथैव च
भ्रूक्षेपौत्क्षये ज्ञेयौ निन्दुदेवकलात्मकः १२
मन्त्रके देवदेवेशि ज्ञेयो देवस्सदाशिवः
हासितो वासचेष्टानि ज्ञेयं शक्तिमयानि तु १३
त्रितत्वं ++ भक्तं वा शशिमुद्योतकारिणी
चन्द्रप्रकृतिनाभिमध्ये तु नियतिस्तनमध्यगा १४
कालस्त्रिवलिसंयुक्तो रा +++++++
सूर्याग्निनयनानक्षत्रे रूपशोभिता १५
ऋषयो रोमकूपस्था नागा अङ्गुलिषु स्थिताः
सप्तस्वनवती देवी मूर्च्छनोत्तरिका शुभा १६
नानाभरणचित्राङ्गी जाति मेश्चलिभूषिता
लक्षणव्यञ्जनोपेता पुराणं कृतमेखला १७
इतिहासतनुश्चित्रा वेदमुद्गरशोभिता
सर्वदेवमयी देवी सर्वतत्वमयी तथा १८
सर्वदेवमयी देवी सितपद्मोपरि स्थिता
इत्यष्टकसमायुक्ता तदन्तकृतशेखरा १९
कदंबवनमध्यस्था हारकेयूरमण्डिता
अनाभिलंबितैश्चित्रैः कदंबप्रयतैश्शुभैः २०
षट्पदोद्गीतमधुरैः कोकिलारावशोभितैः
मायूरावशशोभाढ्ये अस्थिरोगणशोभिते २१
गन्धर्वैरूपगीयन्ति श्रोत्रेन्द्रियमनोरमैः
ऋतुभिः षड्भिराकीर्णा कदंबवनमध्यगा २२
तत्रस्थां चिन्तयेद्देविं वागीशां लोकपूजिताम्
वागीशां पूजयेत्पूर्वं ततोऽध्ययनमारभेत् २३

मेधावी भवते देवि गदां धारयते बहून्
स्थूलरूपं समाख्यातं सूक्ष्मरूपमतः शृणु २४
चन्द्रकोटिप्रतीकाशां ध्यात्वा देवीं मनोरमाम्
दीर्घमायुरवाप्नोति मेधावी छिन्नसंशयः २५
शास्त्रधारानिपातेन वर्षयन्तीं विचिन्तयेत्
विशन्तीमात्मचक्रेषु चिन्तयेत्साधकोत्तमः २६
एवं वर्षति सा देवि मातृकाधारवाहिनी
विशन्ती स्वशरीरेषु यदा पश्यति साधकः २७
सर्वज्ञत्वं सदा तस्य सर्वपापैर्न निर्दिशेत्
दिव्यसिद्धिप्रदा देवि ध्यातव्या दिव्यरूपिणी २८
ज्वलन्ती ध्यायते यस्तु पाताले सिद्धिदायिका
वर्षमाणान्तु यो ध्यायेत् योगवित्सुसमाहितः २९
प्लावयेदात्मनो मूर्ध्नि स मृत्युं विजयिष्यति
सर्वकर्मकरी देवी ध्यातव्या योगिभिस्सदा ३०
कृष्णवर्णधरा देवीं ध्यात्वा मारते रिपून्
पीतवर्णधरी देवी तया स्तंभनकारिका ३१
शुक्लवर्णपरीधानामुत्तरीयेन शोभिताम्
शुक्लवर्णधरां ध्यात्वा पीनोन्नतपयोधराम् ३२
देवी वागीश्वरीं देवीं सर्वसिद्धिप्रदायिनीम्
इत्यष्टकसमायुक्तां पूजयित्वा विधानवित् ३३
लक्षमेकं जपेद्यस्तु वागीश्वर्या समाधिना
पश्चाद्व्रतन्तु कर्तव्यं मासमेकं वरानने ३४
स्त्रीरूपधारणां नित्यं कर्णपत्रविभूषिताम्
शालिपिष्टकभुञ्जानः क्षीरभुक् साधकेश्वरः ३५
मासमेकं व्रतं कुर्यात् सर्वकामप्रसिद्धये
मासान्ते तु ततो देवि त्रिरात्रं समुपोषितः ३६

यागं कृत्वा तु देव्याश्च पूजयित्वा य ++
हुत्वा त्रिमधुराक्तांस्तु तिलान् वै कृष्णसर्षपान् ३७
सहस्रमेकं देवेशि जपेत्पश्चात्समाधिना
ततो वागीश्वरीं देवीं पश्यते साधकेश्वरः ३८
वदति लक्षया वाचा साधु साध्विति सादरम्
प्रणिपत्य ततो देवि अर्घ्यं दत्वा तु साधकः ३९
जपेदेकाग्रचित्तस्तु भक्तिना शुद्धबुद्धिना
ततो वागीश्वरी देवी विशक्तो साधकस्तनुः ४०
शरीरे संप्रविष्टायां वागीशेन समो भवेत्
सर्वपापहरं शुद्धं गर्भं तद्देव कारणम् ४१
विमलान्निर्मलश्चोक्तं निर्मलाच्छुभ्रतारिका
शुभ्रात् सूक्ष्मगतिख्यातं सूक्ष्माच्च व्योमसंभवः ४२
तच्च ईशाननिलयं पञ्चमं ब्रह्मसंहितम्
शुद्धस्फटिकसङ्काशसर्वतोमुखमुत्तमम् ४३
तस्माद्विशन्ति संभूतं पचद्वायुर्व्यवस्थितम्
तच्चतुर्थं भवेद्ब्रह्म चामीकरसमद्युतिः ४४
अथर्वनामतस्तस्मान्नराख्यं संप्रकीर्तितम्
तच्च तेजः समायुक्तं तृतीयं संप्रकीर्तितम् ४५
नीलजीमूतसङ्काशः तस्माद्वै नादसंभवः
आपस्तत्वे निविष्टं तं द्वितीयं ब्रह्मसंज्ञितम् ४६
कुःकुमं पश्य विख्यातं द्रष्टव्यञ्च यजुर्मितम्
ततो बिन्दुप्रतीकाशं सृजेद्वागीशकन्दरे ४७
महोर्ध्वलिङ्गसंस्थानं नल +++ रोप्यसृष्टिकृत्
तदेतत्पृथिवीप्रोक्तं तदेतत्सत्यमुच्यते ४८
तदेतत्प्रथमं ब्रह्म तदेतत्तत्वमुत्तमम्
तदेतच्छून्यमित्युक्तं तदेतद्ब्रह्मपञ्चरम् ४९

शिवं ब्रह्म शशी शुक्रं अमृतं गर्भमन्त्रकम्
तस्य पर्यायनामानि तत्रैतानि वरानने ५०
शिवमित्यततश्चोक्तं सर्वतत्वोपचारतः
पञ्च ब्रह्म गृही तद्भिः ब्रह्ममित्यभिधीयते ५१
शशी तद्यो भूतत्वाच्छुक्लत्वाच्छुद्धमुच्यते
अमृतध्यानभूतित्वात् गर्भचाचार्य देहकान् ५२
उच्चया मन्त्रमुत्पाद्य मननत्राणधर्मिणा
तत्रस्थो ब्राह्मणः प्रोक्तो मन्त्रस्थो मन्त्रदेहजः ५३
तत्रस्थो लिङ्ग इत्युक्तो समारोज्झित एव च
कुतोन्यश्शुद्धदेहस्तु कुतोऽन्ये मन्त्रतन्त्रवः ५४
कुतोऽन्यो ब्राह्मणो दृष्टः कुतोऽन्यश्शिवसंभवः
स एव समयी प्रोक्तो यदा गर्भे समासिता ५५
स एव पुत्रको ज्ञेयः कन्दरे निष्क्रमे सति
स एव साधकः प्रोक्तो ग्रहणे मन्त्रनायकः ५६
गर्भमेवं समाख्यातं गर्भं लिङ्गञ्च सुन्दरि
तल्लिङ्गधरणीपत्नी ताभ्यां सृष्टिन्तु वै शृणु ५७
ईश्वरः
अथ शैव शिवप्राप्तिः पारंपर्यप्रदायकः
व्याप्नोति सा जगत्कृत्स्नं परापरविभेदतः ५८
स्थावराख्यं पदा व्याप्तं अपरं जङ्गमं पुनः
जङ्गमेषु क्वचिद्व्यक्तिः दृश्यते सुरसुन्दरि ५९
अव्यक्तिः सा च वै ज्ञेया लिङ्गिना व्यक्तिरुच्यते
शिवार्थं उद्भवं लिङ्गं भुक्तिमुक्तिसमुद्भवः ६०
तल्लिङ्गं सृष्टिसंभूतं परापरविवर्जितम्
सृष्टिरेकक्रियात्मा वै सर्वदा शिवसंभवा ६१
या सृष्टिः सा क्रिया नित्या या क्रिया सृष्टिरेव सा

क्रियासृष्टिसमोपेता शिवभक्तिसमन्विता ६२
शिवतेजोद्भवा सृष्टिः शिवशक्तिरिति स्मृता
शिवश्च सर्वगो नित्यः शक्तिश्च शिवधारिता ६३
तस्मादुत्पद्यते शक्तिः सृष्टिविक्रियया तया
क्रियादिफलदा पुंसां न ज्ञानक्रिययान्विता ६४
क्रियाशक्तिसमोपेता शक्तिमान् शिव एव च
इच्छाज्ञानक्रियाशक्तिः शक्तित्रय इति स्मृतः ६५
क्रियैव कारणा ताभ्यां शक्तिभ्यां शिवशासने
क्रियासमन्वितं चित्तं चित्तायत्ता च वासना ६६
वासनावशमायान्ति नित्यमात्ममनीषिणः
शिवज्ञानमिति ख्यातं दीक्षितानां हिताय वै ६७
शिवज्ञानं सदाऽतीव क्रियैव फलते यतः
शिवन्तु ध्यायते मन्त्री क्रियारूढो यजेच्छिवम् ६८
परे तु निष्कला शक्तिरपरे तु कलान्विताः
न श्रेष्ठपरमा शक्तिः निग्रहानुग्रहे सह ६९
क्रियते स्थावराख्येषु यतस्तस्माद्विनिष्कला
यथा तु निष्कला कार्या क्रिया तत्परमो गुरुः ७०
तया तु सकले नित्यं क्रियया तु शिवं व्रजेत्
देव्युवाच
दिव्यदेहा विनाशी च जायते साधकेश्वरः ७१
हतमृत्युञ्जरां त्यक्त्वा देवैश्च समतां व्रजेत्
अप्रविष्टेऽपि देवेशि मानसी सिद्धिदायिका ७२
यं यं चिन्तयते देवि तं तं सिध्यति साधके
एतद्देवि समाख्यातं दिव्यसिद्धिव्रतोत्तमम् ७३
स जप्तममृतञ्चैव पूजयेच्च दिने दिने
अद्भुता जायते मेधा शास्त्रकारी सुभाषिता ७४

जायते नात्र सन्देहः सत्यं देवि वदाम्यहम्
त्रिकालं जपते यस्तु शतमेकैकमादरात् ७५
न शक्यं तस्य देवेशि मेधा वर्णयितुं प्रिये
पञ्च पञ्चमियोगेन पञ्चगव्यं पिनेद्यसि ७६
समानवत्सया देवि सहस्रपरिमन्त्रितम्
अ्रायतेज्य तुला मधा साधकस्य न संशयः ७७
सहस्रमन्त्रिता देवि वाचा तेन विनिर्गतम्
घृतेन मधुना सार्धं भक्षयेत्पञ्च पञ्चमी ७८
मेधावी भवते देवी साधको नात्र संशयः
ब्राह्मीरसं समादाय घृतेन मधुना सह ७९
लक्षयित्वा भवेन्मेधा शास्त्रान् धारयते बहून्
घृतमेकदले देवी सहस्रपरिमन्त्रितम् ८०
पञ्चपञ्चमियोगेन मेधा तस्य प्रवर्तते
धान्यान् भक्षयते भक्षान् शतं जप्त्वा वरानने ८१
तेन सा ज्ञायते मेधा अमृतीकरणानि च
जायते नात्र सन्देहः सुखोपायेन शोभने ८२
अत्र मन्त्रपदानीभनि भवन्ति
ओं हंसरि देवी मूलमन्त्रमारिकिरि नमः
हृदयं सर्वकामिकं ओं हंसतेजो नमः
उपहृदयमाग्नेय्यां दिशि न्यसेत्
ओं हंस नमः । शिर ईशान्यां पूजयेन्यसेत्
ओं ह्रीन्नमः । शिखा नैर्ऋत्यां न्यसेत्
ओं हंसोदरि नमः । कवचं वायव्यां न्यसेत्
ओं हृदय नमः । अस्त्रं सर्वत्र योजयेत्
वागीश्वरी समाख्याता पञ्चाङ्गेन समन्विता
एवं पञ्चाङ्गमाख्यातं कुर्यान्मन्त्रविचक्षणः ८३

ओं जालिनी नमः । धूर्जटि नमः दक्षिणद्वारपालिका
ओं कन्दिनी नमः । ओं यंसिनी नमः ।
पूर्वद्वारपालिका
ओं गान्धारी नमः । ओं वररे नमः ।
पश्चिमद्वारपालिका
ओं अहङ्कारी नमः । प्रवरे नमः । उत्तरद्वारपालिका
ओं क्षन्नमः
आसाच्चादनञ्चैव गातृकाश्च वरानने ८४
इति निश्वासकारिकायां क्रियाकाण्डे समुदायप्रकरणे
वागीश्वरी यागपटलो नाम षष्टिः पटलः

देव्युवाच
सर्वस्यानुग्रहं देव कथितं शिवशासने
महदत्र विरोधोऽयं पश्यामि परमेश्वर १
पुत्रोऽप्यनुग्रहो मात्रा किन्तत्राहितरी भवेत्
पितुश्चानुग्रही चैव कथं पुत्रपिता भवेत् २
भ्राताप्यनुग्रहेनैव कथं पुत्रत्वमेष्यति
एवं भगिनी भार्या च कथं कुर्यादनुग्रहम् ३
स्वामिनो भृत्यसन्धानात् कथं गोत्रं गरीयसः
एतदिच्छामि विज्ञातुं भगवन् वक्तुमर्हसि ४
ईश्वरः
न विरोधो भवेत्तेषां देव्यनुग्रहकर्मणि
पितरं मातरञ्चैव भ्रातरं भगिनीं तथा ५
पत्नीं वा राजभृत्यं वा यथा ++ त्त शृणु
पितरं मनसा कृत्वा मातरञ्च तथैव च ६
अनुग्रहे वरारोहे पत्नीं वा भगिनीं तथा

एवमन्यापि तथा स्वामी मृत्यां तथैव च ७
नाग्रतो न गरीयां सो ह्यग्रजन्मा गरीयसः
गुरोर्गुरुतरी माता सर्वैः पूज्यास्तु शोभने ८
पितरञ्च तथैवेह मान्यं मान्यतरं यथा
भृत्यैस्तु प्रथमं देवि कृत्वाऽनुग्रहमुत्तमम् ९
पुनश्च स्वामिने चैव भृत्ये वामगरीयसः
गुरोर्गुरुतरी यस्तु माता भ्राता पिता तथा १०
मान्याः पुत्रकैर्देवि ये केचित्पूर्वदीक्षिताः
देव्युवाच
गोघ्नी मातृहा वाऽपि पितृहा दुहितृस्तथा ११
ब्रह्महा गुरुतल्पस्यात्स्तेयकश्च तथैव च
संयोगिकाश्च देवेश कथं शुध्यन्ति मानवाः १२
ईश्वरः
प्रमादात् ब्राह्मणं हत्वा जपते सकलं प्रिये
जप्तेनाष्टसहस्रेण मुच्यते नात्र संशयः १३
कामतः कृतकर्मस्य तदेव द्विगुणं भवेत्
सुरां पीत्वा तु पापात्मा द्विजो भूत्वा नराधमः १४
कलाढ्यं जपते मन्त्रं मुच्यते सर्वकिल्बिषात्
स्तेयं कृत्वा वरारोहे जपेत सकलं बुधः १५
जपेनाष्टसहस्रेण मुच्यते नात्र संशयः
गुर्वङ्गनागमं कृत्वा प्रमादाद्यदि पुत्रकः १६
क्षपणं वायुभक्षेण आदित्याभिमुखस्थितः
जपते मौनमास्थाय सप्ताहावधिधारधीः १७
कामतः कुरुते यस्तु तदेव द्विगुणं जपेत्
संयोजितस्य देवेशि तदेव जपमादिशेत् १८
मातरं पितरं हत्वा जपेदेकादशात्मकः

जपेदष्टसहस्रन्तु एकैकन्तु वरानने १९
अकामतो वरारोहे कामतः त्रिगुणं स्मृतम्
सर्वेषामेव पापानां एवमेव वरानने २०
जपेदेकादशात्मानमेकैकन्तु शतं शतम्
सर्वेषामेव पापानां नवात्मानं जपेत्सदा २१
जपेनाष्टसहस्रेण शतं हुत्वा विशुध्यति
हत्वा चैव जगत्सर्वं त्रैलोक्यं स चराचरम् २२
नवात्मा नवभिर्भेदैः जप्यः शुध्यर्थकारणे
अथवा जपते यस्तु प्रायश्चित्ताय शुद्धये २३
नवात्मानं वरारोहे मुच्यते सर्वकिल्बिषैः
नवात्मा नवभिर्भेदैः शब्दघोषादिपूर्वकैः २४
मुच्यते किल्बिषैर्घोरैः सप्तजन्मकृतैरपि
प्रायश्चित्तन्तु कर्तव्यं कथितं तव शोभने २५
तादृशं साधयित्वा तु आचार्यस्तत्वपारगः
पुर्यष्टकशतं देवि निष्कलं परमेश्वरम् २६
अमनस्केन देवेन सर्वाध्वानमशेषतः
एकैकमाहुतिं हुत्वा मुच्यते सर्वकिल्बिषैः २७
आत्मविद्यापराणान्तु यत्पश्यति हिताय वै
आयाति पूरणं यावत् तावत्तत्कायमादिशेत् २८
अध्वानकल्पनां कृत्वा हुनेदेकैकमाहुतिम्
आत्मयागमिदं श्रेष्ठं कथितं तव शोभने २९
विस्तरे विस्तरं देवि कर्तव्यं देशिकेन तु
अकथ्येयमिदं श्रेष्ठं गोपनीयं प्रयत्नतः ३०
अधिवासनमप्यत्र राजोपात्तं न विद्यते
उपचारविनिर्मुक्तं सर्वदोषविवर्जितः ३१
एककालद्विकालं वा त्रिकालं नित्यमेव वा

समाधानञ्च कुरुते प्रायश्चित्तं न तस्य वै ३२
पुत्रेण कथितं पूर्वं तव वै विदितं त्वया
सकृदुच्चारिते तत्वे फलदुष्कृतनाशनम् ३३
सकृदुच्चारितात्तत्वात् शरीरे यस्तु विन्दति
स मुच्यति न सन्देहः जन्मसंसारबन्धनात् ३४
सकृदुच्चार्यमाणस्तु देहे तिष्ठति सुवृते
एतान्वेत्ति यदाचार्यो ह्यनुच्चारी स उच्यते ३५
अनुच्चारिणमात्मानं यो ज्ञास्यति हि देशिकः
पूर्वसूत्रे मया प्रोक्तं तत्सर्वं फलमाप्नुयात् ३६
शेषं नदति ऊकारो यकारो रावमेव तु
वकारस्वनशब्देन नीयतीत्यभिधीयते ३७
शब्दन्तु नदते काले लकारः परमेश्वरः
मकारस्फोटशब्देन ध्वनिशब्दाक्षकारकाः ३८
रुकारस्तु वरारोहे रकारः परिकीर्तितः
ध्वङ्कतन्तु हकारो वै वेदितव्यं समासतः ३९
शर्वशब्दविशिष्टन्तु वियत्तु सुरसुन्दरि
षड्जस्वरसमायुक्तं तन्त्रीशब्दसमन्वितम् ४०
ईषस्तनय +++++
इषितुटिनयश्शब्दः स बिन्दुपरिकीर्तितः
तस्माद्विनिसृताश्शब्दा या पूर्वमुदाहृता ४१
सकृदुच्चारिता ह्येते शिवेन परमात्मना
एवं ज्ञात्वा वरारोहे पूर्वोक्तफलमाप्नुयात् ४२
वर्णोच्चारैर्विनिर्मुक्तो नवात्मा येन भावितः
तन्तु देवि विजानीयात् अशुघ्नं देशिकोत्तमः ४३
एतद्देवि न दातव्यं ज्ञानामृतमनुत्तमम्
देव्युवाच

योगिनां यद्भवेन्नाम अग्निकार्यं जपस्तथा ४४
योगकाले च देवेश तन्मे व्याख्यातुमर्हसि
पूर्वाभैदुत्तरं मार्गं द्वितीयं दक्षिणेन तु ४५
गच्छंतश्चाक्रतश्चैव मध्ये तु विषुवं स्मृतम्
महदन्तरमेकैकं कथं संक्षेपतः प्रभो ४६
स्नानमग्निर्जपश्चैव भगवन् वक्तुमर्हसि
ईश्वरः
अज्ञानस्य भवेद्योगं विधानज्ञस्य कीर्तितम् ४७
नाडीसञ्चारतत्वज्ञो विधिमेव प्रयोजयेत्
अधोमुखेन तत्वेन सकलेन वरानने ४८
प्रवाहं रोधयेन्मार्गे ले कारेण समन्वितः
पीतकृष्णसमानेन स्तंभयेन्नात्र संशयः ४९
एवमभ्यसतस्तस्य योगिनस्तु दिने दिने
इच्छाप्रवृत्तिमायाति काले स्वच्छन्दवृत्तिना ५०
मृत्युना मुच्यते योगी नात्र कार्या विचारणा
अतत्वप्रतिबुद्धस्य विधिरेष प्रकीर्तितः ५१
अथ तत्वविदः पुंसो निर्यत्नादेव जायते
पूर्वावस्थमिदं कृत्वा शनैर्वायुर्यथेप्सितम् ५२
अन्यथा स्वस्वभावस्थो यदि तत्वे व्यवस्थितः
गच्छते नात्र सन्देहः प्रभुशक्तिसमन्वितः ५३
++++ नित्याभागन्तु द्विभागं परिकल्पयेत्
मृण्मयं भागमेकन्तु तीर्थभागद्वितीयकम् ५४
तृतीयेन तु भागेन स्नानन्तु परिकल्पयेत्
षानद्यधेष्टन्तुरिषु कुर्यादाचमनक्रियाम् ५५
द्वितीयेन तु भागेन भूम्या चैवापि प्रोक्षणम्
पवित्रं संस्तरञ्चैव तृतीयेन तु कल्पयेत् ५६

चतुर्थेन तु भागेन कुर्याद्वै पितृतर्पणम्
सुषम्नाप्रवहेमार्गत्रिभागं परिकल्पयेत् ५७
भागैकन्तु जपं कुर्यात् द्वितीयं होमकर्मसु
तृतीयं ध्यानकार्यन्तु कल्पयीत विचक्षणः ५८
भागद्वयं तृटिह्यष्टौ भागे भागे तु यस्मृता
अग्निकुण्डविधानन्तु अग्निकार्यं द्वितीयकम् ५९
विभागभाजिते योगं कृत्वा तु विभजेत्पुनः
++ द्वियं योगमारंभं भागैकेन विधानवित् ६०
प्राकृतं पुरुषञ्चैव ईश्वरं शिवमेव च
प्राणद्वयं द्वयं देवि योगन्तु परिकल्पयेत् ६१
प्राणमेकन्तु देवेशि यन्मया परिकीर्तितम्
शिवयोऽस्य सद्भावस्तव देवि उदाहृतः ६२
घटिकाह्यष्टभागेन त्रिभागं यत्प्रकीर्तितम्
भागे भागे भवेद्देवि मया ते समुदाहृतम् ६३
देव्युवाच
कुतोह्यायः कुतो हानिः देव इच्छामि वेदितुम्
कस्मिंस्थाने भवेद्धोमः अभिषिक्तः कुतो भवेत् ६४
केन मार्गेण अग्निश्च आपश्च कथयस्व मे
ईश्वरः
तेजोमण्डलमध्यस्थं सुषुम्नेनावकर्षयेत् ६५
नाडस्निाने तु संप्राप्ते सोहयीत वचिक्षणः
पद्माकारं भवेत्कुण्डं नाभिस्थाने व्यवस्थितम् ६६
कल्पितं तिष्ठते तत्र यतादेः पूर्वचोदितः
इडाप्रभातकाले तु चिन्तयेत्सोममण्डलम् ६७
तेन मार्गेण आपस्तु हृत्पद्मे चानयेद्बुधः
अभिषेकन्तु तत्रैव कर्तव्यं पूर्वचोदितः ६८

न मया कस्यचित् व्याक्तं रहस्यमिदमुत्तमम्
अक्लेशं न सुखोपायं साधकानां हितावहम् ६९
एवं योगविधानज्ञो लभते शास्वतं पदम्
एवं सदाशिवा वाति कथिता तव शोभने ७०
यत्तत्परमसद्भावं शिवयोगमनामयम्
न तस्य कालवेला वा न स्थानं न प्रयोजनम् ७१
कल्पनारहितं योगं सर्वस्योपरि संस्थितः
यक्षरादिकैर्लोकैः संबन्धो मुक्तये नृणाम् ७२
भावाधिगम्यं तद्ज्ञानं न सहस्रादिसंख्यया
शास्त्रकोटिसहस्राणि अधीत्य सुबहून्यपि ७३
अप्राप्य शिवसद्भावं शुरवत्तारवाहकः
देवी
शिवं करोति सर्वत्र रुद्रं वापि प्रसादयेत् ७४
तया देव परिज्ञातुमिच्छामि परमेश्वर
ईश्वरः
शृणु देवि प्रवक्ष्यामि गुह्यं प्रश्नमिदं शुभम् ७५
येन विज्ञातमात्रेण साधको कर्षयेद्ध्रुवम्
सर्वतन्त्रिषु सामान्यो विधिरेष वरानने ७६
अग्नीषोमात्मकं कर्म सर्वतन्त्रेषु चोदितः
सर्वेषामेव देहीनां नाडीसञ्चारसञ्चरः ७७
तस्य नाडी महादेवी सुमुखायास्थितस्य तु
बलित्वाद्बलिता योगे वेदितव्या हि योगिभिः ७८
यां यां चिन्तयते कर्तुं साधकस्सर्वसाधकः
तादृशं धारयेद्रूपं मन्त्रं शस्य सुवृते ७९
नाडीनाञ्चैव सद्भावं कारयीत विचक्षणः
सार्धन्तु संमुखीभूतं चिन्तया तत्वधानवित् ८०

तस्य नाडी तु आग्नेयी सौम्यनाडी तु साधके
संमुखे वर्तमानस्य विपरीतं विचिन्तयेत् ८१
तस्य नाडीह्यधो भागे साधकस्यापरिस्थिता
वारिणा प्लावयित्वा तु प्रविशेत्साध्यविग्रहम् ८२
रेचकेन वरारोहे यावत् हृत्पद्मतां गतः
निस्तत्वं निर्मलीभूतं चिन्तयेदात्मविग्रहम् ८३
तत्वां तत्वेषु सन्धाय सर्वावस्थां विचिन्तयेत्
आत्मानं साध्यमात्मानं चेतश्चेतसि योगिनः ८४
नाड्यो नाडिषु सन्धाय भूतान् भूतेषु चिन्तयेत्
इन्द्रियाणि क्रियायाञ्च तन्मात्रां मातृकेषु च ८५
एवं वै साध्यते देवि नीतेरं वासुपूजिता
++ कर्षते देवेत्यादिना गन्धर्वकिन्नरीम् ८६
विद्याधरीस्तथा यक्षी ध्यानेनाकर्षयेद्ध्रुवम्
येन येन तु रूपेण साधकस्साधयेद्द्रुतम् ८७
तद्रूपं पूर्वमाख्यातं मया तु तव शोभने
सौम्ये सौम्यन्तु कर्तव्यं रौद्रमाग्नेयाकर्मणि ८८
कथितं स रहस्यन्तु न मया गोपितं तव
एवं वै व्यापयित्वा तु साध्यदेहं स साधकः ८९
साध्यबीजं स्वबीजं च धन ++ त्ति केन विशेत्पुरः
एवं वै सर्वकार्येषु प्रविशेत्तु समाहितः ९०
कथितं देव देवेशि सेवितव्यं हितैषिभिः
एतज्ज्ञानपरं दिव्यं मया ख्यातं समासतः ९१
न देयञ्च त्वया देवि अन्यायपथवर्तिने
देव्युवाच
सर्वव्यापीति देवेश यत्त्वया कथितं पुरा ९२
अर्धचन्द्रस्स एवोक्तः पुनरेव महेश्वर

न मया देव विज्ञातुं विरोधीवयदस्यतः ९३
कस्मिंस्थाने त्वया देव निरोधी रोधते प्रभो
लक्षणं तस्य देवेश देवतानां तथैव च ९४
कथं विमुच्यते रोधात् एतदिच्छामि चोदितम्
ईश्वरः
साधुसाधुमहाप्राज्ञे यत्त्वया परिपृच्छितम् ९५
शेषप्रश्नमिदं श्रेष्ठं सुरूढं शब्दमुत्तमम्
तदहं संप्रवक्ष्याम्मि यत्सुरैरपि दुर्लभम् ९६
सर्वव्यापीति येनायं गीयते सुरसुन्दरि
निवाति च या प्रोक्ता कथयामि समासतः ९७
बिन्दोश्चैवोपरिष्ठात्तु संस्थितं तत्त्वमुत्तमम्
शमुखा च स्थितं मध्ये श्रङ्कुराकारमन्तयोः ९८
मध्ये बिन्दुसमायुक्तं कलयापि निरोधितम्
ज्ञानशक्तिक्रियाशक्तिरिच्छाशक्तितृतीयकी ९९
ज्ञानशक्तिः सुषुम्ना तु ब्राह्मी सा तु प्रकीर्तिता
क्रियाशक्तिरिडा प्रोक्ता वैष्णवी सा प्रकीर्तिता १००
इच्छाशक्तिस्तथा मध्ये नाडीरोक्ता तु पिङ्गला
योगमार्गे स्थिता देवि रौद्रीं तान्तु विचिन्तयेत् १०१
वामे नासापुटे देवि क्रियाशक्तिः प्रतिष्ठिता
एवमादिक्रमेणैव मध्ये रौद्री प्रतिष्ठिता १०२
देवतामुनयः प्रोक्ताः स्थानानि च विभागशः
ज्ञानशूलमिदं देवि ज्ञातव्यं देशिकेन तु १०३
हृन्नासांशैर्ललाटे च ज्ञातव्यं सुसमाहितैः
ज्ञानशूलमिदं देवि यो वेत्ति निखिलेन तु १०४
स मुच्यते न सन्देहः मोचयेत्तन्न संशयः
नासायास्पर्शनेनैव वेदितव्यं प्रयत्नतः १०५

ललाटस्योपरिष्टात्तु ज्ञानशूलमिदं शुभम्
विदितं तत्पुरा देवि ज्ञानं तत्कारकं शुभम् १०६
ज्ञानशक्तिक्रियाशक्तिरिच्छाशक्तिस्तृतीयका
एतत्त्रयं शिखाद्वारे शिखा सा परिकीर्तिता १०७
नासा वंशे समाख्यातं ललाटस्योपरि शृणु
शूलयुग्मेऽर्धचन्द्रो वा निरोधी मध्यमे स्थितः १०८
देव्युवाच
योगेन हि स्मयतयः कश्चित् च्यादितोऽक्षरः
रोधतेति त्वया पूर्वं कथितं मम सुवृत १०९
एतदिच्छामि विज्ञातुं निरोधी रोधते कथम्
ईश्वरः
संयोगेन तु देवेशि वर्णोच्चारयते तदा ११०
तद्वर्णं बिन्दुसंख्यानं यदाभवति शोभने
कण्ठेऽस्य बिन्दुसंयुक्तो वर्णस्य कथितस्तव १११
तदेवेन्दुमुखायन्तं यदा यात्यनुनासिकम्
निरोधी सावधिर्दिष्टा भाले शमसमाधिते ११२
एतत्ते देवि विख्यातमध्यचन्द्रस्य लक्षणम्
निरोध्याया समासेन शक्ता या देवतैस्सह ११३
नान्यावस्था स्थिता देव अधश्चोर्ध्वञ्च संस्थिता
सर्वव्यापीति तन्त्रेस्मिन् अर्धचन्द्रः प्रकीर्तितः ११४
एष ते ज्ञानसद्भावः समाख्यातस्समासतः
न देयं दुष्टबुद्धीनां ज्ञानन्नास्ति ततः परम् ११५
मया ज्ञातं त्वया ज्ञातं ये वदन्ति तमोव्रताः
मानिनस्ते शषडावा न तेषामुपदर्शयेत् ११६
अन्यशास्त्रे मया ज्ञातमुपायमथवा बहून्
न तेषां सर्वदा देवि ज्ञातव्यं ज्ञानमुत्तमम् ११७

पदवाक्यप्रमाणेन हेतुवादेन मोहितः
भ्रमन्त्यनिश्चिता लोकाः संसारचलहेतवः ११८
मुष्णन्ति ज्ञानरत्नेन शैवं सर्वशिवावहम्
तेषान्तु रक्षणीयानि न प्रकाश्यानि शोभने ११९
रत्नाकरमिदं देवि मया ख्यातं समासतः
सर्वतन्त्रेषु सामान्यं सर्वतन्त्रेषु चोत्तमम् १२०
न देयञ्च त्वया देवि रक्षणीयं प्रयत्नतः
न देयं पापशीलाय अविधिज्ञाय देशिकैः १२१
पूर्वमेव मया ख्यातं तस्मिन् तन्त्रे च पठ्यते
एवं ब्रुवन्ति ये मर्त्याः न तेषामुपपादयेत् १२२
रत्नकोशमिदं तन्त्रं सर्वतन्त्रेषु सन्ततम्
सर्वतन्त्रेषु यज्ज्ञानं मया पूर्वमुदाहृतम् १२३
तद्देवि समुदायेन समुदायमुदाहृतम्
अस्य मन्त्रस्य सद्भावमन्यशास्त्रविदो जनाः १२४
न ते विशेषं जानन्ति पदार्थाश्चेति संस्थिताः
पदार्थाश्चान्यतन्त्रेषु सन्ति वै देव्यनेकधा १२५
गूढगोपितगुप्तानि न विजानन्ति देशिकाः
गुह्यार्थाह्यन्यतन्त्रस्य अस्मिन् तन्त्रे वरानने १२६
शीलया कथिता देवि असंदिग्धास्सुविस्तराः
सर्वतन्त्रेषु यज्ज्ञानं अस्मिन् तन्त्रे प्रतिष्ठितम् १२७
कथितं स रहस्यन्तु न मया गोपितं तव
शैवोदधिरयं देवि ज्ञानमेतैर्विभूषितः १२८
तन्मयोक्तं समासेन उच्छिन्नस्य यथा सुखम्
उत्तमं मध्यमञ्चैव कन्यसं कन्यसाधमम् १२९
आहारन्तु यथा लभ्यं यस्य यस्य यथेच्छया
तत्तथा प्राप्यते देवि अस्मिन् शैवार्णवे शुभे १३०

ज्ञेयमादौ भवेद्देवि समुदायमपश्चिमः
कथिता कारिका देवि कोटिसंमितमुत्तमम् १३१
अध्ययनं कुरुते यस्तु यः कश्चित्तु समाहितः
स्वर्गे तस्य कुलं देवि रुद्रलोके महीयते १३२
येनेदञ्च श्रुतं देवि पदार्था विदिता यदि
स गोत्र एव मुच्येत भवसंसारबन्धनात् १३३
येनेदं लिखितं तन्त्र पञ्चसूत्रपदोज्वलम्
तस्य गोत्रं शिवं याति सुचिरान्नरकार्णवात् १३४
योऽर्थज्ञोऽभ्यस्य तन्त्रस्य तन्त्राचारानुवर्तकः
कुलकोटिशतं साग्रं परं पदमवाप्नुयात् १३५
इति देवि समाख्यातं पदार्थानीकसङ्कुलम्
सर्वज्ञभाषितं सर्वं सर्वज्ञत्वप्रदायकम् १३६
बिन्दोश्च लक्षणञ्चैव परमाक्षरनिर्णयम्
अक्षराणां समुत्पत्तिं मन्त्राणाञ्चैव लक्षणम् १३७
तत्वानां लक्षणञ्चैव तमाद्यानां तथैव च
लक्षणं ह्यष्टतत्वानां ह्यात्माचारं यथाक्रमम् १३८
दीक्षासञ्चारसंयोगं भुवनाद्यैः प्रकीर्तितम्
त्रितत्वस्य विभागञ्च लक्षणं कथितं तव १३९
अप्रबुद्धप्रबुद्धस्य बुध्यमानस्य लक्षणम्
मुक्तस्य लक्षणञ्चैव तव देवि उदाहृतम् १४०
उच्चारलक्षणं प्रोक्तं जपस्यैव तु लक्षणम्
योगस्य लक्षणञ्चैव कथितं तेऽप्यनेकधा १४१
आहुतीलक्षणञ्चैव पूर्णाहुत्याश्च लक्षणम्
विकल्पमविकल्पञ्च परञ्चैव परापरम् १४२
बन्धस्य कल्पने चैव द्विप्रकारं प्रकीर्तितम्
हृच्चक्रलक्षणञ्चैव क्षुरिकायाश्च लक्षणम् १४३

लक्षणं मृत्युनाशाय कथितं तेऽप्यनेकधा
अतेव शोभने मर्म +++++++ १४४
मर्मजं लक्षणञ्चैव विशेषात् कथितं तव
अन्ये चैव पदार्था ये नोक्ताश्चैव वरानने १४५
ते सर्वे देवदेवेशि ज्ञातव्यास्तत्वचिन्तकैः
कारिकायां महादेवि कथितं तव सुवृते १४६
निश्वासे तु परे तन्त्रे उत्तमे कोटिसंमिते
कुलकोटिशतं साग्रं ज्ञातारं तारयिष्यति १४७
प्रकटार्थमिदं देवि मद्भक्ताय वरानने
इति निश्वासकारिकायां ज्ञानक्रियाकाण्डे एकषष्टिः पटलः

समाप्तोऽयं द्वादशसहस्त्रिकायाः द्वितीयः खण्डः
करकृतमपराधं क्षन्तुमर्हन्ति सन्तः
परमशिवेन लिखितेऽयं निश्वासकारिका
ओं महागणपतये नमः

निष्कलं परमं तत्वं तृटिमात्रं प्रकीर्तितम्
कथं विज्ञायते शंभो एतदिच्छामि वेदितुम् १
ईश्वरः
शृणु देवि परं गुह्यं यत्त्वया परिपृच्छितम्
तदहं संप्रवक्ष्यामि हिताय तव सुवृते १-१
भुवनाध्वा कलाध्वा च तत्वाध्वा च वरानने
वर्णमन्त्रपदाध्वा च कथयाम्यनुपूर्वशः २
प्राणैके संस्थिता देवि वेदितव्यं हि देशिकैः
भुवनाध्वा तु यत्प्रोक्तो मया पूर्वं हि सुव्रते ३
षड्विंशत्तत्वैराक्षिप्तं वेदितव्यं प्रयत्नतः

पुनश्चाष्टादशैस्तत्वैः कलाभेदैः पुनस्थितम् ४
पुनश्च नवभिस्तत्वैः कथितं सुरसुन्दरि
तत्सर्वञ्चाष्टभिर्भेदैराक्षिप्तं पुनरेव तु ५
एकेषु ++ ल्कं तत्वं तत्वयुक्तं समुद्वहेत्
षट् त्रिंशदङ्गुलञ्चारं यन्मया कथितं तव ६
हृत्पद्माद्यवधिं देवि वेदितव्यं प्रयत्नतः
आपादतलमध्वानमुत्सहेत वरानने ७
भुवनाध्वा स विज्ञेयो देशिकेन महात्मना
तत्त्वाध्वा च वरारोहे तेषाञ्चोर्ध्वं व्यवस्थितः ८
कलिकालिक्तमात्मानमुच्छ्वसन्तं बहिस्थितः
कलाध्वा तु स एवेति कथितस्तत्र पूर्वशः ९
एवमन्योऽपि देवेशि वेदितव्यः प्रयत्नतः
षट् तृंशाङ्गुलं परित्यज्य क्रमवच्च सुमध्यमे १०
तृटिमात्रं स विज्ञेयो देहमुक्तस्तु निष्कलः
स्वामि भावं तु यत्तस्मिन् द्वादशान्तमवस्थितः ११
संयुक्तशक्तिना बुद्धं तृटिमात्रस्तु निष्कलः
शक्त्या देहस्थितो ह्यात्मा निष्कलः परमेश्वरः १२
तत्वस्थो व्यापयेद्देवि देहान्मुक्तस्तु निष्कलः
सुसमिद्धे यथावह्नौ शिखा लिहति चाम्बरे १३
देहस्य तद्वरारोहे लीलायति तत्पृदे
दीक्षाकालेऽभिमानन्तु तद्वत् कुर्यात्तु देशिकः १४
अहमेव परं तत्वं तत्वलीनस्तथैव च
शक्त्यारणिभूताया पुनस्तत्र क्षिपाम्यहम् १५
एवं यो वेत्ति तत्वेन वह्निवद्देहमध्यतः
अतीतश्शिव तद्वह्नेः स तु योजयते परे १६
शक्त्या तावत्स युज्येत यावत्तत्वन्न विन्दति

उदिते तु परे तत्वे तत्रस्थोऽपि न वार्यते १७
बन्धमुक्तः परे शान्ते परे लीयन्ति शाश्वते
लीनस्सर्वगतो देवि धर्माधर्मविवर्जितः १८
हृत्पद्माद्यावत्तत्पद्मं पृथक् संहारलक्षितम्
यावद्वक्त्रमनुप्राप्तं द्विभागं त्यजते तु सः १९
तृतीयं त्यजते स्वल्पो त्र्यंशैर्मुक्तस्तु निष्कलः
अतीतं द्वादशान्ते तु शक्तिपद्मं प्रकीर्तितम् २०
तत्रस्थं तृटिमात्रन्तु कालं तस्य प्रकीर्तितम्
निष्कलश्शक्तिपद्मे तु प्रबुद्धस्तत्र तिष्ठति २१
अतीतस्सुप्रबुद्धस्तु उन्मनत्वं यदा प्रिये
न कालं न कलाचारं न तत्वा न च देवता २२
सुनिर्वाणं परं शुद्धं गुरुवक्त्रे प्रतिष्ठितम्
तं प्राप्य न निवर्तन्ते भयसंसारबन्धने २३
न तस्य चामराख्यातं निष्कलावस्थितस्य तु
एतत्ते निष्कलं तत्वमुक्तमेव समासतः २४
चतुर्विधं मया देवि कथितं तत्वमुत्तमम्
त्रिविधं तु परित्यज्य शक्त्यन्तं यस्तृटि स्मृतः २५
तृटौ पटौ तु स्थित्वा वै षोडशांशे व्यवस्थितः
स भोक्ता सर्वतत्वानां शक्त्यन्ते यस्तृटिस्मृतः २६
स भोक्ता सर्वतत्वानां शक्तिना सह संयुतः
शक्त्यतीतो वरारोहे तत्वेन सह युज्यते २७
चतुः पद्मं भवेत्पद्मं व्यापिणी कर्णिकास्थिता
तत्र शक्तिचतुष्कन्तु सूक्ष्माख्यं परिकीर्तितम् २८
श्रुत्वा बुध्वा विमुच्यन्ते नात्र कार्या विचारणा
सर्वतन्त्रेषु सामान्यं तत्रस्थं विषुवं स्मृतम् २९
प्राणस्य तल्लयं देवि तत्रस्थोऽपि निवर्तते

सकलं निष्कलञ्चैव मयनञ्च तृतीयकम् ३०
प्रशान्तं प्राप्य देवेशि निष्कलं विषुवं स्मृतम्
त्रिभागभाजिते चारे निष्कलः प्रणवः स्मृतः ३१
प्रशान्तस्तु स्मृतो बिन्दुः निष्कलः प्रणवस्य तु
स चेतस्य स्मृतो जीवो यदा शक्त्या तु युज्यते ३२
अन्यथा निष्कलोह्यात्मा सुषुप्ताविव लक्ष्यते
चिन्मात्रन्तु स्मृतो हुत्वा चेता शक्तिः प्रकीर्तिता ३३
श्रुत्वा बुध्वा विमुच्यन्ते नात्र कार्या विचारणा
सर्वतन्त्रेषु सामान्यं तन्त्रस्थे विषुवं वदेत् ३४
प्राणस्य तल्लयं देवि तत्रस्थेन निवर्तते
तथा युक्तमिदं सर्वं नानाचेष्टानि कारयेत् ३५
तत्स्थाने लीयते ज्ञानी ज्ञे +++ परं लयम्
कल्पनारहितं ज्ञानं सर्वतत्वविवर्जितम् ३६
व्यापकं सर्वतत्वानां पारंपर्येण संस्थितम्
एतत्ते निष्कलञ्चारं कथितन्तु मयाखिलम् ३७
न देयञ्च त्वया देवि अन्यायपथवर्तिने
कपटेनोपपन्नाय श्रवस्यपि न दापयेत् ३८
व्यापिनी व्योमरूपा च अनन्ता नायका स्मृता
मूर्तिर्देवस्य विख्याता शक्त्या देव भुवस्य तु ३९
पञ्च व्योम स्मृता ह्येते शून्यावस्था तु देवता
ब्रह्मादीनां वरारोहे शून्यदेहः परः स्मृतः ४०
एतत्ते देवतायोगं प्रथमं परिकीर्तितम्
शक्त्यवस्थान्तरी भूतास्सूक्ष्माद्याः परिकीर्तिताः ४१
तत्स्थ चेतात्मका देवाश्शब्दरूपाः प्रकीर्तिताः
तृतीया तु वरारोहे ज्ञातव्या देशिकेन तु ४२
द्विविधस्थान्तरे देवि ज्योतीरूपं विचिन्तयेत्

त एवमनुरूपन्तु पञ्चमां कथितं तव ४३
ईशवक्त्रे तथा घोरे वामस्सद्यस्तथैव च
त्रिविधं मन्त्रदेहन्तु वेदितव्यं प्रयत्नतः ४४
ब्रह्माविष्णुस्तथा रुद्रो ईश्वरस्तु सदाशिवः
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ४५
शून्यस्पर्शस्तथा शब्दो ज्योतीरूपं तथैव च
मन्त्ररूपं तथैवेह कथितं तत्वतो मया ४६
स्थूलात्स्थूलतरैर्भावैः सूक्ष्मात्सूक्ष्मतरैः पुनः
पञ्चब्रह्माणि देवेशि वेदितव्यानि यत्नतः ४७
शून्यस्पर्शस्तथा शब्दो ज्योतीरूपं तथैव च
तत्वरूपं तथैवेह पञ्च ब्रह्माः प्रकीर्तिताः ४८
एवं ज्ञात्वा च बुध्वा च मुच्यते पाशबन्धनात्
व्रजते शिवसायुज्यं शिवेन सह मोदते ४९
षट् पदार्थमिदं देवि मन्त्राणां कथितं तव
वेदितव्यं प्रयत्नेन सिद्धिमोक्षार्थकाङ्क्षिभिः ५०
एवं सर्वेषु मन्त्रेषु कथितं तव शोभने
इति निश्वासकारिकायां दीक्षोत्तरे प्रथमः पटलः

देव उवाच
शृणु देवि प्रवक्ष्यामि साधकानां हितावहम्
यने विज्ञातमात्रेण विधिमुक्तं लभेद्ध्रुवम् १
षड्विधस्तु शिवो ज्ञेयो योगिना सुमहात्मना
शब्दव्योमतया ज्योतिः विग्रहो भुवनस्तथा २
मन्त्रमूर्तिस्तु परमः षड्विधस्तु शिवोऽव्ययः
मन्त्रमूर्तिं विदित्वा तु मन्त्रसिद्धिमवाप्नुयात् ३
भुवनेशत्वमाप्नोति भुवनासक्तमानसः

ब्रह्मादीनां सुरेन्द्राणां साधने विग्रहं स्मरेत् ४
योगिनामधिपत्यर्थं ज्योतिस्थो योगमभ्यसेत्
शब्दतत्वे परे लीनः शब्दान्तर्गतमानसः ५
परमेमाक्षमाप्नोति शब्दात्सर्वार्थसिद्धये
तस्यातीतं परं देवि शक्तिव्योमप्रकीर्तितम् ६
तस्य ध्यानाद्भवेत्सिद्धिः मुक्तिश्चैव न संशयः
विग्रहो भुवनो ज्योतिः शब्दच्छामन्तथैव च ७
एते परप्रकाशन्तु शिवध्यानपरश्शिवः
शिवमेवं विधं ज्ञात्वा साधकस्तु समाहितः ८
प्राप्नोति विविधां सिद्धिं मुक्तिञ्चैव न संशयः
मन्त्रमूर्तिं परं ज्ञात्वा सिद्धिं मुक्तिमाप्नुयात् ९
जपे होमार्चनाध्यानात् सिद्धयश्च यथार्थतः
भुवनन्तु भुवनाकारं ब्रह्माराडादि यथाक्रमम् १०
नानारत्नमयं दिव्यमनौपम्यगुणान्वितम्
इन्द्रनीलमहानीलैः राजतैश्च विभूषितम् ११
पद्मरागमयस्तंभैः नानारत्नोपशोभितम्
दिव्यसृग्गन्धवस्त्राढ्यं दिव्यैश्वर्यसमन्वितम् १२
भुवनं देवदेवस्य ज्ञात्वा तल्लयमाप्नुयात्
विग्रहं विग्रहाकारं शिववर्णादिलक्षणम् १३
शशाङ्कार्धधनं त्र्यक्षं नागयज्ञोपवीतिनम्
शून्यहस्तं वृषारूढमुमादेहार्धसंयुतम् १४
शङ्खकुन्देन्दुधवलं सहस्रादित्यवर्चसम्
विग्रहं देवदेवस्य सर्वकामार्थसाधनम् १५
साधनं सर्वमन्त्राणां भूम्यर्थे च स्मरेत्सदा
ज्योतिध्यानात्सदायोगी योगसिद्धिमवाप्नुयात् १६
अणिमादिगुणैश्वर्यं योगी क्रीडादिलक्षणम्

व्यालाकारमनाकारं व्योमव्यापी परश्शिवः १७
सर्वव्यापिनमीशानं चिन्तया शिवमाप्नुयात्
निर्गुणं साञ्जनातीतं गृहनक्षत्रवर्जितम् १८
शुद्धस्फटिकसङ्काशं परं व्योम विचिन्तयेत्
व्योमलीनमनाः सम्यक् व्योमस्थो व्योमतन्मयः १९
परं मोक्षमवाप्नोति यत्र शब्दे लयं गतः
शब्दध्यानात् परो मोक्षः सिद्ध्यश्च न संशयः २०
तस्मात् सर्वप्रयत्नेन शब्दध्यानं समाश्रयेत्
वामपार्श्वे इडा तस्य चिञ्चिणीशब्दमुत्तमम् २१
प्राकृतं नाम चैतद्धि स्थूलश्च परिकीर्तितः
दक्षिणेन सुषुम्ना हि चिरव्यक्रिनी स्मृता २२
पौरुषन्नाम चेत्युक्त सूक्ष्मस्य परिकीर्तितम्
घण्टानादविरामान्तान्त्यमध्यपरं स्मृतम् २३
निरालंबो निराधारः तदेव परमं पदम्
चिञ्चिणीचारवक्यन्ते निरालंबो निराश्रयः २४
घण्डानादविरामान्ते शिवोऽहं या निराश्रयः
हृदिस्थं मन्त्रसङ्घातं कृत्वा मूर्तिन्यसेद्बुधः २५
ब्रह्मादिभिः कलैस्तत्वैः सर्वसिद्धिकरस्मृतः
स तु चिन्तयते नित्यं तत्रस्थं बिन्दुमीश्वरम् २६
चित्रस्थ ईश्वरो नादः स तु साक्षाच्छिवस्मृतः
हंसाख्यश्चैव बिन्दुश्च नादो नादान्त एव च २७
एवं ज्ञात्वा भवेन्मन्त्री शिवः साक्षादलेपकः
एतत्तत्परमं गुह्यमेतत्तत्परमं शिवम् २८
एतत्तत्परमं गुह्यमेतत्तत्परमं पदम्
एतत्तत्परमं ज्ञानमेतत्तत्परमाक्षरम् २९
नातः परतरो ध्येयो नातः परतरं शिवम्

विदिते संयगेवं हि मुच्यते नात्र संशयः ३०
साधकस्य विधिह्येषा सर्वकामार्थसिद्धिदा
एतेषां परतो देवः शब्दरूपविवर्जितः ३१
व्यापकस्सर्वतत्वानां मया पूर्वमुदाहृतम्
तं विदित्वा विमुच्यन्ते सिध्यन्ते नात्र संशयः ३२
इति निश्वासकारिकायां दीक्षोत्तरे द्वितीयः पटलः

देव्युवाच
भगवन् श्रोतुमिच्छामि शून्यभेदमनुत्तमम्
कथं विज्ञायते शम्भो रतिगुह्यतरं परम् १
ईश्वरः
विशून्यं सर्वतत्वेषु गीयते सुरसुन्दरि
तस्याहं संप्रवक्ष्यामि लक्षणन्तु सुरार्चिते २
व्यापकेन समायुक्तमयनं तत्प्रकीर्तितम्
दिवारात्र्योश्च मध्ये तु वेदितव्यं प्रयत्नतः ३
न रात्रिर्न दिवा चैव निन्दुकलकला तथा
पञ्चधा तु परित्यज्य प्रशान्तं शून्यमुच्यते ४
देहातीतं तृतीयन्तु निष्कलेति विभाव्यते
नासायान्तु यदातीतं तच्छून्यञ्च तृतीयकम् ५
घटिकान्तु परिच्छेदं यावत्तन्मुखमण्डलम्
अयनं शून्यमित्युक्तं कथितं ज्ञानमुत्तमम् ६
रसानां शून्यतस्थाप्य विज्ञानमुपजायते
अधस्तात्तु परित्यज्य पञ्चधा परमेश्वरि ७
प्रशान्तं शून्यमित्युक्तमूर्ध्वं किञ्चिन्न संस्पृशेत्
एतत्प्रशान्तशून्यन्तु ज्ञात्वा मुच्येत बन्धनात् ८
गमागममयोगेन तृतीयं परिकीर्तितम्

विदितं तद्वरारोहे देहमुक्तमिदं स्मृतम् ९
तदेवं कथितं देवि शून्यमुक्तं शिवागमे
ऊर्ध्वशून्यमधश्शून्यं मध्यश्शून्यं तृतीयकम् १०
निरामयं चतुर्थन्तु कथितं ह्यनुपूर्वशः
सा मया कथिता ह्येते चतुर्थन्तु निरामयम् ११
सा माया अपि देवेशि तत्वावस्थेन संस्थिता
तेन दोषाय वर्तन्ते शेषं महानुलक्षणम् १२
चतुर्थं यन्महच्छून्यं विज्ञप्तिः सा तु कीर्तिता
न तस्य कल्पना देवि पारंपर्येण संस्थितः १३
तं ज्ञात्वा कथ्यते ज्ञेयं ज्ञानी शेषेषु कथ्यते
क्रियातीतन्तु तत्तत्वं गीयते सर्वतश्शुभे १४
तस्यागमी तु संप्राप्तिः यस्य तुष्टा स एव च
एवं त्रिशून्यभेदन्तु कथितं तव सुवृते १५
चतुर्थं यन्महच्छून्यं विज्ञप्तिः सा तु कीर्तिता
न तस्य कल्पना देवि पारंपर्येण संस्थितः १६
तं ज्ञात्वा कथ्यते ज्ञेयं ज्ञानी शेषेषु कथ्यते
क्रियातीतन्तु तत्तत्वं गीयते सर्वतश्शुभे १७
तस्यागमी तु संप्राप्तिः यस्य तुष्टा स एव च
एवं त्रिशून्यभेदन्तु कथितं तव सुव्रते १८
चतुर्थं यन्महच्छून्यं सर्वं तच्च प्रबोधकम्
तेन ज्ञातेन संज्ञेयी दीक्षानुग्रहकृत् भवेत् १९
अन्यथा न गुरुर्ज्ञेयो न दीक्षा न च मुक्तिदा
पञ्च व्योमाः पुरा प्रोक्ताः ते त्वया विदिताः शुभे २०
नाज्ञातेन विमुच्यन्ति स्वे स्वे विविधगोचरे
ब्रह्माणमादितः कृत्वा यावद्देवः सदाशिवः २१
पञ्चव्योमाः समाख्याताः संहारेण वरानने

एकैकं पञ्चधा देवि वेदितव्यं प्रयत्नतः   २२
शून्यभेदं परं तेषां उक्तावस्था तु कीर्तिता
स्वभाववर्णतो देवि ज्ञेयं विज्ञायते यथा  २३
तथा ते कथयिष्यामि तन्मे निगदतः शृणु
अणवस्त्रथमाख्यातं हृत्कर्णं तालुमाश्रितम्  २४
निम्नवत्तद्वरारोहे वर्णो भवति नित्यशः
ब्रह्माविष्णुस्तथा रुद्र अभावः सूत्रवत्स्मृताः   २५
चतुर्थस्त्वीश्वरश्शान्तो वेदितव्यं प्रयत्नतः
तच्छब्दो नाद इत्युक्तः स जीवःकथितस्तव  २६
स्पर्शस्त्वस्मिंस्तु देवेशि सा शक्तिः परिकीर्तिता
तत्क्षयेन न किञ्चित्स्यात् गुरुवक्त्रं सदुच्यते  २७
संयोगमेवमेवं स्यात् व्याख्यातं तव शोभने
मन्त्रास्तथैव ज्ञातव्या देशिकेन महात्मना  २८
नादं बिन्दुं तथा देवं वाङ्मयं स चराचरम्
श्रूयते उच्यते चैव शिवशक्तिविचेष्टितम्  २९
एवं ज्ञात्वा च बुध्वा च मन्त्रास्तस्य वशो भवेत्
सिध्यते नात्र सन्देहः शिवशक्त्युपबृंहितः   ३०
अज्ञात्वा तु वरारोहे शिवशक्तिविचेष्टितम्
मन्त्रास्तस्य न सिध्यन्ति न च याति परं पदम्  ३१
इति निश्वासकारिकायां दीक्षोत्तरे तृतीयः पटलः

देव्युवाच
सृष्टिसंहारभेदेन देव देव त्वया पुरा
कथितं तत्र सद्भावं तन्मया विदितं प्रभो  १
पुनश्च श्रोतुमिच्छामि भगवन् वक्तुमर्हसि
के च कस्मिन् गृहादेव दीक्षिता देवदानवाः   २

ऋषिविद्याधरास्सिद्धा गन्धर्वाप्सरसः प्रभो
यक्षराक्षसभूताश्च पिशाचोरगकिन्नरा ३
गुह्यकाश्च महादेव क्रूराश्चैव विनायकाः
स्वान्तेन दीक्षितादेव यस्य सिद्धि ध्रुवं भवेत् ४
तदहं श्रोतुमिच्छामि भगवन् कथयस्व मे
कोटिभेदाः समाख्याताः शाखाभेदाश्च शङ्कर ५
शिवभेदञ्च देवेश सर्वमेतद्ब्रवीहि मे
ईश्वरः
शृणु देवि प्रवक्ष्यामि तन्त्रभेदमनुत्तमम् ६
मन्त्रमण्डलसंख्याञ्च शास्त्राणाञ्चैव सङ्ग्रहम्
दीक्षितानि मया यस्मिन् न शङ्काश्च यथा पुरा ७
सर्वेषामेव मन्त्राणां शैवानां मन्त्रमूर्तिना
प्रकाशितं पुरा देवि ममेदं परमेष्ठिना ८
सर्वजगतश्चेह सृष्टा च परमेश्वरः
संहर्ता च न सन्देहः मन्त्रमूर्तिः परश्शिवः ९
अवतारमहं वक्ष्ये नामसङ्ग्रहनिर्णयम्
दीक्षाविधिनियोगञ्च कृतं पूर्वं यथाश्रुतम् १०
मन्त्रयोगप्रभेदञ्च प्रवक्ष्याम्यनुपूर्वशः
तस्यादिर्भगवान् देवश्शिवो वै मन्त्रमूर्तिमान् ११
मन्त्रतन्त्रप्रणेता च मन्त्रतन्त्रप्रकाशकः
तेन प्रकाशितं पूर्वं शिवेनानन्दमूर्तिमान् १२
तदेव वचनं ज्ञानं मम वक्त्रे निवेशितम्
मयापि तत्वदेवेशि त्वया दत्तं पितामहे १३
ब्रह्मणापि सुराध्यक्षे विष्णवे प्रतिपादितम्
विष्णुनापि हुताशाय तेन दत्तन्तु वायवे १४
वायुनापि पुरादत्तं सूर्याय च न संशयः

सूर्येण चापि सोमाय कथितं पुनरेव तु १५
सोमेनैव तु देवेशि धर्माय प्रतिपादितम्
एवं तद्दशधा ज्ञानं शिवोक्तं तत्र सङ्ग्रहे १६
ख्यापितं तत्वमीशेन मन्त्रमूर्तिनिवेशितम्
स एव जगतश्चास्य मन्त्रमूर्तिर्महेश्वरः १७
तत्प्रसादादिदं सर्वं ज्ञानविज्ञानमुत्तमम्
प्राप्यते देवदेवेशि मोक्षञ्च भुवि दुर्लभम् १८
सार्वकामिकमित्येवं प्रोवाच भगवाञ्छिवः
लोकोद्भवेति रुद्रेण पुनरेव प्रकीर्तितम् १९
देव्यायणं यदा ज्ञानमजितेति प्रकीर्तितम्
कारणं भगवान् ब्रह्मा अजितेति जनार्दनः २०
दीप्ताभेति यथाग्निश्च वायुः सूक्ष्मेति वै पुनः
सहस्रांशेति धर्माय अंशुमानिति भास्करः २१
सुव्रताः चन्द्रमाः प्रोक्तो दश तन्त्रप्रकाशकः
शिवशक्तिमधिष्ठाय विभिन्नं वै पुनस्थितः २२
दशधा नामभेदेन लोकानां हितकाम्यया
एवमेति सुरास्सर्वे शिवज्ञानस्य पारगाः २३
अवतारं पुनश्चैव बहुधा परिकीर्तितम्
अस्यैव ज्ञानमुख्यस्य शिवज्ञानस्य सांपृतम् २४
भेदमष्टतरं प्रोक्तं तथाऽष्टादशधा पुनः
अष्टादशविधैर्भेदैः तत्र भेदैः पुनस्थितः २५
आजगाम सुवर्लोकभुवर्लोकक्रमागतः
तस्य भेदा भवन्त्येते संज्ञा च परिकीर्त्यते २६
ऋषिभिस्तत्र कल्पज्ञैः विदितं तत्र मुत्तमम्
विजयं प्रथमं तेषां निश्वासं तदनन्तरम् २७
स्वायंभुवमतश्चैव वातुलं तदनन्तरम्

वीरभद्रमिति ख्यातं रौरवं माकुटं तथा २८
विमलं चन्द्रभागञ्च ज्ञानञ्च मुखवालकम्
प्रोद्गीतं ललितञ्चैव सिद्धिसन्तानमेव च २९
शर्वोद्गीतञ्च विज्ञेयं किरणं पारमेश्वरम्
ईश्वरः प्रथमः प्रोक्तो देवी च तदनन्तरम् ३०
ब्रह्मा च षरामुखश्चैव वीरभद्रस्तथैव च
नन्दीश्वरो महाकाल ईशानं चन्द्रमास्तथा ३१
बृहस्पतिः समाख्यातो देवी बीका च वासवः
ललिता चैव चराडश्च शान्तपाणी तथैव च ३२
सनत्कुमारो विष्णुश्च पारमेश्वरमेव च
विजयमीश्वरज्ञानं देव्या निश्वाससंहिताम् ३३
ब्रह्मा स्वायंभुवश्चैव कुमारो ज्ञेयवातुले
वीरेण वीरभद्रस्तु नन्दीरौरवमेव च ३४
मकुटेति महाकालं विसन्नरमुशनसा
चन्द्रमाश्चन्द्रभासञ्च ज्ञानञ्चाङ्गिरसं तथा ३५
दधीची मुखभिन्नन्तु प्रोद्गीतं कवचमेव तु
ललितं ललिता देवि दराडहस्तं तथैव च ३६
सन्तानं नाशपाणिः स्यात् शर्वोद्गीतञ्च विष्णुना
किरणं ब्रह्मणा चैव परमेशे पारमेश्वरम् ३७
एते तन्त्राः पूर्वं शिवज्ञानस्य पारगाः
ते चाप्यन्ये महाभागाः क्रमाराद्याश्शचीपतिः ३८
मन्त्रसिद्धास्तथा चान्ये ऋषयश्च तपोधनाः
मन्त्रभेदप्रणेतारो मन्त्रकल्पकरास्तथा ३९
एभिरेव शिवज्ञानं स्थापितं वसुधातले
नामभेदप्रसंख्यातमाराध्य परमेश्वरम् ४०
मन्त्रकल्पे तथा ख्यातं भूतकल्पे तथैव च

गणगुह्यकभेदैश्च रुद्रभेदैश्च संज्ञितम् ४१
तस्य भेदाः स्मृताः पूर्वं दशधा परिकीर्तिताः
पुनश्चैव समाख्याता नष्टा दशविधास्तथा ४२
विजये भगवान् रुद्रः प्रोवाच ब्रह्मणे पुरा
तस्मिन् मन्त्राः समाख्याताः श्रूयतां वरवर्णिनी ४३
अष्टौ मन्त्रसहस्राणि तथा पञ्चशतानि च
एकपञ्चाशतञ्चैव तथा वै सप्तसप्ततिः ४४
देवैर्ज्ञातमिदं देवि किञ्चित्तस्मादिहागतम्
विजये तु समाख्यातं तस्मिन् ब्रह्मा तु दीक्षितः ४५
त्रीणि मन्त्रसहस्राणि नियुतं त्रीणि चापरे
अष्टौ चैव तु लक्षाणि दशभिर्मण्डलैस्स्थितम् ४६
निश्वासे तु समाख्यातं नन्दीशो यत्र दीक्षितः
शुक्रः कुबेरो वरुणो यमश्चैवाश्विनावपि ४७
गणाश्चैव महाभागा रुद्राश्चैव तु दीक्षिताः
निश्वासे तु परे तन्त्रे कथितं तव शोभने ४८
सहस्रमेकं विज्ञेयं नियता षष्टिसङ्ग्रहम्
शतमेकं तथा चान्यं मन्त्राणां परिसंख्यया ४९
एकादशविधैर्भेदैः तथा सप्तविधैः पुनः
सप्तविद्याधरं तन्त्रं तथा स्वायंभुवेति च ५०
नामद्वयं समाख्यातं दक्षाद्या यत्र दीक्षिताः
प्रजानां पतयश्चैव तथा ब्रह्मसुताश्च ये ५१
दीक्षिताश्च नियुक्ताश्च असुराश्चैव सन्ततम्
यक्षराक्षसगन्धर्वाः पिशाचोरगकिन्नराः ५२
गरुडाद्यो द्विजाश्चैव ये च लोकेषु संस्थिताः
सहस्रमेकं मन्त्राणां त्रिंशद्भिर्मण्डलैः स्थितम् ५३
पञ्चधा भेदभिन्नन्तु आग्नेयो यत्र दीक्षिताः

गातरोधे गृहाश्चैव ये च विघ्नादयो गणाः ५४
आग्नेयमिति तन्त्रेऽस्मिन् तेजस्संभवसे भवम्
एकादश सहस्राणि कोटित्रीणि च संग्रहे ५५
मण्डलानां शतञ्चैव अष्टधा वरणे स्थितम्
अष्टादश विधैर्भेदैः लोके मन्त्रगणान् बहून् ५६
बहुधा परिसंख्यातं पञ्चगर्भपुरस्सरम्
विसर्पितञ्च संबोधैः कूटमुद्भूतकारणैः ५७
अतिशयान्वितश्चैव गोप्यगुह्यकसंभवैः
अत्र ते ऋषयास्सिद्धाः बलखिल्यास्तपोधनाः ५८
अयने दक्षिणे देवा ये च वै उत्तरे स्थिताः
अनेन चैव सिद्धान्ते देवा वै मानवादयः ५९
तत्साध्यस्तन्त्रमेतत्तु वीरभद्रेऽत्र संज्ञितम्
कोटिरेकं सहस्रञ्च मन्त्रमण्डलविंशकम् ६०
द्विविधं नामसंज्ञाभिः रौरवेति च विश्रुतम्
पञ्चमन्त्रशता ज्ञेयाः चतुर्मूर्तिव्यवस्थिताः ६१
मकुटेति समाख्यातो निधनक्षेत्रवादिभिः
नलान्तर्मातृकल्पैश्च ऋषिभिः सेव्यते सदा ६२
शतमेकन्तु विज्ञेयं भिन्नश्चापि तथा विधाः
मण्डलाष्टकसंयुक्तं विसरन्नाम नामतः ६३
दशमन्त्रसहस्राणि दशभिर्मण्डलैर्युतः
दशभेदाः समाख्याताः चन्द्रभासमिति स्मृतम् ६४
शतार्धमेकमन्त्राणां एकवीरप्रतिष्ठितम्
एकमण्डलगूढन्तु नारसिह्मेति विश्रुतम् ६५
यत्रेते दीक्षिता दैत्याः नलिनो देवकण्टकाः
मया द्या नलिनश्चैव नलिनाद्याश्च यत्र वै ६६
रसक्षेत्रक्रियापादा विज्ञेया बहुभेदतः

मन्त्रैर्द्वादशभिर्युक्तं मराडलद्वयसंयुतम्  ६७
द्विधावस्थेन देवेशि मुखबिंबमिति स्मृतम्
द्विसहस्त्रे इति द्वे च मराडलाश्च त्रिसप्ततिः  ६८
सप्तशाखाप्रभेदश्च प्रोद्गीतन्नाम नामतः
योगिनां परमो यत्र मन्त्रभेदः प्रवर्तते  ६९
एकवीरधरैर्मन्त्रैः जपकर्मादिसिद्धये
त्रयस्त्रिंशत्समायुक्तं विद्याशक्तिविचेष्टितम्  ७०
महामहादिप्रमुखैः विद्याभिश्च सुसंस्कृतैः
महाव्रतविधानञ्च दीक्षाविधिसमुद्भवः  ७१
कपालोत्तरकल्पैश्च सिद्धिकल्पैश्च योजितः
नाडीसञ्चारसंयुक्तं ललितं पञ्चमं चलम्  ७२
आज्ञासिद्धिस्तु विज्ञेया मन्त्राणां शतयोजितम्
दशधा मराडलाख्यातं सिद्धमित्येव संज्ञितम्  ७३
त्रीणि मन्त्रसहस्राणि विंशतिश्चैव मराडलाः
कोटिद्वयन्तु मन्त्राणां शतानां परिकीर्तितम्  ७४
मन्त्रपञ्चसमायुक्तमेकमराडलपूजितम्
त्रिमराडलमथाज्ञेयं गूढदेवैस्तु कीर्तितम्  ७५
मन्त्राणान्तु सहस्त्रे द्वे शताः पञ्चशतानि च
मराडलानां शतञ्चैव शर्वोद्गीतमिति स्मृतम्  ७६
शृणु मन्त्रसहस्राणि मराडलाश्चापि विंशतिः
किरणे हि समाख्यातमादित्यो यत्र दीक्षितः  ७७
कोटिसप्तसमख्यातमादित्यो यत्र दीक्षितः
कोटिसप्तसमाख्यातं मन्त्राणां नियुतं तथा  ७८
मराडलानां सहस्त्रन्तु सङ्ग्रहः परिकीर्तितः
संख्याता मन्त्रभेदाश्च शाखाभेदाश्च तत्वतः  ७९
मराडलाश्चापि मन्त्राणां सर्वतन्त्रोत्तराणि च

शिवप्रोक्ता स्मृता ह्येते तन्त्रकल्पबहु स्मृताः ८०
अनित्यता च भूतानां दृष्ट्वा लोकानिमान् पुरा
+ तत्वं याति संज्ञाश्च विद्यातत्वं शिवात्मकम् ८१
देवासुरमनुष्याश्च मन्त्रसिद्धाश्च ये स्मृताः
गन्धर्वयक्षरक्षाश्च पिशाचा ऋषयस्तथा ८२
सर्वे ते मन्त्रसिद्धास्तु तेषामायुस्तु मन्त्रजाः
मन्त्रजापेन सिद्धास्तु सर्वे ते साधकाः स्मृताः ८३
तत्वं विज्ञाय मुक्तिस्तु सत्यमेतन्महेश्वरि
इदं सारमिदं सारं यस्सर्वं ज्ञातुमिच्छति ८४
अपि वर्षसहस्रान्ते शास्त्रान्तेनाधिगच्छति
विज्ञायाक्षरतन्मात्रं गुरुमाराध्य यत्नतः ८५
प्रार्थयेत महादेव गुरुं तत्वविशारदम्
तत्प्रसादाद्भवेन्मुक्तिः संसारभवबन्धनात् ८६

इति निश्वासकारिकायां दीक्षोत्तरे तन्त्रावतारः
चतुर्थः पटलः

देवी

भगवन् श्रोतुमिच्छामि किञ्चित्कौतूहलान्विता
तत्वमाचक्ष्व देवेश यदि स्याद्वरदो मम १
बिन्दुनादं तथा शक्तिनाडीत्रयमिदं शुभम्
यत्र तत्वञ्च देवेश उत्क्रान्तिसिद्धिसाधनम् २
एकादशविधञ्चैव नवात्मे सर्वमाश्रितम्
तेन सर्वमिदं कार्यं तेन सर्वमिदं ततम् ३
दृश्यते च कथं बिन्दुः कतिरक्षरयोजितः
कस्मिन् कस्मिन् प्रदेशे तु द्रष्टव्यं बिन्दुमीश्वर्शम् ४
करण इव कथं तस्य येन दृश्येत तत्वतः

नादञ्चैव तथा शक्तिः हृल्लक्षस्य च दर्शनम्  ५
सर्वमेतद्यथा न्यायं कथयस्व प्रसादतः
ईश्वरः
शृणु देवि परं गुह्यं रहस्यमिदमुत्तमम्  ६
तदहं संप्रवक्ष्यामि साधकानां हितावहम्
नवात्मकेन सर्वेशि यथा भवति तच्छृणु  ७
वर्णाष्टकं धृवं देवि बिन्दुव्यापक उच्यते
नादं तस्य शिखा प्रोक्ता शक्तिस्तु परमं स्थिता  ८
एकादश पदार्थन्तु कारणं परमस्ति च
गुरुवक्त्राच्च लभ्येत यथा तेनैव चोदितः  ९
अकार उकार भेदेन मकारेण तथैव च
यथा कर्माणि कुरुते कथयामि तवाखिलम्  १०
सर्वज्ञानपरं सूक्ष्मं सर्वज्ञानं सुदुर्लभम्
अनादिपरमं ज्ञानं अनादि परमव्ययम्  ११
बिन्दुनादं तथा शक्तिं सूक्ष्मं परमव्ययम्
यथा प्राप्स्यसि तन्नादं बिन्दुश्च भुवि दुर्लभम्  १२
न मया कस्यचित्ख्यातं तत्ते वक्ष्यामि सुव्रते
भ्रुवोर्मध्ये समाख्यातं देवदेवं महेश्वर  १३
शुद्धस्फटिकसङ्काशं सर्वतत्वप्रकाशकम्
वर्जितं दर्शतत्वैश्च दर्शतत्वप्रकाशकम्  १४
दृश्यते च तदा तेजो ज्वलन्तं स्वेन तेजसा
दीपौ तस्य समाख्यातौ उभौ तौ शशिभास्करौ  १५
अवस्था स्थिता चेताख्यातयन्तौ सन्ततः
इठा दृश्यति वामेन सुषुम्ना दक्षिणेन तु  १६
ताभ्यां मध्ये परे स्थानं यत्र बिन्दुर्व्यवस्थितः
घटमध्ये यथा दीपः तद्धटं वै प्रकाशते  १७

उपदेशविहीनस्तु परं तत्वं न दृश्यते
यथाऽदर्शो मलैर्ग्रस्तः प्रतिबिंबं न दृश्यते १८
तद्वद्योगविहीनस्य प्रत्यक्षं न च दृश्यते
उभयोरपि पाणिभ्यां धारसंस्थाप्य बुद्धिमान् १९
उपदेशसमायोगात् दृश्यते बिन्दुरीश्वरः
नासा श्रोत्रं तथा चक्षुः उभयोरपि च्छादयेत् २०
षड् द्वाराणि च संस्थाप्य पश्यते बिन्दुमीश्वरम्
छादनात् त्यज्यते बिन्दुः शुद्धस्फटिकनिर्मलः २१
विधुं निर्मलं बिन्दुं स बिन्दुं तेजसान्वितम्
शब्दनादविनिर्मुक्तं ध्यातव्यं परमं शिवम् २२
बिन्दुलीनमनः कृत्वा ध्यायेद्बिन्दुसुयन्त्रितः
यथा सर्वगतो वायुं पीठस्थो न च दृश्यते २३
एवं सर्वगतो बिन्दुः योगहीनो न दृश्यते
अरणिस्थो यथा वह्निः विद्यमानो न दृश्यते २४
योगहीनस्तथा बिन्दुः न तु दृश्यति सुन्दरि
संयोगेन तथा बिन्दुः प्रत्यक्षो दृश्यते तदा २५
सर्पिः क्षीरे यथाऽव्यक्तं विद्यमानं न दृश्यते
तद्वत् सर्वगतो बिन्दुः योगहीनो न दृश्यते २६
यथा सर्पि च अग्निश्च प्रयोगेण तु सुन्दरि
प्राप्यते च तथा बिन्दुः योगिनाञ्च महात्मनाम् २७
तोयकान्ते मणिर्यद्वत् प्रक्षिप्तोऽपि महाह्रदे
प्रकाशयति तत्तोयं आत्मकीडेन तेजसा २८
उद्धृतेन मणिर्यद्वत् जलमग्नौ प्रकाशके
तद्वद्योगविहीनस्य बिन्दुश्चैव न दृश्यते २९
ध्यानात्सा जायते बिन्दुः संयोगाद्दृश्यते पुनः
ध्यानं योगं समाख्याय पश्यते बिन्दुमीश्वरम् ३०

योगिनां प्रत्ययो बिन्दुः प्रत्ययात्प्राप्यते परम्
परत्वादपरं नास्ति नित्ययुक्तं सदा भवेत् ३१
कारणेन तु संप्राप्तिः प्रयोगाच्चैव सुन्दरि
कथितं स हरस्यन्तु ज्ञातव्यं योगिभिस्सदा ३२
दृष्ट्वा बिन्दुर्ज्वलन्तं तु नेत्र मध्ये व्यवस्थितः
विज्ञेया च सदा देवि शिखा तस्यैव मध्यतः ३३
दृश्यते तत्परं सूक्ष्मं बिन्दुकोटिसमप्रभम्
तल्लयस्सततं योगी लक्षयेत्सुसमाहितः ३४
शृणुष्वावहिता देवि नादञ्च बिन्दुदुर्लभम्
नव तत्वानि देवेशि यान्युक्तानि नवात्मके ३५
तेषां मध्ये यकाराद्याः सप्तबीजाः समाहिताः
आदिहुङ्कारसंयुक्तः सप्तैते भुविदुर्लभाः ३६
फट्कारेण समायुक्ताः सद्योद्भ्रमण विश्रुताः
सद्यस्सङ्क्रामणन्त्येते एकमेव नियोजिताः ३७
षष्ठञ्च यत्परं बीजं वर्गान्ते च व्यवस्थितः
हाकाररूपसंयोगात् चिन्त्यमानस्तु सोत्क्रमात् ३८
एवमन्ये समाख्याताः पञ्चबीजं समासतः
अकारादिमकारान्ता मकारोकारयोजिताः ३९
सद्योत्क्रामकरा ह्येते कथितास्तव शोभने
एतास्सप्तसमाख्याताः क्षुरिकाः प्राणहारिकाः ४०
लक्षञ्जपेन्न सन्देहः सत्यं देवि वदाम्यहम्
सप्तानान्तु समाख्यातमष्ट ओङ्कार उच्यते ४१
हुंफट्कारसमायुक्ताः सद्य उत्क्रामयेत्प्रभुः
ओङ्कारं सर्वदेवत्यं सर्वव्यापी परश्शिवः ४२
त्र्यक्षरञ्च त्रिदेवत्यं त्रिमात्राद्यधिकं तथा
तत्र चोत्पद्यते शंभुः शब्दातीतस्तु निष्कलः ४३

परस्सूक्ष्मतरो देवः सर्वपाशविमोचकः
नानामार्गस्थितो व्यापी सर्वलोकस्य दुर्लभः ४४
त्रीणि स्थानानि देहेऽस्मिन् यत्र नादो व्यवस्थितः
हृदये चैव कर्णे च भ्रुवोर्मध्ये तथैव च ४५
यत्र सूत्राकृतिः सूक्ष्मं शुद्धस्फटिकसप्रभम्
तुर्यद्वारमिति प्रोक्तं देवयानमिति स्मृतम् ४६
मार्गत्रयमिति प्रोक्तं नाडीत्रयमिति स्मृतम्
देवतानां त्रयञ्चैव शक्तित्रयमिति स्मृतम् ४७
फलत्रयमिति ख्यातं देहेऽस्मिन् परमेश्वरि
सर्वगः सर्वतो व्यापी सर्वमापूर्यतिष्ठति ४८
अकारं हृदि मध्ये तु जागर्तीत्यवस्थितः
पद्मस्य कर्णिकामध्ये ब्रह्मा तत्र व्यवस्थितः ४९
उकारं कर्णमाश्रित्य ब्रह्मस्थानं तदुच्यते
तालुजिह्वमिति ख्यातं द्वितीयं स्थानमुच्यते ५०
अकारन्नेत्रमाध्ये तु सुषुप्तपदमुच्यते
लवं कस्य तु तत्स्थानं कथितं तव शोभने ५१
अर्धमात्रपदे तस्य तुर्यब्रह्मपदे स्थितः
मूर्ध्नि स्थानं परं सूक्ष्मं मोक्षमार्गप्रदायकम् ५२
तुर्यातीतं परं देवि सुसूक्ष्मपदमव्ययम्
तं ज्ञात्वा मुच्यते जन्तुः भवेत्संसारबन्धनात् ५३
तुर्यातीतमिति प्रोक्तं यत्र गत्वा न शोचति
एवं व्याप्तमिदं सर्वं वाङ्मयं स चराचरम् ५४
एतेषां नादमध्ये तु शिवं तत्र व्यवस्थितः
हृदयं देहमध्ये तु तत्र पद्मं व्यवस्थितम् ५५
कर्णिकापद्ममध्ये तु अकारं तस्य मध्यतः
तस्य मध्ये विनिष्क्रान्तं नादं परमदुर्लभम् ५६

उकारञ्च मकारञ्च भित्वा नादो विनिर्गतः
तुर्यद्वारविनिष्क्रान्तं द्वयन्तस्य विचिन्तयेत्  ५७
अकारे तु समुत्थाय ब्रह्मद्वारसमुद्गतम्
एस शब्दस्समाख्यातो मोक्षमार्गप्रदायकम्  ५८
एतद्ध्यानवरं दिव्यं सेवितव्यं प्रयत्नतः
ध्यानेन तु किमन्येन तपसोग्रेण वा पुनः  ५९
किं तीर्थगमनैर्वापि ध्यानैर्वापि सुपुष्कलैः
विदन्ते नादसद्भावे बिन्दुदेवे च शोभने  ६०
यद्येकं विदितं नादं सूक्ष्ममेकंम् परापरम्
अथापि दीपदेहस्तु आकाशे तु यथा शिवा  ६१
लीना सर्वगता तद्वद्व दृश्यति चांबरम्
एवं सूक्ष्मातिसूक्ष्मस्य नादतत्वस्य निर्णयः  ६२
एष नादः समुद्दिष्टः सर्वतन्त्रेषु चोत्तमः
सूर्यरश्मिसहस्राभा मध्ये नाडी प्रकीर्तिता  ६३
सहिता सर्वतत्वैश्च शक्तिना सह संयुता
सा नाडी सर्वशब्दानां तत्वानाञ्चैव शोभने  ६४
सङ्गृह्य समुदायेन शिवतत्वे तु लीयते
सूक्ष्मा च सर्वगा चैव ज्ञात्वा ज्ञानी विमुच्यते  ६५
हित्वा सूर्यञ्च सोमञ्च सर्वगः स शिवो भवेत्
++++++++++++++++ तु लीयते  ६६
++++++++++ सा तु नादं तस्यां तु लीयते
सूर्यमण्डलमध्ये तु अकारस्तु व्यवस्थितः  ६७
तत्र चोत्पद्यते शब्दो विश्रमेच्छशिमण्डले
स्वयं विष्णुस्समुत् ++++++++  ६८
+++++++  परं स्थानं वह्निमण्डलमुत्तमम्
मकारेति च विख्यातो भित्वा नादो लयं स्थितः  ६९

पिङ्गलामार्गमापन्ना तुर्यद्वारेति विश्रुता
अर्धमात्रा तु +++++++++++ ७०
ध्यायेत्तु परमं नादं तुर्यद्वारेण योगवित्
लयं तस्य तु देवेशे यत्रासौ परमश्शिवः ७१
तदेव निष्कलं तत्वं चिन्त्यते मोक्षवादिभिः
++++++++++ न्ते शिवतत्वविदो जनाः ७२
देव्युवाच
मण्डलानाञ्च देवानां तत्वानाञ्च महेश्वर
हृल्लक्षाः परमो ज्ञेयो योगिनाञ्च तथैव हि ७३
तस्मिन् प्रवर्तते सिद्धिः योगञ्च भु +++
++++++++++ मर्हसि ७४
ईश्वरः
सबीजनिर्बीजविभागेन नवमात्मा परिकीर्तितः
ह्रासह्रासविभागेन नानासिद्धिफलप्रदा ७५
षडक्षरपरञ्चैव पञ्चाक्षरपरं शुभम्
चतुरक्षरं विजानीयात् ++++++++ ७६
++++++++++ देवेश अङ्गानि कथितानि तु
संपूर्णः शिव इत्युक्तः स एव परमेश्वरि ७७
एकैकह्रसिता ये तु बिन्दुरुकारयोजिता
हृदयादिसमुद्दिष्टा ज्ञातव्यास्तु वरानने ७८
+++++ एते सर्वे उद्य उत्क्रमणास्मृताः
हृल्लक्षदर्शनं देवि अचिरादेव जायते ७९
इडमन्यत्परं देवि कथिताम्यनु +++
++++++++++ श्च तथैव च ८०
यकार उकारसंयुक्तं वर्णत्रयविवर्जितम्
ध्यायमानो वरारोहे बीजदीपेन बोधितः ८१

सप्तरात्रेण पश्येत हृल्लक्षं परमेश्वरि
विष्णुलिङ्गानि सङ्का +++++++++ ८२
+++++ ते योगी पीतनीलान्यनेकशः
कृष्णशुक्लांस्तथा चान्यान् पश्यते रक्तवर्णकान् ८३
निजैर्दीपितहृल्लक्षं संहरेत्सप्तमेऽहनि
ज्वलते हृदि पद्मे तु निजदीपसुबो ++++ ८४
+++++++++ स पश्यति
ज्वलते दीप्तवद्देवि हृदयं निजदीपितम् ८५
हृल्लक्षमेवं विख्यातं ज्ञातव्यं योगिभिस्सदा
नाभेरूर्ध्वं वितन्तुकम् ८६
+++++++++++++++
कर्णिकापद्ममध्ये तु बिन्दुस्तस्यैव मध्यतः
ज्वलते भगवान् बिन्दुः दीपस्योर्ध्वशिखोपमः ८७
हृदयं षडक्षरं प्राप्तं बीजं परमदुर्लभम्
++++++++++++ त्तो यथा कविः ८८
एवमन्येऽपि ये प्रोक्ता वेदितव्या हितैषिभिः
कथितं ते महाज्ञानं सर्वज्ञानेषु चोत्तमम् ८९
इदं तत्परमं ++++++
सुवर्णेन सहैकत्वं गच्छते नात्र संशयः ९०
ज्ञानसिद्धिस्तथा देवि पशुर्याति परं पदम्
शिवेन च संहैकत्वं गच्छते +++ ९१
++++ दशाहाद्वा पश्यते नात्र संशयः
दशाहान्नपटं लङ्घेत् पश्यते नात्र संशयः ९२
एतल्लक्षपरं दिव्यं सेवितव्यं प्रयत्नतः
हिताय स +++++ तव शोभने ९३
नवशक्तिसमायुक्तं धर्मज्ञानसमन्वितम्

ग्रासनं कल्प्य देवेशि तत्र न्यासन्तु कारयेत् ९४
पूजयेत्सकलं देवि पञ्चब्रह्म समन्वितम्
एकनाबरणेनैव पूजनीयो महेश्वरः ९५
सर्वसिद्धिकरो देवः पूज्यमानो दिने दिने
एवं पूज्य यथा न्यायं जपेध्यायेत्प्रयोगवित् ९६
दश लक्षेण देवेशि मनसा यद्यदीप्सितम्
तत्तत्प्राप्नोत्ययत्नेन साधको नात्र संशयः ९७

इति निश्वासकारिकायां दीक्षोत्तरे बिन्दुनादयोगप्रकरणे पञ्चमः पटलः

देव्युवाच
भगवन् श्रोतुमिच्छामि यजनञ्चानुपूर्वशः
येन विज्ञातमात्रेण सिध्यते नात्र संशयः १
ईश्वरः
प्रकृतिञ्चादितः कृत्वा शिवतत्वमपश्चिमम्
ग्राद्यमध्ये तु ये तत्वाः कथयामि यथाक्रमम् २
ग्रादिवक्त्रं लिखेत्पद्मं केसरालं स कर्णिकम्
तस्मिन् सर्वमशेषन्तु विधिं कुर्याद्वरानने ३
देवतमण्डलांश्चैव त्रितत्वेन समन्वितः
प्रकृतिर्विन्यसेन्मध्ये मूर्तिना सह संयुतम् ४
सकलीकृततत्वैस्तु शिवस्यावाहनं कुरु
ग्रनन्तं हृदयं तस्य व्योमरूपं शिरस्मृतम् ५
व्यापिनी तु शिखा प्रोक्ता ग्रनायकं कवचं स्मृतम्
ग्रनासिताभवेदस्तं शिवाङ्गाः परिकीर्तिताः ६
मकारं हृदयं प्रोक्तमुकारन्तु शिरस्मृतम्
ईकारन्तु शिवा देवि ग्राकारं कवचं विदुः ७

अंकारमस्त्रमित्युक्तं कथितं ह्यनुपूर्वशः
ब्रह्माणमस्त्रदैवत्यं कवचं विष्णुदैवतम् ८
+++ हृदयं रुद्रं शिरं ईशानदैवतम्
शिवा तु देवदेवेशि त्वमेव परिकीर्तिता ९
नवात्मानं शिवं विद्यात् सर्वतः परिकीर्तिताः
पुरुषं पूर्वतो न्यस्य आग्नेय्यां नियतिं न्यसेत् १०
कालं दक्षिणपत्रे तु मायां वै नैर्ऋते दिशि
विद्या पश्चिमतः प्रोक्ता ईश्वरं वायुगोचरे ११
सदाशिवं परं तत्वं उत्तरेण तु विन्यसेत्
शिवतत्वं परं शुद्धमीशान्यं परिकल्पयेत् १२
एष ते यजनं देवि प्रकृतेः परिकीर्तितः
स्वतत्वं मध्यतः कृत्वा यष्टव्यानि दिने दिने १३
एवं तत्वान्यजेद्देवि प्रकृत्यादिशिवात्मिकाम्
शिवाङ्गा ये जनाः प्रोक्ताः कर्णिकायां व्यवस्थिताः १४
केयूराः पुष्कलान्तैस्तु कार्या नित्यं सदा बुधैः
एष एव विधिर्देविः प्रकृत्यादि शिवान्तिकाः १५
विधिमेवं सकृत् ज्ञात्वा न भूयो जन्मभाक् भवेत्
उत्तिष्ठन्तर्धाने च पादचारे तथैव च १६
खड्गे च पादुके चैव अञ्जने रेचने तथा
गुडिकाकाशगमने दन्तकाष्ठे पवित्रके १७
विद्वेषाकर्षणे चैव शान्तिके पौष्टिके तथा
पूर्वसूत्रेण तु ये प्रोक्ताः तत्सर्वं लभते नरः १८
एकैकं जपतो मन्त्री जपेन्नानेन मन्त्रतः
पुनश्च शृणु देवेशि यजनं कथयामि ते १९
चिरावरणसंयुक्त ++++++
सकलीकृत्य देवेशि निष्कलेन शिवं स्मरेत् २०

चोदिताः पूर्वसूत्रे तु शिवाङ्गाः कथयामि ते
सकलं हृदयं देवि सकलाढ्यं शिरस्मृतम् २१
खमलन्तु शिखाप्रोक्ता क्षपणं कवचं तथा
क्षयान्तमस्त्रमित्युक्तं शिवाङ्गाः परिकीर्तिताः २२
शून्येनैव तु देवेशि तेन तत्वं विचिन्तयेत्
विद्याङ्गास्ते तु विज्ञेयाः पूर्वसूत्रे तु ये स्मृताः २३
हृदयं मध्यतो न्यस्य शिरः पूर्वदले न्यसेत्
दक्षिणेन शिखां दद्यात् कवचं पश्चिमेन तु २४
उत्तरेणास्त्रमित्युक्तं विन्यसेत्तु यथाक्रमम्
विद्याङ्गा हृदयं देवि आग्नेय्यां परिकल्पयेत् २५
ईशान्यान्तु शिरो दद्यात् एवमादिक्रमेण तु
द्वितीयावरणे मन्त्रतत्वानि परिकल्पयेत् २६
पूर्वमादिक्रमेणैव विन्यसेत्तु यथाक्रमम्
एष ते कथ्यते देवि तत्वानां यजनं प्रति २७
प्रकृत्यादिविभागेन यजेत्तमनुपूर्वशः
एवं यष्ट्वा तु तत्वानि जपेच्चैव नवात्मकम् २८
लक्षैकैकं जपेन्मन्त्रं सर्वसिद्धिमवाप्नुयात्
मनसा चिन्तितं सर्वं संपादयति मन्त्रिणः २९
सूत्रेणैव तु यत्प्रोक्तं तत्सिद्धिफलमाप्नुयात्
द्विरावरणमेतद्धि यजनं समुदाहृतम् ३०
पुनश्च यजनं वक्ष्ये तत्वानां वरवर्णिनी
त्रिभिरावरणैस्तत्वान्यष्ट्वा सिद्धिमवाप्नुयात् ३१
पञ्च ब्रह्मसमायुक्तं शिवाङ्गैश्च समन्वितम्
गर्भावरणमेतद्धि कर्तव्यं सुरसुन्दरि ३२
द्वितीयं तत्वभिः कार्यं विद्याङ्गैश्च तृतीयकम्
एवं तत्वगणान् देवि यष्ट्वा सिद्धिमवाप्नुयात् ३३

चतुरावरणेनैव यष्टव्या तु तवध्यति
यं यष्ट्वा सिध्यते मन्त्रं मुच्यते नात्र संशयः ३४
तत्वानि सिद्धितान्येव कर्मणा मनसा गिरा
नानेन सदृशं यागं त्रिषु लोकेषु विद्यते ३५
साधकानां हितार्थन्तु कथितन्तु तवाखिलम्
पञ्चब्रह्म शिवाङ्गैश्च गर्भमेतत्तु कल्पयेत् ३६
सकलादिशिवाङ्गा ये द्वितीयावरणे न्यसेत्
पूर्वसूत्रे तु यत्प्रोक्ता अङ्गाश्चैव नवात्मके ३७
तृतीयावरणे ते तु यष्टव्या सुसमाहितैः
नवात्मपञ्चभिर्भेदैः यन्मया परिकीर्तितम् ३८
चतुरावरणे ते तु यष्टव्याः साधकोत्तमैः
एवं यष्ट्वा ततो मन्त्री जपयोगं समारभेत् ३९
एष ते कथितो देवि चतुरावरणेन तु
बुध्वा स्मृत्वा च मुच्यन्ते साधकाञ्जन्मबन्धनात् ४०
पुनरेव प्रवक्ष्यामि शृणु देवि समाहिता
यन्न कस्यचिदाख्यातं कथयामि तवाखिलम् ४१
आवाहरोधसन्निध्यविसर्जनविसर्जितम्
न्यासमात्रेण मुच्यन्ते साधकाञ्जन्मबन्धनात् ४२
पूर्वोक्तन्तु विधिं कृत्वा साधकः परमेश्वरि
परमाक्षरं न्यसेत्तत्र कर्णिकायान्तु मन्त्रिणा ४३
सकलादिक्रमेणैव पूर्वादारभ्य विन्यसेत्
परमाक्षरस्य योगोयमेवं ते समुदाहृतम् ४४
सकलं पूर्वदिग्भागे कर्णिकायान्तु विन्यसेत्
पूर्वपत्रे पुनर्देवि विन्यसेत्परमाक्षरम् ४५
आग्नेय्यां निष्कलं तत्र शून्यतत्वन्तु दक्षिणे
कलाढ्यं नैर्ऋते चैव खमलं पश्चिमे तथा ४६

क्षपणं वायुदेशे तु क्षयान्तञ्चोत्तरे तथा
ईशान्यां विन्यसेन्मन्त्री कण्ठोष्ठं परमेश्वरि ४७
सकलं पद्मपीठन्तु कथितं ह्यनुपूर्वशः
आग्नेय्यां निष्कलं तत्र कर्णिकायान्तु विन्यसेत् ४८
पूर्वपत्रे तु सकलमाग्नेय्यां परमाक्षरम्
दक्षिणे शून्यतत्वन्तु कलाढ्यं नैर्ऋतेन तु ४९
पश्चिमे खमलं प्रोक्तं क्षपणं वायुगोचरे
क्षयान्तमुत्तरेणैव कण्ठोष्ठं नैशगोचरे ५०
निष्कलं पद्मपीठन्तु आग्नेय्यां परिकल्पयेत्
दक्षिणे कर्णिकायान्तु शून्यतत्वन्तु विन्यसेत् ५१
समलं पूर्वपत्रे तु आग्नेय्यां निष्कलं न्यसेत्
परमाक्षरं न्यसेद्देवि दक्षिणे समुदाहृतम् ५२
कण्ठोष्ठ्यं नैर्ऋते चैव खमलं पश्चिमे न्यसेत्
क्षपणं वायुदेशे तु विन्यसेत्समुदाहृतम् ५३
शून्यस्य पद्मपीठन्तु कथितं ह्यनुपूर्वशः
नैर्ऋते कर्णिकायान्तु कलाढ्यं विन्यसेच्छुभे ५४
पूर्वपत्रे तु सकलमाग्नेय्यां निष्कलं न्यसेत्
शून्यं दक्षिणतो न्यस्य नैर्ऋत्यां परमाक्षरम् ५५
पश्चिमे खमलं प्रोक्तं आग्नेय्यां क्षपणं स्मृतम्
क्षयान्तमुत्तरेणैव कण्ठोष्ठमीशगोचरे ५६
चतुर्थन्ते समाख्यातं पञ्चमं शृणु सांप्रतम्
पश्चिमे कर्णिकायान्तु खमलः परिकीर्तितः ५७
पूर्वपत्रे तु सकलमाग्नेय्यां निष्कलस्मृतः
दक्षिणे शून्यतत्वन्तु कलाढ्यं नैर्ऋतेन तु ५८
परमाक्षरन्तु देवेशि पश्चिमेव तु विन्यसेत्
वायव्यां क्षपणं चैव क्षयान्तञ्चोत्तरेण तु ५९

कराठोष्ठमीशदेशे तु पञ्चमं कथितं तव
वायव्यां कर्णिकायान्तु क्षपणः परिकीर्तितः ६०
सकलं पूर्वपत्रे तु आग्नेय्यां निष्कलं न्यसेत्
शून्यञ्च दक्षिणे चैव कलाढ्यं नैर्ऋतेन तु ६१
खमलं पश्चिमेनैव वायव्यां परमाक्षरम्
उत्तरे तु क्षयान्तञ्च कराठोष्ठ्यमीशगोचरे ६२
षष्ठ एष समाख्यातः पीठस्ते परिकीर्तितः
उत्तरे कर्णिकापीठे क्षयान्तं तत्वविन्यसेत् ६३
पूर्वतः सकलं देवि आग्नेय्यां निष्कलं परम्
दक्षिणे शून्यमित्युक्तं कलाढ्यं नैर्ऋतेन तु ६४
पश्चिमे खमलञ्चैव वायव्यां क्षपणं स्मृतम्
परमाक्षरन्तु देवेशि उत्तरेण तु विन्यसेत् ६५
कराठोष्ठ्यं परमं तत्वमीशान्यां परिकल्पयेत्
सप्तमं ते समाख्यातं तत्वं सुखरार्चिते ६६
ईशान्यां कर्णिकापीठे कराठोष्ठ्यं परिकल्पयेत्
पूर्वपत्रे तु सकलमाग्नेय्यां निष्कलं परम् ६७
शून्यं तु दक्षिणे पत्रे कलाढ्यं नैर्ऋतेन तु
खमलं पश्चिमे चैव क्षपणं वायुगोचरे ६८
क्षयान्तमुत्तरे चैव ईशान्यां परमाक्षरम्
अष्टमं ते समाख्यातं पीठं परमदुर्लभम् ६९
नवभागं स्मृतो यागः सर्वभागेषु चोत्तमः
न मया कस्यचित्ख्यात याग एव सुदुर्लभः ७०
यष्टेनानेन यागेन कृतार्थच्छिन्नसंशयः
व्रजते शिवसायुज्यं निर्मलो विगतज्वरः ७१
शोध्यं दश दशाहुत्या विंशपञ्चाधिकेन तु
पञ्चांशेन शतेनैव दीक्षां कुर्वीत देशिकः ७२

त्रिशक्तिदीपनं कृत्वा शान्तिके पौष्टितर्पणे
कर्तव्यं देशिकेन्द्रेण होमकर्म यथाक्रमम् ७३
विस्तरे विस्तरं कुर्याद्वित्तशाठ्यन्न कारयेत्
स्वचित्तस्यानुसारेण यजनन्तु समारभेत् ७४
सर्वसंहितसामान्यं सर्वतन्त्रेषु चोत्तमम्
एकाशीति विभागन्तु कथितं तव शोभने ७५
करणैस्सह संयुक्ता पृथिव्यादिरनुक्रमात्
एकेनावरणेनैव यजेन्नित्यं समाहितः ७६
कालयासस्स विज्ञेयः सह तत्वेन सुव्रते
एवं ++++ यागाः कथिता ह्यनुपूर्वशः ७७
एवं योजयते देवि साधकस्तु समाहितः
पृथिवी तेन सकला सराष्ट्रा नाप संयुता ७८
यजितं तेन सुश्रोणि भवते नात्र संशयः
स ज्ञानी भूतले नित्यं साधकः स शिवं नयेत् ७९
येन दीक्षितमात्रास्तु पशवः शिवसंमुखाः
प्रयान्ति नात्र सन्देहो ज्ञानविच्छिन्नबन्धनात् ८०
सदाशिवशिवश्चैव नादशक्तिस्तथैव च
चत्वारो हि महायागाः अकथ्येया वरानने ८१
तदहं संप्रवक्ष्यामि तदेकाग्रमना शृणु
स्थण्डिले मण्डले वाऽपि वायुराकाशमेव च ८२
अग्निरप्सु च देवेशि यागहोमं समारभेत्
मनसा चक्षुषा चैव वचसा च न संशयः ८३
धारणा कर्मयोगेन मोचयेन्नात्र संशयः
एभ्यः प्रवर्तते सर्वं अस्मिन् सर्वमिदं स्मृतम् ८४
एभ्यः सिद्धिश्च मुक्तिश्च भिक्षिता जायते शुभे
पूर्वोक्तन्तु विधिं कुर्यात् कर्णिकायां महेश्वरि ८५

मूर्तिं विन्यस्य तत्रैव सकलीकरणं ततः
पञ्चब्रह्मकलैश्चैव शिवाङ्गैश्च समन्वितः  ८६
आवाहरोधसंयुक्तं ध्यानयोगसमन्वितम्
पञ्चभिः ब्रह्मभिश्चैव विधिं कुर्यादशेषतः  ८७
चतुरावरणैर्युक्तं यजेत सुसमाहितः
ईशानं मध्यतो दद्यात् पूर्वं तत्पुरुषं न्यसेत्  ८८
अघोरं दक्षिणे चैव वामदेवं तथोत्तरे
सद्योजातन्तु देवेशि पश्चिमेन तु विन्यसेत्  ८९
आग्नेय्यां हृदयं न्यस्य शिर ईशानगोचरे
नैर्ऋत्यान्तु शिखां देवि वायव्यां कवचं न्यसेत्  ९०
गर्भावरणमेतद्धि कथितं तव सुन्दरि
द्वितीयावरणं देवि कथ्यमानं मया शृणु  ९१
घोषं पूर्वेण विन्यस्य रावमग्निं दिशि न्यसेत्
स्वनं दक्षिणतो न्यस्य शब्दं नैर्ऋतके न्यसेत्  ९२
स्फोटं पश्चिमतो दद्यात् ध्वनिशब्दन्तु वायवे
उत्तरेणैव झङ्कारं ध्वङ्कृतंत्वीशगोचरे  ९३
नवमं यन्महच्छब्दं मध्ये कर्णिकया न्यसेत्
उकारादि स्मृता ये तु घोषादीनाञ्च वाचकाः  ९४
तृतीयावरणे देवि कथ्यमानं मया शृणु
सकलं पूर्ववक्त्रे तु आग्नेय्यां निष्कलं न्यसेत्  ९५
शून्यं दक्षिणतो दद्यात् कलाढ्यं नैर्ऋते न्यसेत्
खमलं पश्चिमेनैव क्षपणं वायुगोचरे  ९६
क्षयान्तमुत्तरे चैव कण्ठोष्ठन्तु ईशगोचरे
परमाक्षरन्तु देवेशि मध्यदेशे तु विन्यसेत्  ९७
तृतीयावरणं देवि कथितं तव शोभने
चतुरावरणं देवि प्रकृत्यन्तं तु विन्यसेत्  ९८

पूर्वमादिक्रमेणैव विन्यसेत यथाक्रमम्
एष यागपरं देवि कथितं ह्यनुपूर्वशः ९९
सर्वस्वं गोपितं ह्येतत् साधकानां हितावहम्
सिद्धिदं मुक्तिदञ्चैव नानेन सदृशं भवेत् १००
निन्दाश्चतुष्कलश्चैव शृणु देवि वदाम्यहम्
शान्त्यतीतन्तु हृदयं आग्नेय्यां परिकल्पयेत् १०१
सकलाद्याः पुनः पश्चान्नवतत्वा यथाक्रमम्
एष सादाशिवो योगः कथितस्तव शोभने १०२
नादस्यैव प्रवक्ष्यामि कथ्यमानं निबोध मे
इडिका दीपिका चैव रेचिका मोचिका तथा १०३
ऊर्ध्वगामिनि संयुक्तं गर्भमावरणं स्थितम्
ऊर्ध्वगामिनि देवेशि न्यसेदाग्नेयगोचरे १०४
मोचिकेशानदिग्भागे रेचिका नैर्ऋते दले
दीपिकान्तु महाभागे वायव्यां परिकल्पयेत् १०५
हौङ्कारं हृदयं तस्य हुङ्कारन्तु शिरस्मृतम्
हुङ्कारन्तु शिखाप्रोक्ता हैंकारं कवचं भवेत् १०६
हःकारमास्त्रमित्युक्तं चतुर्दिक्षु च विन्यसेत्
गर्भावरणमेतद्धि कथितं सुरसुन्दरि १०७
शेषं पूर्ववद्देवेशि आचरेच्च यथाक्रमम्
अस्य गुह्यतरं वक्ष्ये शक्तियागमनुत्तमम् १०८
अस्मात्समाप्यते योगमस्मात्सर्वं प्रवर्तते
नानेन कथितामर्त्या दीक्षानुग्रहकारकाः १०९
न शक्तिरहितासिद्धि न च याति परं पदम्
तस्माच्छ्रेष्ठोपरिष्ठश्च नाख्येन परिदीक्षणे ११०
न रजोमण्डलश्चैव न लुप्ते तु परिग्रहम्
अधिवासनञ्चैव त्रि सर्वशेषविवर्जितम् १११

सानुमेतत्समाख्यातं साधकानां हितावहम्
सर्वसंहितसामान्यं यन्महत्सर्वतोमुखम्  ११२
आवाहरोधसन्निध्य विसर्जनविवर्जितम्
न्यासमात्रेण मुच्यन्ते साधकाजन्मबन्धनात्  ११३
चतुष्वक्त्रं लिखेत्पद्मं केसरोज्वलसकर्णिकम्
आसनं कल्पयेन्मन्त्री तत्र न्यासन्तु कारयेत्  ११४
पञ्चब्रह्मशिवाङ्गैश्च शिवेन सह संयुतम्
पूजयित्वा विधानेन देवदेवं महेश्वरम्  ११५
ईशानं मध्यतो दद्यात् पूर्वे तत्पुरुषं न्यसेत्
अघोरं दक्षिणे चैव वामदेवं तथोत्तरे  ११६
सद्योजातन्तु देवेशि पश्चिमेन तु विन्यसेत्
आग्नेय्यां हृदयञ्चैव ईशान्यान्तु शिरो न्यसेत्  ११७
नैर्ऋृत्यां तु शिखां देवि वायव्यां कवचं न्यसेत्
अस्त्रं दिशासु विन्यस्य मकाराद्यास्तु ये स्मृताः  ११८
परमाक्षरं न्यसेन्मध्ये कर्णिकायां महेश्वरि
दक्षिणे कर्णिकापीठे विन्यसेच्च नवात्मकं  ११९
विद्याङ्गा हृदयं तस्य विन्यसेत्सुरसुन्दरि
शिरः शिखा च कवचमस्त्रञ्चैव यथाक्रमम्  १२०
प्रकृतिः दक्षिणे पत्रे पुरुषं नैर्ऋृतेन तु
पश्चिमे नियतिं दद्याद् वायव्यां कलविन्यसेत्  १२१
मायातत्वोत्तरेणैव ईशान्यां विद्य एव तु
ईश्वरं पूर्वतत्वं आग्नेय्यां तु सदाशिवम्  १२२
पश्चिमे कर्णिकामध्ये शान्त्यतीतन्तु विन्यसेत्
आग्नेय्यां हृदयञ्चैव ईशान्यान्तु शिरोन्यसेत्  १२३
नैर्ऋृत्यान्तु शिखां देवि कवचं वायुगोचरे
उत्तरे कर्णिकायान्तु प्रणवः परिकल्पयेत्  १२४

शान्त्यतीतन्तु हृदयं शान्तिश्च शिर उच्यते
विद्याशिखा समाख्याता प्रतिष्ठां कवचं विदुः  १२५
निवृत्तिरस्त्रमित्युक्तं शिखाङ्गाः परिकीर्तिताः
घोषन्तु पूर्वदिग्भागे आग्नेय्यां खमेव च  १२६
दक्षिणे तु स्वनः प्रोक्तः शब्दं नैर्ऋतगोचरे
पश्चिमेन स्मृतः स्फोटो ध्वनिं वायव्यतो न्यसेत्  १२७
झङ्कारमुत्तरेणैव ध्वंकृतं शैवगोचरे
पूर्वतः कर्णिकामध्ये रुद्रोङ्कारन्तु विन्यसेत्  १२८
आग्नेयां हृदयञ्चैव ईशान्यान्तु शिरो न्यसेत्
नैर्ऋत्यान्तु शिखा प्रोक्ता वायव्यां कवचं तथा  १२९
अस्त्रे हस्तप्रदेशे तु ह्रस्वं वै संप्रयोदयेत्
शान्तिं पूर्वदिशाभागे विद्यां दक्षिणतो न्यसेत्  १३०
प्रतिष्ठामुत्तरेणैव निवृत्तिः पश्चिमेन तु
शान्त्यतीतं परं तत्वमस्त्रं देवस्य कीर्तितम्  १३१
सूक्ष्मवायुदिशा भागे सुसूक्ष्मा नैर्ऋतेन तु
अमृताचाग्निदिग्भागे कथिता तत्वशोभने  १३२
अमृता मृता तु ईशान्यां कथिता तु वरानने
एष यागवरो देवि नामृतः कस्यचिन्मया  १३३
मम प्रियेति भक्तेति तेन ते कथितो मया
एवं यष्ट्वा तु विधिना दीक्षां कुर्याद्विचक्षणः  १३४
शतेन पञ्चविंशेन पञ्चाशेन दशेन तु
पञ्च स्वशिखां हुत्वा दीक्षानिर्वाणगामिनी  १३५

इति निश्वासकारिकायां दीक्षोत्तरे यागाधिकारः
षष्ठः पटलः

देव्युवाच
भगवन् श्रोतुमिच्छामि दीक्षाविधिमनुत्तमम्
प्रक्रियाशून्यमन्त्राणां शासनं ग्रहणं तथा १
तद्वरञ्च महादेव कस्मिन् कार्यं महेश्वर
छेदनं कुत्र वा तेषां शुद्धतत्वस्य शङ्कर २
सकलं निष्कलञ्चैव तथा सकलनिष्कलम्
त्रितत्वं परतत्वञ्च तदेव कथयस्व मे ३
मन्त्राध्ययनकर्माणि अमृतीकरणं तथा
यानि श्रेयस्तमानि स्युः कथयस्व प्रसादतः ४
अन्यद्गुह्यतिमन्देव यन्नोक्तं न प्रचोदितम्
तदस्मिन् सर्वमस्माकं कथयस्व प्रसादतः ५
ईश्वरः
शृणु देवि परं गुह्यं कथयामि तवाखिलम्
गुह्याद्गुह्यतरं देवि नाख्यातं कस्यचिन्मया ६
प्रक्रियासूत्रमन्त्राणां यथावदनुपूर्वशः
अनन्तमादितः कृत्वा शिवतत्वमपश्चिमम् ७
कथयामि समासेन संख्याध्वानस्य यावती
अधस्तात्परमेशानो ह्यनन्तः परमेश्वरः ८
तं हुत्वा देवदेवेशि कालाग्नं समुपक्रमेत्
याम्ये श्रोता तव प्रोक्ता तस्य ते भुवना स्मृताः ९
अनुक्रमेण तान् सर्वान् सहसैवाधिकारिभिः
तस्योपरि समाख्याता नरका घोररूपिणः १०
शतमेकन्तु देवेशि चत्वारिंशत्तथैव च
अनुक्रमेण तान् सर्वान् शोधयेत्परमेश्वरि ११
उपरिष्टात्तु देवेशि पातालास्सप्त एव तु
शोधनीयास्तु देवेशि क्रमेण वरवर्णिनी १२

भुवना भुवनाधीना भुवनान्तर्निवासिनः
कथितास्तु समासेन एकविंशदनुक्रमात् १३
उपरिष्टात्तु भूर्लोकं आदितः कथयाम्यहम्
त्रिगुणेन स्थिता देवि पातालेन समासतः १४
अष्टधा देवयोन्यस्तु पञ्चधा तिर्यगादयः
एकधा चैव मानुष्यां ज्ञेयं संसारमण्डलम् १५
ब्रह्मादिमुद्धरेद्देवि यावद्ब्रह्मादिमागतम्
एवं संसारचक्रन्तु कथितं तव शोभने १६
गर्भाधानादिमारभ्य तथा देवव्रतानि तु
हविर्यज्ञाः पाकयज्ञाः सोमसंख्यास्तथैव तु १७
संस्काराश्च समाख्याताश्चत्वारिंशत्क्रमेण तु
अष्टाधिकाश्च ज्ञातव्यं देशिकेन तु १८
एतान् हुत्वा ततो मन्त्री सहस्रकृतनो न्यसेत्
पदं प्राप्य परित्यज्य अन्त्येष्टस्तदनन्तरम् १९
अन्त्येष्टिञ्च ततो हुत्वा ऊर्ध्वं कृत्वा नियोजयेत्
भोगस्थानेषु संयोज्य तस्माद्भोगाद्वियोजयेत् २०
वियोजयित्वा तद्भोगान् पुर्यष्टकसमन्वितान्
भूर्लोके तु ततो योज्य भुवर्लोकं ततो नयेत् २१
एवमादिक्रमेणैव ब्रह्मणि स्वासने तथा
रुद्रासने ततो योज्य सद्धि दण्डक्रमेण तु २२
ध्यात्वा पाशुपतं देवि अस्त्रं परमदुर्जयम्
तेन चाहुतयस्सप्त दद्याच्छुध्यर्थकारणात् २३
शतरुद्रे तु संयोज्य शतस्थाने यथाक्रमम्
एवन्तु पृथिवी शुद्धा शतरुद्रस्तु योजिता २४
अनन्तमादितः कृत्वा पातालं हेमसंज्ञितम्
शतमेकोनषष्टिञ्च कथितं तव शोभने २५

भुवनान् भुवनाधीशान् भुवनान्तर्निवासिनः
प्रीणयित्वा कृतान् प्राज्ञः तत्वे तत्वे यथाक्रमम् २६
ओं भुवनाय नमः । ओं भुवनाधिपतये नमः ।
ओं भुवनान्तर्निवासिभ्यः ।
भुवव्यूहहोमन्तु कर्तव्यं देशिकेन तु
भुवनान्तर्निवासीनां शिखेनैवाहुतिं हुनेत् २७
एवं स शोधनार्थस्तु देशिकेन महात्मना
पार्थिवावरणं देवि अनन्तादिरनुक्रमात् २८
कथयामि समासेन भुवनानां वरानने
शतद्वयं समाख्यातं तथा चैकोन सप्ततिः २९
कूश्माराडेन सहैकत्वं कथितन्तु समासतः
पञ्चाष्टकं पुनश्शोध्यं पञ्चधावरणैः क्रमात् ३०
येन येनाष्टकञ्चैव योगाष्टकमतः परम्
क्रोधाष्टकन्तु ज्ञातव्यं देशिकेन महात्मना ३१
तानेव शोधयेद्देवि तेजोष्टकमतः परम्
तेजोष्टके तु संशुद्धे शिवद्वादशकं पुनः ३१
महादेवाष्टकञ्चैव वीरभद्रं तथैव च
मराडलाधिपतिञ्चैव कथितं तव शोभने ३२
एतान् शोध्यविधानेन प्रधानमुपरि हुनेत्
गुणत्रयं बुधितत्वं शोधनीयं यथाक्रमम् ३३
बुध्या च तत्वपर्यन्तं प्रधानस्य तदन्तरे
क्रोधतेजोष्टकं शोध्यं योगिभिः स शिवैस्सह ३४
वीरभद्रेण संयुक्तं मराडलाधिपतेन तु
गुरुपङ्क्तित्रयम् देवि गुरोरन्तरितास्तथा ३५
साम्यावस्था गुणानान्तु तत्प्रधानं प्रवक्ष्यते
एतत्प्रधानमित्युक्तं बहुविस्तरतः स्थितम् ३६

कथितन्तु समासेन वेदितव्यं वरानने
तयो रूपाः समाख्याताः तत्वानान्तु पुरा मया ३७
तेन रूपेण तान् रुद्रान् ज्ञात्वा शोध्येन सुवृते
अनन्तमादितः कृत्वा प्रधानान्तस्तथावधि ३८
शतानि चतुरः प्रोक्ताः चतुश्चत्वारिंशत्पुनः
अतः परतरञ्चैव पुरुषं कथयामि ते ३९
येन विज्ञातमात्रेण मुच्यन्ते नात्र संशयः
अंभाद्याः शोधने तत्र पौरुषे तु यथाक्रमम् ४०
मणिमातरमंभानां कथयामि समासतः
धर्मो दशविधः प्रोक्तः तव देवि न संशयः ४१
विकारषोडशः प्रोक्ताः बुद्धिरष्टविधा स्मृताः
अहंकारस्तु त्रिविधो गुणत्रयमुदाहृतम् ४२
प्राणः पञ्चविधश्चैव विद्धि विद्याष्टकं तथा
विग्रहाष्टकसंयुक्ता शोधनीयाः प्रयत्नतः ४३
कामक्रोधश्च लोभश्च जन्ममृत्युजरास्तथा
व्याधिश्च शाश्वतो लोके क्षुत्तृष्णाशोकमेव च ४४
विवादश्च भयश्चैव मदमोहस्सुदारुणः
रागश्शोकश्च मोहश्च मदमात्सर्यमेव च ४५
धर्माधर्मश्च तृष्णा च अस्वतन्त्रा सदातनुः
एते बन्धात्मका पाशाः गणपाशीमतोऽन्यथा ४६
तत्वपाशाश्च विविधा तत्वे तत्वे व्यवस्थिताः
देशपाशास्तु ये तस्य शिवेन परिकीर्तिताः ४७
वौषट्कारन्तु युक्तेन शोधनीयास्तु देशिकैः
शतपञ्चाशतेनैव पञ्चविंशेन वा पुनः ४८
दश पञ्च दशेनापि त्रयः पञ्च द्वयेन वा
एकाहुत्या तु देवेशि शोधनीयाः शिवाध्वरे ४९

एष ते होमभेदस्तु कथितो वरवर्णिनी
ध्यात्वा भक्तिमयं शिष्यं दीक्षां कुर्यात्तु देशिकः ५०
भुवनानान्तु या संख्या शिवेन कथिता पुरा
शतमेकन्तु विख्याता नियत्यां भुवनाधिपाः ५१
सर्वे पद्मासनासीनाः विद्याविद्येश्वरैर्वृताः
शुक्लकृष्णविभागस्थां ध्यात्वा शोध्येत मोक्षकः ५२
शुद्धबुद्धप्रबुद्धश्च दशैते भुवनाधिपाः
कालतत्वे तु विख्याता कोटयन्तेकपरिग्रहाः ५३
रागतत्वे दश प्रोक्ताः भुवनेशा महाबलाः
सुहृष्टः सुप्रहृष्टश्च सुरूपो रूपवर्धनिः ५४
एवमादिक्रमेणैव वेदनीयो मुमुक्षुभिः
अतः परतरेणैव विद्येशानाः प्रकीर्तिताः ५५
कल्याणः पिठलो हंसाः एवमादि प्रकीर्तिताः
विद्यातत्वे तु ज्ञातव्याः देशिकेन महात्मना ५६
कालतत्वे तु विज्ञेया ये रुद्रा भुवनाधिपाः
विधिना शोधनीयास्तु देशिकेन महात्मना ५७
वामज्येष्ठः तथा भीमः एवमादिप्रकीर्तिताः
गोपतेश्च तदोर्ध्वन्तु ग्रथिद्वारे व्यवस्थिताः ५८
असंख्या रुद्रकोटिभिः गोपतिः परिवारितः
अतः परतरेणैव त्रिकालः क्षेमीश एव च ५९
एवमादिक्रमेणैव पञ्चरुद्राः प्रकीर्तिताः
योगक्षेमप्रदातारा दीक्षाध्वानविशोधिताः ६०
अत ऊर्ध्वमनन्तेश पाशाश्चैव तु संस्थिताः
मंदमोहसमायुक्तं एवमादिमहाशये ६१
पुना ऋषिकुले प्रोक्तं ततो वागीश्वरी पुनः
छङ्कारसाध्यमोङ्कार दातारदवनेशिकम् ६२

ध्यानाहारञ्च भस्मेशं परिवार्य विचक्षणः
प्रमाणाष्टकमेवापि मायावरणसंस्थितः ६३
रुद्राङ्कुशन्तु प्रथमं व्यूहमन्त्रे प्रतिष्ठितम्
एवमादीनि हुत्वा तु मुनेत्मनां विधानवित् ६४
नियमादितः कृत्वा मायातत्वमपश्चितम्
एभ्यो मध्ये तु ये रुद्राः कथयाम्यनुपूर्वशः ६५
नियत्यां दश रुद्रास्तु कालतत्वे दश स्थिताः
रगेऽपि च दश प्रोक्ताः विद्यायां न पुनर्दश ६६
कालतत्वे दश प्रोक्ताः ग्रन्थैरेकः प्रकीर्तितः
उपरिष्टात्पुनः पञ्च मायातत्वा तु संस्थिताः ६७
अत ऊर्ध्वमनन्तेशपाशाश्चैव तु संस्थिताः
मदमोहादिसंयुक्ताः पाशहस्ता महाबलाः ६८
एवमादिक्रमेणैव यावन्मायान्तसंस्थिताः
संख्या वै भुवनानान्तु सप्ततिः सप्तचाधिकाः ६९
आत्मतत्वमिदं प्रोक्तमशुद्धं परिकीर्तितम्
अनन्तमादितः कृत्वा मायातत्वमपश्चिमम् ७०
येभ्यो मध्ये तु ये रुद्रास्तान् प्रवक्ष्यामि संख्यया
एकसंशीकृतास्सर्वे कथयामि तवाखिलम् ७१
शतास्तु षट् समुद्दिष्टा चत्वारिंशत्तथैव च
भुवना सप्तचाधिक्यं कथितं तव शोभने ७२
एवं ध्यात्वा विधानन्तु शोधयेदविशङ्कितः
आत्मतत्वमिदं ख्यातं मायान्तं सुरसुन्दरि ७३
वेदितव्यं प्रयत्नेन विद्याया शृणु सांप्रतम्
अनन्तेशादितः कृत्वा होतव्यमनुपूर्वशः ७४
भुवने संस्थितास्सर्वे बोधनीया विचक्षणैः
ईश्वरे शोधनीयास्तु मायाञ्जनविवर्जिताः ७५

अतो रूपचतुष्टयं होतव्यमनुपूर्वशः
वामाज्ज्येष्ठादयस्तस्मात् शक्तयः परिकीर्तिताः ७६
अतो ज्ञानक्रियाशक्तिः ज्ञातव्याः पुनरेव हि
तां विदित्वा महादेवि देशिकः पाशहा भवेत् ७७
तेजीशश्च ध्रवीशश्च प्रमाणे परमं पदम्
द्वौ रुद्रौ तु समाख्यातौ योगमोक्षफलप्रदौ ७८
ततः प्राणः स्मृतो देवि ब्रह्मदत्तं ततः पुनः
चत्वारस्तु स्मृता रुद्राः योगमोक्षफलप्रदाः ७९
एकाहः पिङ्गलो हंसो रुद्रत्रयमुदाहृतम्
अतोपरि ध्रुवं देवि रुद्रैकादशकं पुनः ८०
ब्रह्मदत्तादिसंयुक्ता जंभिकान्ताः प्रकीर्तिताः
तेषां तु परतो देवि ध्रुवश्चैव तृतीयकः ८१
सप्तकोटिपरीवारा स्थिता भुवननायकाः
अतो निरञ्जनं प्रोक्तं तस्य संख्या न विद्यते ८२
निरञ्जनमतिक्रम्य इच्छाशक्तिर्व्यवस्थिता
अतश्चैवोपरिष्टात्तु अष्टौ ते भुवनेश्वराः ८३
प्रतिराद्या स्मृता देवि प्रद्युतान्ताः प्रकीर्तिताः
शोधनीया वरारोहे योगक्षेमप्रदायकाः ८४
संस्थिता सूक्ष्मरूपेण प्रतिच्छाया विधायिनी
अतः परं निरालंबं सर्वध्यानविवर्जितम् ८५
स्वशक्तिकिरणायानं सर्वं व्याप्य व्यवस्थितम्
नापरं न परञ्चैव परापरविवर्जितम् ८६
सर्वज्ञानपरातीतं निस्संदिग्धमवस्थितम्
पारंपर्येण संस्थञ्च निर्मलं परमं पदम् ८७
न तस्य शक्यते वक्तुं विज्ञेयो निष्कलश्शिवः
तेन सर्वमिदं व्याप्तं कल्पनातीतलक्षणम् ८८

न च वस्त्वन्तरं किञ्चित् न्यस्तत्वाद्ध्वनिरुच्यते
ओतप्रोतमनाद्यन्तं सर्वतत्वावभासकम् ८९
एतद्ज्ञानं परातीतं ज्ञानसद्भावमिष्यते
एतत्ते कथितं देवि भुवनानां समासतः ९०
संक्षेपेण मया प्रोक्तं भुवनाध्वा तु शोभने
विद्यातत्वे तु देवेशि भुवनेशाः प्रकीर्तिताः ९१
ईश्वरेऽपि तथैवाह तथा चैव सदाशिवे
तान् प्रवक्ष्याहं देवि गुणतत्वेन सुव्रते ९२
अतीतभुवनाः प्रोक्ताः विद्यातत्वे समासतः
विदित्वा शोधने देवि देशिकः तत्वपारगः ९३
शिवतत्वे तु ये प्रोक्ताः शिवेन परमात्मना
एकसंख्यैकतः कृत्वा प्रवक्ष्यामि वरानने ९४
शतं वै सप्त देवेशि भुवनानां प्रकीर्तिताः
विंशद्वयञ्च ज्ञातव्यं देशिकेन महात्मना ९५
अमनस्का इति सहस्रेण भुवनाध्वानि शुद्ध्यति
पूर्णाहुत्या शतेनापि विदुद्ध्यते नात्र संशयः ९६
निष्कलेन दशेनैव शून्ये पञ्चाहुतिस्तथा
प्रशान्तेन त्रयः प्रोक्ताः सर्वाध्यानमशेषतः ९७
षट् त्रिंशत्तत्वैरध्वानं सकलेन तु होमयेत्
प्रणवेन समाख्यातं शान्त्यतीतेन वा पुनः ९८
परमाक्षरेण होतव्यं परात्मनो महेश्वरि
कालाध्वनं वरारोहे भुवनाध्वेन होमयेत् ९९
तथाध्वनेषु तज्ञेता होमयेच्च शतं शतम्
कलाध्वाने तथैवेह कथितं तव शोभने १००
एवं संक्षेपतः प्रोक्तं तत्वाध्वानं विशेषतः
वेदितव्यं प्रयत्नेन देशिकेन महात्मना १०१

समयी पुत्रको वाऽथ साधकाचार्य एव च
उपपन्नाय दान्ताय गुरुदेवरताय च १०२
तेषामनुग्रहं कार्यमाचार्येण महात्मना
पूजयित्वा विधानेन देवदेवं महेश्वरम् १०३
अग्नौ हुत्वा यथा न्यायं हस्ते यागं यजेद्बुधः
सव्यहस्ते तु यष्टव्यं वामहस्तेन संव्रते १०४
पूजयित्वा विधानेन अध्वाधः क्रमशो न्यसेत्
गन्धैः पुष्पैः यथा न्यायं पूजयित्वा विधानवित् १०५
ध्यात्वा देवं महेशानं शिष्यमाहूयमन्त्रवित्
आत्मन्येवं वशीकृत्यं शिष्यस्य परमेश्वरि १०६
आलभ्य शिवहस्तेन तस्य देहं समन्ततः
तत्वानि देहतोऽन्यस्य स्थानन्तु शिरसि न्यसेत् १०७
ज्वालामालाकलाकारं ध्यात्वा देवं महेश्वरि
ध्यात्वा देवं महेशानं भूमिमध्ये तु तत्ववित् १०८
पुण्यपापं दहेत्तस्य ध्यात्वा देहं न संशयः
एवं कृते ततो देवि शिवहस्तेति स स्मृतः १०९
शिवहस्तप्रदानेन समयी स विधीयते
अनेन विधिना देवि कुर्यात्तस्याप्यनुग्रहम् ११०
सायुज्यमीश्वरे तत्वे भवते नात्र संशयः
भूतप्रेतपिशाचेभ्यो राक्षसेभ्यस्समाधिपे १११
पन्नकेभ्यस्तु सुश्रोणि अवध्यस्त्रिदशैरपि
अध्वानं कुरुते सोहि न तु न व्यापयेत्परम् ११२
समयी सर्वतन्त्रेषु भवते नात्र संशयः
पुत्रको येन देवेशि कथ्यते शिवयोगिभिः ११३
तदहं संप्रवक्ष्यामि कथ्यमानं निबोध मे
गणयागादितः कृत्वा दृष्ट्वा रवेर्मण्डलानि तु ११४

हुत्वा तु विधिवद्देवि तत्वपाशैर्वियोजितः
योजितस्तु परे तत्वे पुत्रकस्स विधीयते ११५
स एव मन्त्रकल्पज्ञो मन्त्रतन्त्रविधानवित्
मन्त्रकल्पसुवेत्ता च देशकालविधानवित् ११६
जपयोगविधानज्ञः तत्वज्ञश्च विधानवित्
तापने दीपने चैव छेदने च तथैव च ११७
मोहनस्तंभने चैव संपुटज्ञस्तथैव च
परमन्त्रविभेदज्ञो मन्त्राप्यायनतत्परः ११८
देशजातिविभेदज्ञः योजनाय च तत्परः
पातने दैत्यभूतेभ्यः सिंहविद्याधरेष्वपि ११९
सर्वज्ञश्च कृतज्ञश्च शौचाचारसमन्वितः
समर्थश्च परित्यागी जपासक्तस्सदा मतः १२०
चतुष्पात् संज्ञिताभिज्ञः कलाभिज्ञस्तथैव च
उत्साहवान् सदा दक्षः साधकस्स विधीयते १२१
कलशाष्टदशेनैव नवपञ्चदशेन वा
अभिषेकप्रदातव्यं देशिकेन महात्मना १२२
संपुटीकृत्य विद्याख्यं कलशं सुरसुन्दरी
अभिषिञ्चेत्ततः शिष्यं विधिदृष्टेन कर्मणा १२३
पृथिव्यादि समारभ्य मायातत्वमपश्चिमम्
संपुटीकृत्य पश्चात्तु विद्याख्येनाभिषेचयेत् १२४
एवञ्चैवाभिषिक्तस्तु साधकस्स विधीयते
पृथिवीमादितः कृत्वा निर्वाणान्तेन शोभने १२५
अभिषिक्तस्तु देवेशे आचार्यस्स विधीयते
मण्डलस्येशभागे तु कुर्याद्वै चतुरङ्गकम् १२६
चतुर्हस्तसुविस्तारं हस्तमात्रसमुच्छ्रितम्
तोरणैस्सपताकैश्च दिशासु विदिशासु च १२७

पीठमेवं विधं कृत्वा आचार्यस्सुसमाहितः
अकालमूलकलशैश्चन्दनेनोपलेपितैः १२८
चूतपल्लवसंयुक्तैः दूर्वाङ्कुरसमन्वितैः
सर्वौषधिसमायुक्तैः एकैकं कलशं कुरु १२९
पञ्च ब्रह्मशिवाङ्गैश्च शिवेन सह संयुतम्
एकैककलशे देवि विन्यसेत यथाक्रमम् १३०
समुद्रास्सप्त सप्तैव एकैककलशे न्यसेत्
पृथिव्यादीनि कलशे विन्यसेत यथाक्रमम् १३१
कौतुकैर्मङ्गलैश्चैव स्त्रीसङ्गीतकसंयुतैः
वेदशब्दजयाकारैः पूर्वादारभ्य शोभने १३२
अभिषिञ्चेच्च मतिमान् पृथिव्यादिसमायुतम्
निर्वाणकलशं यावद् एष एव विधिस्स्मृतः १३३
अभिषिक्तं तदा शिष्यं आनयेच्छिवसन्निधौ
अर्घ्यादिभिस्समभ्यर्च्य अधिकारं समर्पयेत् १३४
संहितां स्रुक्स्रुवञ्चैव करणीं कर्तरीं तथा
कर्तव्योऽनुग्रहं नित्यं चतुराश्रमसंयुतम् १३५
व्याख्याचानुग्रहश्चैव गुरुशिष्यप्रबोधनम्
स्वल्पमह्नि जपं कार्यं स्वल्पमह्नौ तु होमयेत् १३६
स्वल्पं वै ध्यानमुत्तिष्ठेत् सत्रमेतत्सदा गुरौ
एतेऽधिकारा ये प्रोक्ताः शिवज्ञाने विकल्पिताः १३७
एवन्तु श्रावयेद्देवि आचार्यस्तत्वपारगाः
एवं कुर्वामहे तात यत्त्वया कथितं मम १३८
सुविकल्पेन मे कार्या शिवाज्ञा यत्त्वयोदिता
एवं त्वं पूजयित्वा तु आचार्यः सुमहामतिः १३९
प्रणिपत्य यथा न्यायं ततो देवं विसर्जयेत्
विसर्जिते ततो देवि गुरुपूजामुपक्रमेत् १४०

मराडलं हस्तमात्रन्तु लिखित्वा तु समाहितः
तत्रस्थं स्थाप्य पूज्येत यथाविधिपुरस्सरम् १४१
मन्त्रैकादशकेनैव पूजयेत यथाक्रमम्
यथा भगवतः पूजां कुर्यादाचार्यकस्य तु १४२
वित्तशाठ्यन्न कुर्वीत श्राचार्यं प्रति साधकः
शिववत्पूजयेद्देवि श्राचार्यं तन्त्र पारगम् १४३
तेन पूजितमात्रेण शिवो भवति देशिकः
तत्प्रसादाद्भवेत्सिद्धिः मुक्तिश्चैव शिवोदिता १४४
तस्मात्पूज्येत देवेशि श्राचार्यं तत्र पारगम्
कर्णिकाकटकैर्वस्त्रैः मेखलैर्मकुटैस्तथा १४५
ग्रामदेशप्रदानैश्च विषयाखेटकैस्तथा
हस्त्यश्वरथयानैश्च रुक्मभेदैश्च संयुतम् १४६
वस्त्रखराडसमायुक्तां धेनुं दद्यात्सुशोभनाम्
येन येन सुतुष्टेन न तत्तत् दद्यात्तु पुत्रकः १४७
प्रदक्षिणं ततः कृत्वा श्रात्मानन्तु निवेदयेत्
निवेदिते ततो देवि श्रनृणो जायते गुरोः १४८
संपूज्य विधिना देवि गुरुञ्च सुसमाहितः
भोजयेद्गुरुभक्तांश्च दीनानाथांश्च तर्पयेत् १४९
शुक्ला तु दक्षिणा दद्यात् भोजयित्वा विधानतः
वक्तव्यन्तु ततो देवि प्रीयतां भगवाञ्छिवः १५०
एवं यः कुरुते देवि स सिद्धिफलभाक् भवेत्
श्रन्यथा कुरुते यस्तु श्राचार्यं प्रति साधकः १५१
दीक्षाज्ञानं गुरुत्वञ्च हित्वा नरकगामिकः
श्राचार्यं शिववन्मन्ता विद्याञ्चैश्वरसाधकम् १५२
पुत्रकं भ्रातृवच्चैव समं चैव तथैव च
मान्याः पूज्याश्च देवेशि श्रन्योन्यप्रीतितां व्रजेत् १५३

एवं विधिविधानज्ञो लभते शाश्वतं पदम्
तत्वेनापि विधिज्ञेन दीक्षितः शिवतां व्रजेत् १५४
स्वच्छन्दः सर्वगो भूत्वा विचरेत्तु यथा सुखम्
न तस्य हन्यते सिद्धिः यावद्देवः सदाशिवः १५५
साधकस्य विधिः ख्यातः सर्वकामार्थसाधकः
आचार्यस्य तु देवेशे समयी पुत्रकस्य च १५६
सर्वेषान्तु समाख्यातं यथाविधिपुरस्सरम्
सर्वथा सर्वमानोऽपि तत्वविन्मोचयेत्पशुम् १५७
तत्ववित् स शिवः साक्षात् तस्मात्तं प्रति पूजयेत्
मानुषीं तनुमासाद्य शिवे ज्ञातं प्रयच्छति १५८
तस्मात्तत्वविदाचार्यः शिववत्पूजयेत्सदा
माया तस्य न कर्तव्या कृत्वा मायां व्रजत्ययम् १५९
इति निश्वासकारिकायां दीक्षोत्तरे सप्तमः पटलः

ईश्वरः
अतः परं प्रवक्ष्यामि मन्त्राणां परमेश्वरि
प्रत्येकं संस्मृता मन्त्राः मया प्रोक्तास्तु सुव्रते १
साधारणविशेषाणि शिवेन कथितानि वै
पञ्चब्रह्मशिवाङ्गैश्च विद्याङ्गानि तथैव च २
गायत्री चैव सावित्री तथैव परमाक्षरम्
शान्त्यतीतञ्च प्रणवं तथा चैव नवात्मकम् ३
विद्येशा लोकपालाश्च ज्ञेयास्साधारणानि वै
यत्र प्रत्येकहोमस्यात् तत्र साधारणैर्यजेत् ४
प्रत्येकशस्तु देवेशि तास्तु तत्रैव पूजयेत्
प्रणवे कथिता ये तु ते तु प्रत्येकशस्मृताः ५
निवृत्याद्याः कलायास्तु तासु प्रत्येकशस्मृताः

पदभेदविभागेन अष्टत्रिंशत्कलैस्तथा ६
मातृकायां तथा देवि प्रत्येकं समुदाहृतम्
शोध्यशोधकभावेन तथा चान्ये प्रकीर्तिताः ७
एवं ज्ञात्वा वरारोहे होमकर्म समारभेत्
दशया दीपितैर्मन्त्रैः कर्मकुर्याद्यथेप्सितम् ८
ओङ्कारदीपिता मन्त्राः नमस्कारान्तयोजिताः
हुङ्कारमादियोगेन स्वाहान्तेन तु मन्त्रिणम् ९
आकर्षयन्ति भूतानि दिव्यमानुषपन्नगाः
ओङ्कारमादितः कृत्वा वौषडन्तेन मन्त्रिणः १०
शान्तिकं फलदं श्रेष्ठं कथितं तव शोभने
ओङ्कारदीपिता मन्त्रा नमस्कारान्तयोजिताः ११
अर्चने तु प्रयोक्तव्या अग्नौ स्वाहान्तयोजिताः
सुवौषट्कारसंयुक्तं पुष्यर्थे विनियोजयेत् १२
वषट्कारेण संयुक्तममृतीकरणं हितम्
मनोन्मनेति मन्त्राणां इन्द्यनार्थं प्रयोजयेत् १३
उत्सादने प्रयोक्तव्यं फट्कारेण समन्वितम्
मारणे फट् फडित्येव मन्त्रं कुर्याद्विचक्षणः १४
आदिहुङ्कारसंयुक्तं मध्ये मन्त्रसमन्वितम्
फट्कारमन्त्रयोगेन पाशच्छेदकरस्मृतिम् १५
एष मन्त्रप्रयोगस्तु कथितस्तव शोभने
अविदित्वा न सिध्येत न च याति परं पदम् १६
तस्मान्मन्त्रपदस्यैव भेदनन्तु प्रयोजयेत्
सिध्यन्ते साधकेन्द्रास्तु प्रयोगैर्मन्त्रयोजितैः १७
या योगेन सिध्यन्ते न च यान्ति परं पदम्
दीक्षाहोमं सदा कुर्यात् स्वाहाकारान्तिकं पदम् १८
हुंफट्कारकृतेनैव पाशच्छेदन्तु कारयेत्

वौषडन्तेन देवेशि पूर्णाहुत्यान्तु दापयेत् १९
एकाक्षरस्मृतो मन्त्रो द्व्यक्षरत्र्यक्षरो परः
पञ्च षट् सप्त चाष्टौ तु बह्वक्षरमयः परः २०
एकाक्षरस्य मन्त्रस्य प्लुतेनोच्चारमिष्यते
आपादतलमूर्धान्तं व्यापयित्वा व्यवस्थितः २१
हृदि पादकलं यावत् ब्रह्मा तत्र व्यवस्थितः
चतुर्विं शतिभिस्तत्वैः प्रकृतिभिः परिकीर्तितः २२
एतद्ब्रह्माधिदैवत्यं व्याख्यातं तव शोभने
भुवनार्थं चतुर्विं शत् व्याख्यातानि शिवेन तु २३
पुरुषञ्चादितः कृत्वा मायातत्वञ्च पश्चिमम्
कथितं विष्णुदैवत्यं हृदयात्कर्णिकावधि २४
अस्मिन् मध्ये तु ये रुद्रा कीर्तिता भुवनैस्सह
विष्णुना सह मोदन्ते विष्णुतुल्यपराक्रमाः २५
तालुमध्ये गतोच्चारो रुद्रस्तत्र प्रकीर्तितः
विद्याविद्येश्वरैश्चैव तत्र ते भुवनैस्सह २६
तं विदित्वा महादेवि रुद्रतुल्यपराक्रमः
क्रीडते रुद्रलोके तु रुद्रतुल्यबलो भुवि २७
मूर्ध्नि स्थानगतोच्चारमैश्वरं तं विनिर्दिशेत्
स तत्र ईश्वरो देवः आधिपत्येन संस्थितः २८
तच्छब्दन्तु यथा भिन्नं विद्यातत्वं ततोपरि
तत्र देवः सदाख्यस्तु आधिपत्येन संस्थितः २९
शक्तित्रयं कृताधारो द्विधावस्थेन संस्थितः
स्थूलसूक्ष्मविभागेन विदित्वा मोक्षमाप्नुयात् ३०
चतुर्थावस्थितं सूक्ष्मं स्थूलमेकविधं स्मृतम्
इडिकादीपिका चैव रोचिका मोचिका तथा ३१
स्थूलमेतत्स्मृतो नादः विदित्वा मोक्षमाप्नुयात्

कलाह्येतास्तु चत्वारः एकत्वे तु यदा स्थिताः ३२
यथा स्थूलं स्मृतन्नादं मया ते कथितं शुभे
सूक्ष्ममेकविधञ्चैव ऊर्ध्वगामीति विश्रुतम् ३३
तत्र स्था देवताः सर्वास्समुदायेन संस्थिताः
व्याप्तियोगेन ज्ञातव्या देवताह्यघनाशनाः ३४
तस्मात्परतरा शक्तिः पञ्चधा संव्यवस्थिताः
सूक्ष्मा चैव सुसूक्ष्मा च अमृता च मृतामृता ३५
सूक्ष्मभावा स्मृता ह्येताश्शक्तेस्तु परमेश्वरि
तस्यापि परतः सूक्ष्मा व्यापिनीत्यभिधीयते ३६
तस्याः परतरो देवि गुरुपारंपरागतम्
तं विदित्वा विमुच्यन्ते नरास्संसारसागरात् ३७
मया ते कथिता देवि शक्तिः परमकारणा
तस्मिन् शून्यलयं देवि विघ्नन्तीं विनिर्दिशेत् ३८
उच्चारेण विना देवि वर्णा निजलयं गतः
कण्ठस्थो विरमेच्छब्दः अर्धचन्द्र इति स्मृतः ३९
तस्य शब्दस्य यच्छब्द ऋषिमन्तं विभाव्य ये
निरोधी सा विनिर्दिष्टा ललाटे तु लयं विदुः ४०
भिन्नमेतद्यदा देवि तदा नादं विनिर्दिशेत्
अभिन्नो घातमित्युक्तं ललाटे तु लयं विदुः ४१
भिन्नं तद्वद्यदा देवि तदा नादं विनिर्दिशेत्
अभिन्नो घाटमित्युक्तं ललाटस्थो निवर्तते ४२
बिन्दोः परतरेणैव नादतत्वं लयं व्रजेत्
नादतत्वलये लीना स परत्वेन गच्छति ४३
परत्वे संस्थिता शक्तिः तच्छेषव्यापिनी तथा
तस्माद्गुरुतरो देवि गुरुपारंपरागतः ४४
कलदेशविनिर्मुक्तमुच्चारालंबना ऋतम्

जपयोगविनिर्मुक्तं करणाधारवर्जितम् ४५
बिन्दुमात्रविनिर्मुक्तं हेतुवादविवर्जितम्
क्लिश्यन्ते देवतास्सर्वे ऋषयः संशितव्रताः ४६
तं प्राप्य न निवर्तन्ते ये चान्ये भुवि मानवाः
एतत्सर्वं परत्वेन कथितं तत्वमुत्तमम् ४७
मन्त्रस्य विषुवं देवि शृणुष्व कथयामि ते
मन्त्रमुच्चारतो देवि यावन्नान्यमनो भवेत् ४८
तावन्मन्त्रयतीरात्मा देहमध्ये व्यवस्थितः
नमस्कारं ततः प्रोक्तं स्वाहाकारान्तयोजितम् ४९
बिन्दुद्वयं यदातीतं तन्मन्त्रं विषुवं स्मृतम्
प्राणे तु तच्चतुर्थी तु विभेदवरवर्णिनी ५०
प्रशान्तं प्राप्य देवेशि निष्कलं विषुवं स्मृतम्
उत्तरायणपूर्वाह्णे द्वितीये दक्षिणायनम् ५१
उभयोर्मध्यदेशे तु कालेन विषुवं स्मृतम्
चत्वारो विषुवा देवि जानीते देशिकोत्तमः ५२
स विमोचयते बन्धं क्षिप्रं संसारबन्धनात्
एतत्सर्वं समासेन मया तु कथितं तव ५३
मन्त्रे समरसो भूत्वा तिष्ठते परमेश्वरि
मन्त्रं समरसो देवि शिवेन परिकीर्तितः ५४
नाडिमध्यगतो ह्यात्मा शिवभक्तिभिरीश्वर
नाडीसमरसो देवि कथितस्तव शोभने ५५
भूतेषु व्याप्य देवेशि तिष्ठते परमेश्वरः
स भूतसमरसो देवि मया ते परिकीर्तितः ५६
सर्वेषां समरसानान्तु श्रेष्ठं सर्वगुणोद्गतम्
तत्वं समासतो देवि शिवेन कथितं मम ५७
तत्वं समासयेत्ततु दुर्लभं त्रिदशैरपि

न मया कस्यचित्ख्यातं तत्वं समरसं शुभम् ५८
चत्वारः समरसा देवि कथितास्तु ततो मया
तत्वसन्धानदेवेशि तत्वतः कथयामि ते ५९
मन्त्राणां सन्धानञ्चैव अध्वरे तु यथा शृणु
शिवादितर्पणं कृत्वा अनुपूर्वेण मन्त्रवित् ६०
प्रायश्चित्तं ततो हुत्वा आत्मनश्च तु देशिकः
नातिचित्रमपायस्य सूत्रच्छेदं तथैव च ६१
कृशे स्थूले रजे चैव प्रायश्चित्तन्तु होमयेत्
एतान् हुत्वा ततो मन्त्री मन्त्राणां दीपनं हुनेत् ६२
पशो ह्यालंभनं कृत्वा प्रायश्चित्तन्तु होमयेत्
हुङ्कारमादिमध्येषु अन्ते चैव प्रयोजयेत् ६३
फट्कारं तत्परत्वेन दापनन्तु प्रकीर्तितम्
एवं सन्दीपनं कृत्वा पशोरथे वरानने ६४
ततस्तु सन्धयीन्मन्त्री त्रितत्वञ्च यथाक्रमम्
शिवतत्वे तु विद्याख्यामात्मतत्वञ्च विद्यया ६५
विद्यातत्वात्मतत्वेन एकीकृत्य तु बुद्धिमान्
ततस्तु शिवतत्वेन सन्धयीत विचक्षणः ६६
ततस्त्रितत्वसन्धानं मन्त्राणां सन्धनं शृणु
विद्येशां शिवतत्वेन लोकेशान् विद्यसंज्ञिते ६७
अस्त्राणि चात्मतत्वे तु सन्धयेत्परमेश्वरि
एवन्तु सन्धानं कृत्वा पूर्णाहुत्या तु पातयेत् ६८
पात्यमाने विकाराणि अग्निमध्ये स पश्यति
स धूमश्चिटचिटाशब्दो विष्णुलिङ्गैर्विराजितः ६९
एवन्तु लक्षणं ज्ञात्वा ब्रह्मघ्नं तं विनिर्दिशेत्
नीलमम्रनिभाकारं स धूमं शालिका मतः ७०
श्रूयमाणे यदा वह्नौ सुरापन्तु विनिर्दिशेत्

अस्मिन् घेयने हव्ये चैव परिप्लुते ७१
क्षणाज्ज्वलननिर्वाति स्तेयकारं विनिर्दिशेत्
विस्तरं घोररूपञ्च स धूमञ्च लिखेन्महीम् ७२
एवं लक्षणविज्ञाने कृतगुर्वङ्गनागमः
सर्वेषां रूपमाधत्ते कृष्यमानोऽपि पावकः ७३
स तु संयोगिको देवि पातकं तस्य निर्दिशेत्
उपपातकिनाश्चान्ये तान्येवमुपलक्षयेत् ७४
ध्याक्षस्वरस्तथा रूक्षकाकोलूकश्वरस्वरः
उष्ट्रगृध्रस्वराघोराः शिवा वानररावकाः ७५
स धूमन्धूमलन्नीचयो भूम्याञ्च विलिखेत्सकृत्
जलते क्रधुका शब्दः फट्कारश्च सकृत् सकृत् ७६
एवं वै लक्षणं ज्ञात्वा उपपातकिनो नराः
दृष्ट्वैतान्यपचिह्नानि दीक्षाकर्म न कारयेत् ७७
कोणदेशे च तं स्थाप्य तमुद्दिश्य च देशिकः
होमयेद्दीपनञ्चैव नवतत्वालयं प्रभुः ७८
खट् खटेति च चत्वारः फट् फटेति पुनः पुनः
पश्चात्तत्वकृतं तत्वं पुनर्होमकृतेन तु ७९
शुध्यते तु किमाश्चर्यं ततो होमेन पातयः
यथा विषं महाघोरं सप्तधातुगतं हरेत् ८०
एवं हरति तत्पापं तत्ववित्पापकर्मणाम्
ब्रह्महत्यादिपापानि उपपातकिनां तथा ८१
शतमष्टशतेनापि शोधयेन्नात्र संशयः
एवंसंशोध्य शिष्यन्तु दीक्षाकर्म समारभेत् ८२
न तु सङ्कीर्तयेत्पापमन्येषां देशिकोत्तमः
कथया दोषमायाति तस्मात्क्रुद्धं विवर्जयेत् ८३
कथितं मन्त्रसद्भावं सर्वेषामुत्तमोत्तमम्

## इति निश्वासकारिकायां दीक्षोत्तरे अष्टमः पटलः

ईश्वरः
अतः परं प्रवक्ष्यामि श्रूयतां सुरसुन्दरि
प्रक्रियासूत्रयोगञ्च पाशानां ग्रहणं तथा १
यद्यविज्ञाय कर्तव्यं कथयामि तवाखिलम्
कन्या कर्तृत्वसूत्रेण त्रिगुणी त्रिगुणी कृते २
पञ्चगव्येन चाभ्युक्ष्य गन्धतोयेन वा पुनः
अर्च्यैकादशकेनैव तत्सूत्रन्तु विचक्षणः ३
अर्चयित्वा तु तत्सूत्रमाचार्यस्सुसमाहितः
पादाङ्गुष्ठप्रदेशे तु सूत्रं कृत्वा प्रधारयेत् ४
प्रसारयेत्ततः सूत्रं शिखाग्राद्यावस्थितम्
सकलीकृत्य तत्सूत्रं सर्वमन्त्रैर्विचक्षणः ५
यश्शिवः पूजितो देवि देशिकेन महात्मना
तेन पाशानि संगृह्य सूत्रग्रन्थ्या तु कारयेत् ६
संपुटीकृत्य तं पाश गृहेत्संहारमुद्रया
तत्वेन बन्धयेद्भूयः तान् पाशांस्तु विचक्षणः ७
क्रमेण सर्वपाशानि बन्धयेद्देशिकोत्तमः
बध्वा पाशं यथान्यायं वासयेद्देव संयुतम् ८
गन्धैः पुष्पैः समभ्यर्च्य देवदेवेन संमतः
दीपयेत ततः पाशां हुंफडन्तः कर्मेण तु ९
एकैकमाहुतिं दत्वा पाशे पाशे न संशयः
प्रभाते विमले मन्त्री प्रदीप्ते हनि सुवृते १०
संहारक्रमयोगेन हुनेत्तत्वान्यथाक्रमम्
होमान्ते तु ततो मन्त्री पाशच्छेदन्तु कारयेत् ११
हुंफडन्तशिवेनैव छित्वा तेनैव होमयेत्

हुत्वा पाशां ततो मन्त्री पूर्णाहुत्या तु पातयेत् १२
पूर्णाहुतिक्रमेणैव सर्वतत्वान् समुद्धरेत्
तत्स्थानात्ततः पाशान् तत्वं तत्वेन सन्धयेत् १३
शुद्धतत्वं भवेद्ध्रस्वमशुद्धदीर्घसंयुतम्
विलीनमानं संचिन्त्य सन्धीतकरणान्वितम् १४
एवं क्रमेण तान् सर्वान् हुनेत्सन्धेन सुव्रते
पृथिवीमादितः कृत्वा शिवतत्वमपश्चिमम् १५
एष एव विधिः प्रोक्तः पाशानां छेदनं प्रति
तत्वानां सन्धनञ्चैव एष एव विधिस्मृतः १६
भुवनाध्वकलाध्वे च तत्वाध्वे च वरानने
वर्णाध्वे च पदाध्वे च मन्त्राध्वे च तथैव हि १७
यश्शिवः कल्पितस्तत्र तेन पाशानि छेदयेत्
भुवनाध्वे ततः कुर्यात् कथयामि समासतः १८
तत्वं संस्थापयेत्पूर्वं ततो भुवनजल्पनम्
गन्धैर्धूपैः समभ्यर्च्य ततो योनिविकल्पनम् १९
गन्धपुष्पैः समभ्यर्च्य ताडनञ्च पशोस्मृतः
शिखया ताडनं कृत्वा ग्राह्यसंहारमुद्रया २०
शक्त्या संताडिते पुंसि तत ऊर्ध्वं प्रयात्यसौ
द्वादशान्तमनुप्राप्तं ततो ग्राह्यं विचक्षणः २१
वामया योजयेन्मन्त्री तेन दद्यात्तु आहुती
अधिकारे दशा दद्यात् भोगे दद्याद्दशाहुतिः २२
लये दद्याद्दश प्राज्ञः ततस्तत्वाद्वियोजयेत्
वियोज्य मन्त्रवित् प्राज्ञः पाशच्छेदन्तु कारयेत् २३
वियोजनन्तु ज्येष्ठ्यायां शिवः पाशन्निकृन्तति
पूर्णाहुतिं ततोन्ते तु रौद्रं तस्मात्तु उद्धरेत् २४
एष एव विधिः प्रोक्तः सर्वाध्वानमशेषतः

विधिमेवं सकृद् ज्ञात्वा मोचयेन्नात्र संशयः २५
तत्वाध्वाने तु मन्त्रज्ञः कथयामि तवाखिलम्
तत्वमावाहयेद्देवि ततो होमं प्रकल्पयेत् २६
गन्धैः पुष्पैः समभ्यर्च्य ताडनन्तु ततः पुनः
शिवेन योजयेत्तत्र हुनेत्तेनैव सुवृते २७
++ शतं शतञ्च पूर्णाहुत्यां प्रति प्रति
त्रितत्वाध्वरशुद्धे च शिखाच्छेदन्तु कारयेत् २८
तत्वात्मस्थं पशुं कृत्वा योजयेत्परमे पदे
योजिते तु परे तत्वे स्तौम्यमाहुतयो हुनेत् २९
ओं सर्वज्ञतायै च परिपूर्णेति च परम्
परितृप्तो भवस्वेति निर्वाणं भवस्वेति च ३०
यथा सर्व गतोह्येवमाहुतिः प्रतिपादयेत्
सर्वव्यापीति होतव्यं देशिकेन महात्मना ३१
भवेत्सर्वज्ञता देवि स पशुः कारणाज्ञया
यदुक्तं देवदेवेन तद्भवेन्नात्र संशयः ३२
कलास्तथैव ज्ञातव्याः पदेनैव तथैव च
वर्णाध्वाने तथा प्रोक्तं कर्तव्यं देशिकेन तु ३३
वर्णा एव स्मृतास्तत्वा वर्णयोनिस्तथैव च
प्रणवे योजनञ्चैव ताडने प्रणवस्मृतः ३४
ग्रहणं प्रणवेनैव उत्क्षेपः प्रणवेन तु
वर्णाध्वाने यथा प्रोक्तं पदाध्वाने तथैव च ३५
कलाध्वाने तथैवेह आचार्येण महात्मना
मन्त्राध्वानं प्रवक्ष्यामि संक्षेपान्न तु विस्तरात् ३६
गायत्री तु भवेद्योनिः तया मन्त्रान्विशोधयेत्
सावित्र्या ताडनं कुर्याद्ग्राह्यं तेनैव मन्त्रतः ३७
योजनं तेन कर्तव्यं तथा चैव वियोजनम्

उत्कर्षणन्तु तेनैव सावित्र्या तु विचक्षणः ३८
पाशच्छेदं शिवेनैव कर्तव्यं देशिकेन तु
पूर्णाहुतिः प्रदातव्या योजनाय परे शिवे ३९
वसोर्धाराप्रयोगेन पातयेत्तु विचक्षणः
एष एव् विधिर्देवि कथितो ह्यनुपूर्वशः ४०
ज्ञातव्यं देशिकेनैव योजनाय परे शिवे
सर्वसंहितसामान्यं कथितं तव शोभने ४१
दीक्षा पञ्चविधा देवि कर्तव्या देशिकेन तु
तदहं संप्रवक्ष्यामि साधकानां हितावहम् ४२
आसनं प्रणवेनैव कर्तव्यं देशिकेन तु
अनन्तधर्मज्ञानञ्च वैराग्यैश्वर्यमेव च ४३
नवधा शक्तिदेवेन प्रणवं विन्यसेद्बुधः
पद्मञ्च चन्दनं तेन कर्णिकान्तेन कारयेत् ४४
पुष्करान्तेन कर्तव्या मण्डलान्तेन कारयेत्
देवतान्तेन कर्तव्या मूर्त्यन्तेनैव कारयेत् ४५
पञ्च ब्रह्मा तु तेनैव अष्टत्रिंशत्कलैर्युतः
आवाहनन्तु तेनैव कर्तव्यं सुरसुन्दरि ४६
ब्रह्मणस्तु न सन्देहो देशिकेन महात्मना
निवृत्तिस्तु शिरस्तस्य इडिकाहृदयं विदुः ४८
सूक्ष्मां शिखान्तु विज्ञेया सद्यस्तु कवचं भवेत्
पृथिवी तु भवेदस्त्रं ब्रह्मणाङ्गाः प्रकीर्तिताः ४९
पूर्वेण प्रणवं दद्यात् दक्षिणेन तथैव च
पश्चिमेनोत्तरेणैव मध्ये प्रणवसंयुतम् ५०
आग्नेय्यां हृदयञ्चैव ईशान्यान्तु शिरस्मृतम्
शिखा नैर्ऋतदिग्भागे कवचं वायुगोचरे ५१
रुद्रोङ्कारेण कर्तव्यं रुद्रतत्वस्य शोभने

इकारस्तु शिखा देवि अकारस्तु शिरस्मृतम् ५२
गकारो हृदयञ्चैव सद्यस्तु कवचं विदुः
लकारमस्त्रमित्युक्तं ग्राहकाः परिकीर्तिताः ५३
हन्तारव्यभेदयेत्तैस्तु ग्राहकैस्सुरसुन्दरि
भूतत्वं ब्रह्मतत्वस्य प्रणवेन तु होमयेत् ५४
एवं हुत्वा विधानेन पूर्णाहुत्या तु पातयेत्
योजने साधकेन्द्राय प्रजनत्वमपाश्रिते ५५
तस्मिन् युक्तं ततो मन्त्री ब्रह्मसायुज्यतां व्रजेत्
ब्रह्मणे तु यथा प्रोक्तं विष्णवेऽपि तथा स्मृतम् ५६
प्रतिष्ठा तु शिवस्यैव आकारः परिकीर्तितः
रुकारो हृदयं प्रोक्तमीकारस्तु शिखा स्मृता ५७
वामन्तु कवचं प्रोक्तं वकारोस्त्रं प्रकीर्तितम्
पूर्वोक्तेन विधानेन कुर्यादावाहनं बुधः ५८
सायुज्यं तादृशं प्रोक्तं शिवेन परमात्मना
अनाद्ये तु पदे देवि विष्णुसायुज्यतां व्रजेत् ५९
तस्मिन्युक्तमया देवि विष्णुतुल्यपराक्रमः
विद्याशिरस्समारव्यातमङ्गारं नाम नामतः ६०
ऋकारं हृदयं तस्य कथितं तव शोभने
अघोरं कवचं देवि रुद्रतत्वस्य शोभने ६१
ब्रह्मणे विष्णवे यद्वत् तद्वत्कुर्यात्तु देशिकः
आसनेऽयं विधिर्देवि मया त्गे परिकीर्तिताः ६२
अमृता तु शिखा तस्य इकारः परिकीर्तितः
विद्याशिरस्समारव्यातं मकारं नाम नामतः ६३
आकारं हृदयं तस्य पुरुषं कवचं विदुः
यकारमस्त्रमित्युक्तमङ्गान्येतानि चेश्वरि ६४
यो विधी रुद्रतत्वस्य ईश्वरेऽपि तथा स्मृताः

अनन्ता रुद्रतत्वस्य निर्वाणं परमं पदम्  ६५
ईश्वरे व्योमरूपा तु कथिता तव शोभने
निधनेन तु कर्तव्यं तत्वेन तु सदाशिवे  ६६
यथा पूर्वं  मया ख्यातमत्रापि विधिरेव सः
परमाक्षरं शिखा तस्य शान्त्यतीतं शिरस्मृतम्  ६७
बिन्दुदेवन्तु हृदयं ईशानं कवचं विदुः
शून्यतत्वं हकारस्तु अस्त्रं तत्परिकीर्तितम्  ६८
सायुज्यं पूर्वमेवोक्तं यथा कुर्यात्तु नान्यथा
एते पञ्च महायागा नाख्याता कस्यचिन्मया  ६९
नैष्ठिका ब्रह्मचर्येषु स्थिता भुवि च मानवाः
तेषामुद्धरणार्थाय मया तु कथितं तव  ७०
लिङ्गोद्धारविधि ह्येष कथितस्तव सुव्रते
नैष्ठिकानान्तु कर्तव्यं लिङ्गोद्धारं समीरितम्  ७१
स्वजातीय पदे स्थाप्य ततो दीक्षान्तु कारयेत्
अथवा ब्रह्मविद्ये तु अभियुक्तस्तु साधकः  ७२
तत्र दीक्षा तु कर्तव्या अभिषेकन्तु शोभने
वैष्णवेऽपि तथैवेह कथितं परमेष्ठिना  ७३
रुद्ररुद्रगणानान्तु साधनं परिकीर्तितम्
गणगुह्यकमन्त्रेषु साधनेनैव साधकः  ७४
विनायकानां सर्वेषां तत्र दीक्षान्तु कारयेत्
डाकिन्यो मातरश्चैव योगिन्योऽपि तथा पराः  ७५
अस्मिंस्तु दीक्षितेनैव साधकस्य विधीयते
ईश्वरे पाशुपत्यानां उद्धारे तु विचक्षणः  ७६
लिङ्गोद्धारविधानन्तु कर्तव्यं देशिकेन तु
शुद्धायुक्तस्तु एतस्मिन् दीक्षितेन मुक्तिमिच्छता  ७७
सर्वतत्वफलोपेतं सर्वतत्वफलोदयम्

यजेद्देवादिदेवेशं सर्वेषां फलमाप्नुयात्  ७८
एष सर्वोदयो नाम सर्वमुक्तिफलप्रदः
एष ते योग आख्यातः पञ्च व्योमात्मकश्शुभः  ७९
शिवयागं प्रवक्ष्यामि सर्वयागमनौपमम्
चतुरावरणैर्यागं कर्तव्यं देशिकेन तु  ८१
पञ्च ब्रह्म शिवाङ्गाञ्च गर्भेमेतदुदाहृतम्
द्वितीयावरणे देवि कला शक्त्यात्मकानि तु  ८२
दिशासु विन्यसेद्देवि शक्तेस्तु विदिशाः कलाः
नादस्येककला यास्तु दिशासु विदिशासु च  ८३
य +++ द कला देवि निन्दो श्चौ तथैव च
एष ते याग आख्यातो दुर्लभस्त्रिदशैरपि  ८४
सर्वस्वं गोपितं ह्येतत् व्याख्यातं तव शोभने
एष सर्वादयो यागाः कथितास्तव शोभने  ८५
ज्ञात्वा बुध्वा च यष्ट्वा च मुच्यते नात्र संशयः
प्रणवं ह्यासनं कृत्वा मातृकां तु यजेद्बुधः  ८६
मुक्तिन्तु प्रणवं कृत्वा योजयेत्सुसमाहितः
दक्षिणे योजयेद्बीजं वामे योनिन्तु विन्यसेत्  ८७
सकलीकरणं ह्येतत् कथितं तव शोभने
अवर्गं पूर्वपत्रे तु कवर्गञ्चाग्निगोचरे  ८८
चवर्गं दक्षिणे चैव टवर्गं नैर्ऋतेन तु
तवर्गं पश्चिमे चैव पवर्गं वायुगोचरे  ८९
य्वर्गमुत्तरेणैव शवर्गन्त्वीशगोचरे
एष वै मातृकायागः कथितं तव शोभने  ९०
अवर्गं प्रथमं तत्वं कवर्गं पुरुषं स्मृतम्
एवं वर्गक्रमेणैव शिवतत्वन्तु मातृकान्  ९१
ओङ्कारमात्मतत्वन्तु प्रथमं परिकीर्तितम्

रुद्रोङ्कारेण देवेशि विद्यातत्वन्तु कारयेत् ९२
निधनेन तु होतव्यं शिवतत्वं समाहितैः
एवन्ते मातृकायागो दुर्लभस्त्रिदशैरपि ९३
कथितं सुरहस्यन्तु न मया गोपितं तव ९४
इति निश्वासकारिकायां दीक्षोत्तरे नवमः पटलः

देव्युवाच
दीक्षाकाले समुत्पन्ने आचार्यैश्शास्त्रतत्परैः
कथं तस्मिन् प्रदेशे च शिष्यास्स्थाप्या महेश्वर १
कस्मिंस्तु यतयस्थाप्या ब्राह्मणाश्च महेश्वर
क्षत्रियाणान्तु यत्स्थानं वैश्यानां वद शङ्कर २
शूद्राणां स्थानमाख्याहि स्त्रीणाञ्चैव तथैव हि
ग्रहमेधि यथाकार्यो दीक्षाकाले महेश्वर ३
एतत्सर्वं यथान्यायं ब्रूहि मे भक्तवत्सल
ईश्वरः
शृणु देवि प्रवक्ष्यामि नियोगविधिमुत्तमम् ४
येन विज्ञातमात्रेण सर्वदोषैर्न लिप्यते
ईशान्यां यतयस्थाप्या विप्राश्चोत्तरतः स्थिताः ५
शिवाद्दक्षीणतः स्थाप्या क्षत्रवर्णसमुद्भवाः
वैश्याः पश्चिमदिग्भागे शूद्रा वै नैर्ऋतेन तु ६
शिवा वायव्यदिग्भागे संस्कारे योजयेत्स्त्रियम्
एवं संस्थाप्य विधिवत् कुर्यादालभनक्रियाम् ७
स्वदारापत्यभृत्यात्मा गृहमेधी यदा भवेत्
तस्य संस्कारयोगोऽयमतिरुद्धा समाचरेत् ८
प्रणवं विनियुञ्जीयाद् गुरवे गृहमेधिने
गृहस्थं शिववद्भावं तद्भार्यामग्निकातनौ ९

कुमारं तदपत्यानां सुहृदा मन्त्रनायके
दिक्पालैः कुलजान् गृह्यात् शेषानस्त्रगणान्यसेत् १०
एकाध्वरिकसंस्कारमीहतां गृहमेधिनाम्
सदारापत्यपत्यानां नियोगः परिकीर्तितः ११
गृहमेधी मये यागे पुष्पपान्तं विसर्जयेत्
अत्रैव विनियुक्तस्य स्त्रियायानन्तु कारयेत् १२
स्वामिने पतितैः पुष्पैः स्त्रियस्वपतये यदा
महादोषमवाप्नोति चर्यायुः परिपाल्यते १३
चर्यादोषसमुत्पन्ने जायते गुरुतल्पगः
गुरुतल्पसमं पापं हृष्टसंस्कारपापकृत् १४
प्राप्नोति नरकं शिष्यः पर्याया दुहिता क्रिया
पुष्पलातचितानस्य क्रिययोः परिपूरणम् १५
सर्पिषा होमयेदग्नौ शिवेन तु शताहुतिम्
अनेन विधिना देवि दोषहीनो भवेद्गुरुः १६
याग संपूर्णतामेति हुतं मोक्षफलावहम्
ग्रहिणान्तु विधानोऽयं कथितस्तव शोभने १७
यतीनामादितः कृत्वा मान्या शिवसंहिता
होमःकार्यस्तु देवेशि आचार्येण महात्मना १८
मन्त्राध्ययनयोग्यस्तु शिवहस्तेन जायते
शिवमन्त्रस्य समयी मन्त्रतन्त्रोत्तरो भवेत् १९
दीक्षां प्राप्य ममासिध्यो महासिद्धारुहो भवेत्
त्रितत्वविनिविष्टस्तु मोक्षयोग्यः प्रजायते २०
लब्धानुज्ञोऽभिषिक्तस्तु बिन्दुस्थो योगसिद्धिभाक्
प्रत्ययानि यथा सम्यग् अणिमादिगुणाष्टकम् २१
नादस्थः समवाप्नोति ततो भयविवर्जितः
विशोकः परमं स्थानं यत्र गत्वा मृती भवेत् २२

य एवं वेत्ति तत्वेन गुरुकर्म विनिश्चयम्
स दीक्षां कर्तुमर्हेत अन्यथा पापकृत् भवेत्  २३
एवं कृत्वा तु विन्यासं शिष्याणान्तु महेश्वरि
अग्निस्थानमुपक्रम्य कर्म निर्वर्तयेद्गुरुः  २४
अग्निकर्मविधानज्ञो जिह्वालक्षणतत्ववित्
सिद्धासिद्धविभागज्ञो वर्णरूपहुताशने  २५
अग्निस्तु देवतास्सर्वा अग्निरूपो महेश्वरः
तस्य मन्त्राः परा मूर्तिः आद्यं वै सोमसंभवम्  २६
लक्षयेत्सप्तजिह्वास्तु हुताशनमुखैस्तथा
सप्तजिह्वाविधानज्ञो होमकर्म समारभेत्  २७
जिह्वाभेदनतत्वज्ञो जुहुयाद्यो हुताशने
यथा दाहरते कर्म तत्सर्वं सफलं भवेत्  २८
हुत्वास्याग्निं विधानेन पूज्याहुत्य प्रतर्पितम्
तुष्यते यजमानस्य सन्तुष्टो वृषभध्वजः  २९
अङ्गुष्ठपर्वविस्तीर्णा बहुहव्येन्धनोचिता
एकीभूतास्तु तिष्ठन्तिस्वलहव्येन्धनेन तु  ३०
तत्कुण्डानप्रमाणेन मुखमेतद्धुताशने
ज्वालामालासहस्त्रैस्तु पातालवदनं स्मृतम्  ३१
अग्नेः प्रबोधनं कृत्वा जिह्वानां लक्षयेत्तदा
देवतारूपकञ्चैव फलं तस्यैव यादृशम्  ३२
पूर्वपश्चिमतो जिह्वा ग्रहास्तत्र प्रतिष्ठिताः
होमकाले प्रयत्नेन द्वे जिह्वे परिवर्जयेत्  ३३
प्रथमा धर्मजिह्वा तु नीलवर्णेन संस्मृता
द्वितीया यक्षदैवत्या ताम्राकारसमप्रभा  ३४
तृतीया सोमदेवत्या शुक्ला सा चामृतोद्भवा
पञ्चमी विष्णुदेवत्या अतसीपुष्पसन्निभा  ३५

षष्ठी च सूर्यदेवत्या शुक्ला रक्ता च सा स्मृता
सप्तमी बहुदेवत्या सर्वरूपैस्तु दीप्यते ३६
प्रथमा निष्फला जिह्वा द्वितीयार्थप्रदायिका
तृतीया प्रणयेत्सर्वां जननं स्थाप्य सङ्गमान् ३७
यमजिह्वा जयं गोत्रं पञ्चमी कुलवर्धिनी
षष्ठी तु सूर्यदेवत्या आरोग्यं सा प्रयच्छति ३८
सप्तमी धर्मकामार्थान् ददाति विधिपूजिताः
तस्मात्सर्वप्रयत्नेन मध्ये होमं प्रशस्यते ३९
गृहजिह्वा यमजिह्वा पूर्वपश्चिमतस्थिता
तस्मात्सर्वप्रयत्नेन द्वे जिह्वे परिवर्जयेत् ४०
अग्निवर्णा दश प्रोक्ताः कर्मसिद्धिमयावहा
आदित्योदयवर्णाभा स्निग्धवैडूर्यसन्निभा ४१
घृतवर्णनिभाश्चैव लोहवर्णास्तथैव च
तप्तायससवर्णाभा कुसंभरससन्निभाः ४२
हरितालनिभाश्चैव धूम्रवर्णास्तथैव च
इन्द्रायुधसवर्णाभा इन्दुगोपकसन्निभाः ४३
बहुहव्येन्धनैश्चैव स समिद्धे हुताशने
विधूमे लेलिहाने च होतव्यं कर्मसिद्धये ४४
अर्चिष्मान् पिण्डितशिखः तप्तकाञ्चनसन्निभः
स्निग्धः प्रदक्षिणावर्तस्सर्वकर्मफलप्रदः ४५
एवं विज्ञाय विधिवद् गुरुणा साधकस्य तु
संस्कारयोगः कर्तव्यो यथावत्तन्निबोधये ४६
कृत्वा सूत्रमयान् पाशान् नवात्मेनाभिमन्त्रितान्
उच्चार्य नवतत्वानि अकारेण तु भेदितान् ४७
मूर्ध्नि कण्ठे च हृदये नाभिरूरुः कटिस्तथा
गङ्घे गुल्फे तथा पादे सर्वत्र विनियोजयेत् ४८

बाहुभ्यां हस्तयोश्चैव सर्वदेहन्तु वेष्टयेत्
नवात्मनाहुतिशतं स्वाहाकारेण पातयेत् ४९
विद्यते न तु देवेशि पश्चाच्छून्येन होमयेत्
सान्निध्यबन्धनार्थन्तु एवं भवति शोभने ५०
बध्वा पाशं यथा न्यायं छेदनञ्च तथोच्यते
योजितव्यं शिवे पश्चात् पुत्रको देशिकेन तु ५१
शोधयित्वा महात्मा तु पूर्वोक्तविधिना गुरुः
गर्भाधानादितः कृत्वा चत्वारिंशाष्टकं क्रमात् ५२
संस्कारं विधिवत्कृत्वा मन्त्रैः ब्रह्मोद्भवैः क्रमात्
निक्षेपोद्धारयोगादीन् संस्कारांश्च यथाक्रमम् ५३
ततश्छेदन्तु पाशानां अनेन विधिना भवेत्
नकारसंपुटं देवि पकारोकारयोजितः ५४
मस्तकं बिन्दुनाक्रान्तं शिष्यदेहे नियोजयेत्
शिवेन सह देवेशि नात्रकार्या विचारणा ५५
अतिगुह्यमिदं देवि नाख्यातं कस्यचिन्मया
एष सर्वविधानन्तु श्रेष्ठसर्वगुणोत्तमम् ५६
सर्वसंहितसामान्यं कथितन्तु तवाखिलम्
इति निश्वासकारिकायां दीक्षोत्तरे दशमः पटलः

देव्युवाच
भगवन् श्रोतुमिच्छामि मातृकाध्वानमुत्तमम्
निस्संशयकरञ्चैव निर्वाणफलसाधनम् १
ईश्वरः
शृणु देवि परं गुह्यं कथयामि तवाखिलम्
तेन विज्ञातमात्रेण प्राप्नोति परमं पदम् २
मातृकायान्तु होतव्यमध्वानन्तु यथाक्रमम्

षकारं शतरुद्रे तु दशधा परिकल्पयेत् ३
पञ्चाष्टके शकारन्तु वकारो योनिरष्टके
योगष्टके यकारस्तु सुशिवेरं प्रभुस्मृतः ४
पङ्क्तित्रये यकारस्तु मकारं पञ्चविंशके
भकारस्संहितस्साध्ये बकारश्शिवसङ्करे ५
असाध्ये तु फकारो वै वकारो हरिरुद्रके
दशघाते नकारस्तु पञ्च शिष्ये च य स्मृतः ६
महादेवे दकारस्तु थकारो गोपतिस्मृतः
शिवब्रह्मपदे तन्तु णकारो नन्दहेमके ७
ढकारस्याद्वृषिकुले महामाया दृढप्रभुः
वागेशान्ते ठकारस्तु टकारः प्रतिपाधिपः ८
साधुस्थाने तृकारस्तु झकारो विमले स्थितः
ध्यानाहारे झकारो वै विज्ञेयं साधकोत्तमैः ९
दमने फस्तु विज्ञेयं चकारश्चैव रुद्रके
धातारो वै दकारश्च घकारं भस्ममीश्वरे १०
प्रणवाष्टगकारन्तु महविद्याष्टके च खम्
ककारो मूर्तिरष्टासु ओष्ठान्तो रूपकं विदुः ११
शक्तित्रये बिन्दुयुतं द्वे विद्ये औ तु कीर्तितम्
ओङ्कारोप्यस्त्रमित्युक्तमैङ्कारं कवचं विदुः १२
ए शिखा तु समाख्याता शिरं लृकार उच्यते
हृदयन्तु लृविज्ञेयं ॠ सावित्री निगद्यते १३
गायत्री तु ॠकारन्तु धर्मादि ऊ प्रकीर्तितम्
आसने उ इति ज्ञेयं विज्ञेयं ई ति कर्णिका १४
इकारः शक्तिसंसक्तः आकारं पञ्चमीश्वरे
सदाशिवं विजानीयादकारः परमश्शिवः १५
पञ्चाशदक्षरैह्येतैः अध्वानं यस्तु विन्दति

स ज्ञानात् स शिवस्साक्षात् स योगी स शिवं विदुः १६
पञ्च पञ्चभिराहुत्यैर्दशभिर्दशभिस्तथा
विंशविंशतिभिश्चैव पञ्चविंशतिभिस्तथा १७
पञ्चाशच्च शतञ्चैव ज्ञात्वा शक्तिबलाद्बलम्
दीक्षाकार्या तु मन्त्रज्ञः पशूनाञ्च यथेच्छया १८
निष्कले चतुराहुत्या शूण्ये चैव त्रयं पुनः
प्रशान्तेन द्वयं दद्यात् तत्तु एकाहुतिं हुनेत् १९
सर्वाध्वानमशेषस्य एष एव विधिस्मृतः
एतद्रहस्यं परमं गोपितं न प्रकाशितम् २०
दीक्षिताय प्रशान्ताय अभिषिक्ताय धीमते
गुरुप्रियाय दातव्यं शिवभक्तिरताय च २१
अन्यथा नैव दातव्यं शिवभक्तिरताय च
अन्यथा नैव दातव्यं दीक्षाज्ञानमिदं शुभम् २२
सर्वसंहितसामान्यं सर्वतन्त्रेषु चोत्तमम्
विदित्वा ज्ञानविज्ञानं मोचयेन्मुच्यतेति च २३
विस्तरं कथितं यत्तु सकलेन तु होमयेत्
वर्णमन्त्रपदेनैव कलया च चतुर्विधम् २४
भुवनाध्वा कलाध्वा च तत्वाध्वा च वरानने
ज्ञानाध्वा च पदाध्वा च वर्णाध्वा च यथा पुनः २५
षट् प्रकारमिदं देवि अध्वानं परिकीर्तितम्
एषामेकदशं शोध्यं देशिकेन महात्मना २६
पूर्णाहुतिस्तु दातव्या योजनाय परे शिवे
वसोर्धारप्रयोगेन दातव्यं देशिकेन तु २७
मन्त्रद्रव्यप्रयोगेन युज्यते पशु तत्पदे
तस्मान्मन्त्रञ्च तत्वञ्च महिमानञ्च शोभने २८
देवतानां परित्यागं स्वशरीरे यथाक्रमम्

बिन्दुनादलयञ्चैव लयातीतं परं पदम्  २९
एवं क्रमेण देवेशि योजयेत्परमं पदम्
अतः संक्षेपतो देवि कथयामि तवाखिलम्  ३०
नरजो नाधिवासञ्च न भूक्षेत्रपरिग्रहः
यत्र यत्र प्रदेशे तु पूजयित्वा महेश्वरम्  ३१
अध्वानं मनसा ध्यात्वा आचार्यस्तन्त्रपारगः
भुवनाध्वा तु यः प्रोक्तो मया तु तव सुवृते  ३२
तं ध्यात्वाह्यात्मदेहे तु पशुदेशे तथैव च
होमह्येत्तन्त्रवित्प्राज्ञः तत्वमार्गविचक्षणः  ३३
आहुतीनां सहस्रन्तु अमनस्केन देशिकः
सहस्रेण तु युध्येत अमनस्केन शोभने  ३४
भुवनाध्वैष विख्यातः शिवेन परमात्मना
स्नुवानुपूरणं यावत्तावत्कालं समादिशेत्  ३५
अमनस्केन संयुक्तो देशिकः परमेश्वरि
सर्वमन्त्रमयः प्रोक्तः सर्वतत्वमयस्तथा  ३६
सर्वदेवमयश्चैव सर्वभूतमयस्सदा
एतं हुत्वा तु पातव्यं पूर्णाहुत्या तु शोभने  ३७
अन्ते तु योजनं कृत्वा शिवसायुज्यमिच्छता
एवं हुत्वा महादेवि लभते शाश्वतं शिवम्  ३८
सर्वदीक्षामयं सारं शोभनं गोपितं मया
अन्या या कथिता दीक्षा एकाहुत्या तु शुध्यति  ३९
एकाहुत्यापि देवेशि नियुज्येत्परमे पदे
किं पुनर्बहुधा हुत्या शुध्यतेति किमद्भुतम्  ४०
आहुतीनां सहस्रेण शुध्यते नात्र संशयः
अत एवं पुनर्वक्ष्ये संक्षेपं शृणु सुव्रते  ४१
परमाक्षरेण होतव्यं सर्वाध्वानमशेषतः

पूर्णाहुतिशतेनैव शुध्यते च शिवाध्वरे ४२
एवं विधेन देवेशि दीक्षा निर्वाणगामिनी
निष्कलेन मया ख्यातंशून्येनैव तथा पुनः ४३
प्रशान्तेन समाख्यातं तत्वेनैव तथैव च
अकथ्येयमिदं शुद्धं गोपनीयं प्रयत्नतः ४४
एवं वै यो न जानाति न हि मोचयते पशुम्
न चासौ देशिकः प्रोक्तो न च योज्यः शिवाध्वरे ४५
इति निश्वासकारिकायां दीक्षोत्तरे शिवयागपटलः
एकादशः

ईश्वरः
अतः परं प्रवक्ष्यामि सकलं परमेश्वरि
यस्मिन् प्रतिष्ठितं सर्वं त्रैलोक्यं स चराचरम् १
सिद्धयो विविधाश्चैव यस्मिन् देवि प्रतिष्ठिताः
स ज्ञेयस्सकलो देवो वर्णरूपधरः प्रभुः २
सितरक्तञ्च कृष्णञ्च कपिलं नालमेव च
पीतस्वच्छकपोतञ्च शबलं कर्बुरं तथा ३
मूर्धा चतुः पञ्चवक्त्रं दशबाहुं त्रिलोचनम्
सर्वायुधधरं शंभुं जटाभारविभूषितम् ४
पद्मासनस्थं देवेशं ध्यायेत्सकलविग्रहम्
सर्वसिद्धिकरं देवं साधकानां न संशयः ५
उत्तिष्ठे चा ++ त ++ र्वामे च पादलेपाञ्जने तथा
गुळिकाकाशगमने दन्तकाष्ठपरित्रके ६
सर्वसिद्धिकरं देवं मनसा यद्यदीप्सितम्
सर्वं संपद्यते सम्यक् जपतः सकलं प्रिये ७
ध्यायतः सकलं देवं तस्य सिद्धिर्न दूरतः

पूजयेत्सकलं देवं जपेत्सकलनिष्कलम् ८
ध्यायेज्ज्योतिर्मयं सूक्ष्मं कलाभिन्नन्तु तर्पयेत्
पूजयेच्छकलं देवं शिरः पाण्यादिभिर्युतम् ६
पञ्चमूर्ध्नि तु संयुक्तं पूजाकाले सदा स्मरेत्
जपकाले सदा देवं कुर्याच्छकलनिष्कलम् १०
सकलं मन्त्ररूपन्तु कलारूपन्तु निष्कलम्
ध्यायेज्ज्योतिर्मयं सूक्ष्मं रक्तं पीतं सितासितम् ११
एवं ध्यानपरो भूत्वा योगसिद्धिमवाप्नुयात्
तर्पणे सर्वमन्त्राणां स्वाहाकारसमन्वितम् १२
वौषट्कारवषट्कार सुवौषट्कारमेव च
हुंकारः फट्कृतश्चैव द्विरभ्यस्तं भवेदिव १३
सुवषट्स्वाहा नमश्चैव ज्ञात्वा कर्मणि योजयेत्
स्वाहाकारे यदाभिन्नो प्रतिष्ठा नाम सा कला १४
हुत्वा मात्रनिवृत्तिश्च प्रतिष्ठादि सभेदिता
विद्याबिन्दुसमायुक्ता शान्तिस्तु स विसर्गतः १५
तर्पणं सर्वमन्त्राणां कथितं तव शोभने
साधकानां हितार्थाय शिवेन कथितं पुरा १६
विपरीता कला या तु मरणोच्चारने स्मृता
उच्चाटने च विद्वेषस्तंभने च प्रयोजयेत् १७
सकलं देवदेवेशि कथितन्तु समासतः
पञ्चतत्वमयं देवं सर्वतत्वमयं तथा १८
सर्वभूतमयञ्चैव सर्वतः पर्यवस्थितम्
यस्मिन् यस्मिंश्च देवेशि ज्ञायते सु परिस्फुटम् १९
तदहं संप्रवक्ष्यामि तन्मे निगदतः शृणु
सप्ततत्वपरं देवि तत्वमेकादश प्रभुम् २०
षोडशावयवमात्मानं एकविंशात्मकं प्रभुम्

षट् त्रिंशात्मा तु विज्ञेयं कलातत्वं स एव तु २१
मातृकात्मा तु विज्ञेयमेकाशीति पदात्मकम्
मन्त्रात्मा तु स विज्ञेयो भुवनाध्वा स एव तु २२
पञ्चविंशः स विज्ञेयः सांख्यानां परमेश्वर
षट् त्रिंशकस्सविज्ञेयः ईश्वरः परमेश्वरः २३
वेदान्तविदुषैश्चैव गीयते परमेश्वरः
पञ्चरात्रं तु तत्वज्ञैः स एव परिकीर्तितः २४
वैमलाकारकश्चैव तथा पाशुपताश्च ये
बौद्धश्चार्हताश्चैव न्यायवैशेषिकास्तथा २५
इतिहासपुराणज्ञा धर्मशास्त्रपरायणाः
सर्वे मोक्षविदो देवि स्वसंज्ञाप्रतिपादिताः २६
सेवन्ते देवदेवेशं वेदवेदाङ्गपारगाः
स एव कथितो हंसः सकलः परमेश्वरि २७
तिष्ठते देवदेवेशि सकलः कलसंयुतः
शक्तिनादार्धचन्द्रश्च बिन्दुदेवस्तथैव च २८
अकारश्च उकारश्च वर्णस्सकलस्मृतः
एष देहे समाख्यातः सकलस्य विनिर्णयः २९
अथवाचान्यभेदेन सकलः परमेश्वरः
कथयेद्देवदेवस्य तन्निबोध समासतः ३०
विकारः प्रथमः प्रोक्त अकारस्तद्द्वितीयकः
उकारस्तु तृतीयस्तु मकारस्तु चतुर्थकम् ३१
पञ्चमो बिन्दुनादस्तु ईकारः षष्ठ उच्यते
एभिर्वर्णैर्यदा हीनं निष्कलं परमेश्वरम् ३२
अकारेण भकारेण इकारेण तु शोभने
त एते संस्थितैकस्थो हुकारः परिकीर्तितः ३३
तुष्टा या तु यदा युक्तो मकारः परिकीर्तितः

यदा बिन्दुगतो शंभुः नासिकायां प्रवर्तते ३४
ककारान्तं विजानीयात् तिरोधयति योगिनाम्
नाभिवर्णैर्यदा हीनं तदा शून्यं विनिर्दिशेत् ३५
आकारश्च हकारश्च ईकारस्सह संयुतः
अकारः कथितो देवि बिन्दुनादपरे स्थितः ३६
तस्यापि परतरेणैव शक्तिस्तु परिकीर्तिता
शक्त्यतीतं यदा देवि किञ्चिच्छेषमवस्थितम् ३७
व्यापिनी सा विनिर्दिष्टा सार्णो यद्वत्पिपीलिका
सकलानुग्रहेणैव कथितं तव शोभने ३८
सकलाल्लभते सर्वं यत्किञ्चिद्भुवि दुर्लभम्
एष देवि समाख्यातो देहे यस्मात्प्रतिष्ठिता ३९
य योगेन समायुक्तः उच्चारः स तु कीर्तितः
देहयुक्तस्तु देवेशे सकलः परिपठ्यते ४०
ब्रह्माविष्णुस्तथा रुद्र ईश्वरश्च सदाशिवः
ईकारसहसंयुक्तं देहं तस्य वरानने ४१
एतत्त्यक्तो पदात्मा तु निष्कलस्स तु पठ्यते
कथितं पूर्वसूत्रे तु तत्त्वया विदितं पुरा ४२
स्वयं निष्क्रमते देवो देहं त्यक्त्वा स मारुतः
निष्कलस्स समाख्यातो वेदितव्यः सुशोभने ४३
पञ्चदेवविनिर्मुक्त आत्मानं यत्तु विन्दति
आत्मज्ञानेन संयुक्तो गच्छते स सदाशिवे ४४
ऊर्ध्वगामी कलाह्येका कलाशक्तिचतुष्टयम्
व्यापिन्या तु यदायुक्तं षड्वर्णरहितश्शिवः ४५
शुद्धस्फटिकसंकाशं विद्युत्कोटिसमप्रभम्
असंख्यानञ्च सूर्याणां उदितोदितसुप्रभम् ४६
ऊर्ध्वगामी तदेतद्धि कथितं तव शोभने

तत्स्थाने तु यदाह्यात्मा तद्रूपः प्रतिभाति सः  ४७
सूक्ष्मा नाम कला या तु शुद्धस्फटिकनिर्मला
तस्यां मध्ये तदाह्यात्मा तद्रूपः प्रतिभाति सः  ४८
अमृता नाम कला या तु अनेककिरणप्रभा
तस्मिंस्थाने तदाह्यात्मा तद्रूपप्रतिमो भवेत्  ४९
अमृतामृतेति या प्रोक्ता तस्या रूपं यथा शृणु
चन्द्रातपप्रतीकाशा अमृतं स्रवते सदा  ५०
अमृतामृतेति सा प्रोक्ता कलाशक्तिचतुर्थिका
तत्स्थाने तु तदाह्यात्मा तद्रूपः प्रतिभाति सः  ५१
एतत् षड्वर्णमुद्दिष्टं मया ते वरवर्णिनी
एभिर्वर्णैर्यदा हीनं षड्वर्णरहितश्शिवः  ५२
एवं ज्ञात्वा वरारोहे देशिकः पाशहा भवेत्
षट्पदार्थमिदं ज्ञानं कथितं परमेष्ठिना  ५३
एतत्स्थानवरं दिव्यं ज्ञात्वाह्यात्मा प्रकीर्तितः
येन येन च ते तत्तद् भावाभावमवाप्नुयात्  ५४
स्फटिकोपलवद्देवि आत्मा तु परिकीर्तितः
यद्यद्रूपेण संयुज्येत् तद्रूपं प्रतिभाति च  ५५
रूपवर्णविनिर्मुक्तः करणेन्द्रियवर्जितः
तस्मात्करणसंयुक्तो बध्यते मुच्यतेति च  ५६
बुध्यमानो परो भूत्वा ज्ञानयज्ञं स विन्दति
ज्ञानेन तल्लयं ज्ञेयं ज्ञेयं सर्वगतो भवेत्  ५७
ज्ञानज्ञेयः सदाह्यात्मा ज्ञात्वा मुच्येत मोचयेत्
ज्ञात्वा ह्यात्मा विनिर्दिष्टो ज्ञानज्ञेयं स जानते  ५८
विदित्वा मुच्यते जन्तुः संसारभवनन्धनात्
एवन्ते ज्ञानमाख्यातं षड्वर्णं परमेश्वरि  ५९
एतेषां परतो देवि अरूपाख्यो निरामयः

न तस्य शक्यते वक्तुं पारंपर्येण संस्थितम्  ६०
तं विदित्वा महादेवि दीक्षकस्स गुरुर्भवेत्
ज्ञानविज्ञानवान् सो हि मोचकस्स गुरुस्सदा  ६१
स चानुग्रहकर्ता च पाशहा देशिकोत्तमः
ब्रह्मादयस्मृतास्ते तु ये रूपाः कथिता मया  ६२
व्यापिनी तु पराशक्तिः सर्वतत्वप्रबोधिकाम्
एतद्देवि मया ख्यातं तत्वं परमदुर्लभम्  ६३
त्वया गुह्यतरं कार्यं  न दद्याद्यस्य कस्यचित्
सकलं निष्कलञ्चैव तथा सकलनिष्कलम्  ६४
ब्रह्माविष्णुस्तथा रुद्रस्त्रिभिस्तु सकलस्मृतः
बिन्दुदेवं परं तत्वं ज्ञेयं सकलनिष्कलम्  ६५
सदाशिवं महात्मानं विज्ञेयं निष्कलं शिवम्
आत्मतत्वे त्रयो देवा विद्यातत्वे तथैव च  ६६
शिवतत्वेऽथवा देवि विज्ञेयस्तु सदाशिवः
शक्तिस्तु परमा देवि त्रितत्वपरमा स्थिता  ६७
सर्वतत्वपदातीतः तत्वानां योऽव्ययः परः
तस्मात्सर्वमिदं देवि ततो सर्वमिदं ततम्  ६८

इति निश्वासकारिकायां दीक्षोत्तरे सकलविचारो नाम
द्वादशः पटलः

देव्युवाच
भगवन् श्रोतुमिच्छामि सकलस्य विनिर्णयम्
व्याप्तिर्बहुविधा प्रोक्ता समया नावधारिता  १
पञ्च देवमयं देवं कथं नु सकलः प्रभुः
सर्वतत्वमयञ्चैव सर्वभूतमयं कथम्  २
सप्त तत्वधरं देवं तत्वमेकादशात्मकम्

षोडशावयवात्मानं एकविंशात्मकं कथम् ३
षट्त्रिंशात्मकमेवोक्तः कलातत्वस्स एव तु
मातृकात्मेति यत्प्रोक्तं एकाशीति पदात्मकम् ४
मन्त्रात्मा सर्वमन्त्राणां भुवनाध्वा स एव तु
पञ्चविंशस विज्ञेयः षड्विंशकस्तथैव च ५
वेदान्तवादिनो देवस्त्वमेव परमेश्वरम्
पाञ्चरात्रिकतत्वज्ञः स एव परमं पदम् ६
वैमलाकारकाश्चैव तथा पाशुपताश्च ये
सर्वेषु संस्थितं देवं सकलः परमेश्वरः ७
बौद्धाश्चैवार्हताश्चैव न्यायवैशेषिकास्तथा
इतिहासपुराणज्ञा धर्मशास्त्ररताश्च ये ८
सर्वमोक्षविदो ये तु वेदवेदाङ्गपारगाः
सेवन्ते देवदेवेशं सकलं परमेश्वरम् ९
एतदेव त्वया प्रोक्तं न मया विदितः प्रभो
सर्वमेतदशेषन्तु विस्तरेण ब्रवीहि मे १०
स्वकीयान्तत्र युक्त्या तु ब्रूहि देव सविस्तरम्
ईश्वरः
शृणु देवि प्रवक्ष्यामि सकलस्स विनिर्णयम् ११
अनुक्रमेण वक्ष्यामि चोदितस्तु यथा त्वया
पञ्च देवमयं देवि ब्रह्मविष्णुमहेश्वराः १२
ईश्वरञ्च तथा प्रोक्तं तथा देवं सदाशिवम्
पञ्च देवा स्मृता ह्येते सर्वतः पर्यवस्थिताः १३
अकारं ब्रह्मदेवत्यं मकारं रुद्रदेवतम्
ऊकारं विष्णुदेवत्यं बिन्दुदेवं तथेश्वरम् १४
नादरूपी तु यत्तस्य विज्ञेयन्तु सदाशिवम्
सकलं निष्कलञ्चैव कलाढ्यं शून्यमेव च १५

खमलं क्षपणञ्चैव क्षयं कण्ठोष्ठ्यमेव च
एते भूतास्समाख्याताः करणैः सहसंयुताः १६
विकाराषोडश प्रोक्ताः सप्तप्रकृतिसूक्ष्मगाः
गुणत्रयं तथा देवि भूतात्मकमिदं स्मृतम् १७
भूताः प्रकाशमायान्ति तेन भूतात्मका स्मृताः
भूतैः परिवृता यस्मिन् करणाशेषशोभने १८
एतद्भूतात्मकं सर्वं कथितं तव शोभने
विद्या चेश्वरमाया च कालो नियतिरेव च १९
पुरुषः प्रकृतिश्चैव सप्तैते कथितानि तु
ईश्वरस्तु शिरश्चैव विद्यादक्षिणरेखिणी २०
मायावामेन विज्ञेया त्रिलोका च संस्थितः
नियतिः कालोऽधस्तात्तु बोद्धव्यमनुपूर्वशः २१
पुरुषं वक्त्रदेशे तु तस्याधः प्रकृतिस्थिता
सप्ततत्वधरं देवमेष ते समुदाहृतम् २२
तत्वमेकादशात्मेति यदुक्तं हि मया पुरा
शृणुष्वावहिता देवि कथयामि तवाखिलम् २३
सप्ततत्वोपरिष्ठात्तु ज्ञेयं तत्वं सदाशिवम्
उपरिष्टाच्छिवं तत्वमूर्ध्वशक्तिप्रतिष्ठितम् २४
व्यापिनी तु परा तस्य तत्वमेकादशात्मकम्
षोडशावयवात्मानं यदुक्तं हि मया पुरा २५
कखाख्या षोडशा देवि ज्ञातव्या देशिकेन तु
तृटिर्लवं निमेषस्तु कलाकाष्ठा मुहूर्तता २६
रात्र्यहः पक्षमासर्तु अयनं वत्सरं तथा
युगं मन्वन्तरं कल्पं महाकल्पस्तथैव च २७
षोडशावयवं ह्येतत् कालस्सप्तदश स्मृतः
षट् त्रिंशात्मेति यत्प्रोक्तं शृणु तस्य वदाम्यहम् २८

पृथिवीमादितः कृत्वा प्रधानान्तं तु सुव्रते
चतुर्विं शति तत्वं हि पुरुषं पञ्चविंशकम् २९
षड्विंशत्कस्तु नियतिः कालः सप्ताधिको भवेत्
अष्टाविंशस्मृतं रागं विद्या ज्ञेया तथा परा ३०
ऊनत्रिंशस्तु विज्ञेयं देशिकेन महात्मना
त्रिंशतस्तु कलातत्वं कथितं हि शिवेन तु ३१
एकत्रिंशद्वरारोहे मायातत्वं प्रकीर्तितम्
द्वात्रिंशकस्मृता विद्या त्रयस्त्रिंशाधिकेश्वरम् ३२
सदाशिवं चतुस्त्रिंशत् पञ्चत्रिंशच्छिवास्मृता
शिवष्षट्त्रिंशमाख्याता शिवेन परमात्मना ३३
षट् त्रिंशात्मा समाख्यातो यथावत्तव शोभने
कला चतुर्थी सा ज्ञेया देशिकेन महात्मना ३४
प्रथमं पञ्चब्रह्माणमष्टत्रिंशत्क्रमात्स्मृतम्
सद्या कलाभिरष्टाभिः वामदेवस्त्रयोदशम् ३५
अघोरमभिचाष्टाभिः चतुर्भिर्वदनं स्मृतम्
ईशानं पञ्चधा देवि तस्य देहाद्विनिस्सृताः ३६
ब्रह्मादीन् पञ्चधा +++ पञ्च ब्रह्मा प्रकीर्तिताः
बिन्दुदेवे च चत्वारः कला देवि वदाम्यहम् ३७
निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिस्तथैव च
कलाह्येतास्तु चत्वारः स एव परमेश्वरः ३८
नादस्य याः कला प्रोक्ता शक्त्या याश्च महेश्वरि
सूक्ष्मासूक्ष्मतरैर्भावैः सकलः परमेश्वरः ३९
कलातत्वं सचैवेह कथितं तव शोभने
मातृकात्मेति यत्प्रोक्तं मया ते सुरसुन्दरि ४०
अकारादिक्षकारान्ता मातृका परिकीर्तिताः
स कामस्य तु देवेशि देहो ज्ञेयास्सदा बुधैः ४१

प्रणवे संस्थिता तस्मिन् ज्ञातव्या तु वरानने
एकाशीति पदात्मे तु यदुक्तं परमेश्वरि ४२
नव भेदविभागेन कथितं विदितं त्वया
मन्त्रात्मा तु क्रिया प्रोक्तः स एव परमेश्वरः ४३
कला षोडशमित्युक्तं सर्वतन्त्रेषु गीयते
ताभ्यो बिन्दुद्वयमन्ते ताभ्यां ते अलिकद्वयम् ४४
बिन्दुद्वयस्य मध्ये तु एकं मध्ये नियोजयेत्
द्वितीया बिन्द्वधस्तात्तु धस्तात्तु मन्त्रात्मा स तु कीर्तितः ४५
स जीवः सर्वमन्त्राणां कथितं तव शोभने
तेन सर्वमिदं देवि त्रैलोक्यं स चराचरम् ४६
व्यापितं परमेशेन नात्र कार्या विचारणा
तिर्यङ् मृतनराख्यानां स जीवः परिकीर्तितः ४७
तेन सर्वमिदं व्याप्तं पयसीव यथा घृतम्
सर्वेषामेव मन्त्राणां कथितं तव शोभने ४८
एतत् ज्ञानपरं देवि अविज्ञातं सुरैरपि
संज्ञेयस्सर्वमन्त्रेषु सर्वतन्त्रेषु शोभने ४९
उच्छ्वसेद्देवदेवेशं हंसः परमकारणम्
एष ते ज्ञानसद्भावं मन्त्रसद्भाव एव च ५०
मन्त्रसद्भावमित्युक्तं जीवसद्भावमुत्तमम्
गोपितव्यं प्रयत्नेन ज्ञानमेतत्सुदुर्लभम् ५१
अविदित्वा इदं देवि जीवसद्भावमुत्तमम्
नैव मन्त्राः प्रसिध्यन्ति जप्ताः कोटिशतैरपि ५२
गीयते सर्वलोकेषु जीवं परमदुर्लभम्
सुभाषितमिदं वाक्यं कला नार्हन्ति षोडशी ५३
यस्मात्परतरं देवि ज्ञानज्ञेयं वरानने
सर्वस्वं गोपितं ज्ञातं न ख्यातं यस्य कस्यचित् ५४

देयं दान्ताय शान्ताय गुरुभक्तरताय च
सर्वतन्त्रविधिज्ञाय साधकाय च धीमते ५५
अभिषिक्ताय दातव्यमाचार्यस्य महात्मनः
अन्यायै गृह्यते ये तु नाभिनन्दन्ति ये गुरुम् ५६
ज्ञेनं ज्ञेयं विदित्वा तु प्रायश्चित्तीयते नरः
तस्मात् ज्ञानं गुरुश्चैव अ+++++ वृते ५७
ज्ञानवित् तत्वविच्चैव शिवश्चैव वरानने
विभक्तिञ्चैव कुर्वीत परमेशेन भाषितम् ५८
एष ते कथितं देवि मन्त्रात्मा परमेश्वरः
विदित्वा सर्वकर्माणि कुरु देवि यथेच्छया ५९
सर्वतन्त्रेषु सामान्यं कथितं तव शोभने
नातः परतरं ज्ञानं सत्यं देवि वदाम्यहम् ६०
भुवनाध्वा स एवोक्तः सकलः परमेश्वरः
तत्प्रवक्ष्याम्यहं देवि संक्षेपान्न तु विस्तरात् ६१
पञ्चधा पञ्चदेवत्वं सकलं पर्यवस्थितम्
ते मया पूर्वमाख्यातं यथा तु विदितं त्वया ६२
अनन्तमादितः कृत्वा प्रधानान्ते च शोभने
ब्रह्मा तत्राधिपत्येन संस्थितं परमेश्वरि ६३
पौरुषमादितः कृत्वा कलातत्वमपश्चिमम्
विष्णुस्तत्वाधिपत्येन संस्थितं परमेश्वरि ६४
ग्रन्थ्या तु आदितः कृत्वा कलातत्वमपश्चिमम्
रुद्रस्तत्वाधिपत्येन संस्थितः परमेश्वरः ६५
विद्या तु आदितः कृत्वा यावत्तत्वं सदाशिवम्
ईश्वर आधिपत्येन संस्थितो नात्र संशयः ६६
उपरिष्टाच्छिवं तत्वं तत्र देवं सदाशिवम्
व्यापिनं पञ्चधा देवि भुवनाध्वमशेषतः ६७

पञ्चविंशति तत्प्रोक्तं मया पूर्वं वरानने
तदहं संप्रवक्ष्यामि तदेकाग्रमना शृणु ६८
परिसंख्यानुपूर्वेण संक्षेपात्कथयाम्यहम्
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ६९
कर्मेन्द्रियस्तथा पञ्च पञ्च बुद्धीन्द्रियाणि च
तन्मात्राणि तथा पञ्च कथितं तव शोभने ७०
बुद्धिर्मनस्त्वहङ्कारं प्रधानं सह संयुतम्
चतुर्विं शत्स्मृतं क्षेत्रं क्षेत्रज्ञः पञ्चविंशकः ७१
स एष परमो देवि क्षेत्रभुक् कारणं स्मृतम्
व्यक्ताव्यक्तविज्ञानाद् ज्ञात्वा मुच्यति बन्धनात् ७२
व्यक्ता बुद्धिस्समाख्याता अव्यक्ता प्रकृतिः स्मृता
ज्ञस्वभावो भवेदात्मा पुरुषं पञ्चविंशकम् ७३
तुर्यरूपस्वभावस्थं स एष परमं पदम्
निष्क्रियं तत्स्वभावेन अकर्ता कर्मणः प्रभुः ७४
कर्ता प्रधानमित्याहुः क्षययुक्तं गुणान्वितम्
एवं वदन्ति देवेशि षष्टितन्त्राध्ववादिनः ७५
महदादिक्रमेणैव भूतादिविधिवाचकैः
विषयेन्द्रियतन्मात्रैः गुणादिविधिवाचकैः ७६
प्रकृतिस्सा तु विज्ञेया भेदैर्नामाङ्गलक्षणैः
भोक्ता तु पुरुषः प्रोक्तः चिन्मात्रो गुणवर्जितः ७७
पञ्चविंशकमित्युक्तं सांख्यज्ञानार्थवादिभिः
निष्कलत्वेन मन्यन्ते सर्वज्ञं सर्वतोमुखम् ७८
निर्गुणं गुणसंयुक्तं चिन्त्यते सांख्यवादिभिः
इत्येतत्पौरुषं तत्वं सांख्यानां परमं पदम् ७९
अस्य दोषं शृणु देवि स्वसिद्धान्ते यथा भवेत्
यैर्बद्धः पशुतानैति अज्ञत्वञ्च प्रजायते ८०

भोक्तृत्वा नित्यता चैव अकर्ता निष्क्रयस्तथा
अर्थित्वं पारतन्त्रञ्च धर्माष्षट् पौरुषास्त्विमे ८१
भोक्ता यस्स अतृप्तस्तु मर्त्यधर्मा अनित्यता
निष्क्रयत्वादुदासीनो अकर्ता अज्ञता पुनः ८२
मध्यस्थता पराशीति पारतन्त्र्यदरिद्रता
धर्मा ह्येते स्मृतास्तस्य मातृकैः प्रतिपादिताः ८३
सर्वज्ञता न च तस्य निर्गुणत्वं न चैव हि
निष्कलत्वं न तस्यैव शक्त्याग्रकलना श्रुतः ८४
गुणैस्सुप्रतिबद्धस्तु मुक्तिस्तस्य न शाश्वति
किञ्चित्कालं भवेन्मुक्तिः प्रधानगुणबन्धनात् ८५
स्वाकयं भावं कला तस्य चैतन्येन समन्विता
रोगमानन्दभावेन विद्याह्यर्थविवेकिनी ८६
त्रिविधं बन्धनाख्यातं पुरुषस्य महात्मने
मायात्मकमिदं देवि अधोभागप्रवर्तकम् ८७
एष ते देवि आख्यातः सांख्यज्ञानस्वनिर्णयम्
सकलं व्यापयित्वा तु संस्थितं तन्तु सुव्रते ८८
षड्विंशेति यथा प्रोक्तं मया पूर्वं हि सुवृते
तदहं संप्रवक्ष्यामि तदेकाग्रमनाः शृणु ८९
कलाधस्तात्कर्मकला पुरुषः परिकीर्तितः
नराणां नयने सूक्ष्मे योगी नारायणेश्वरः ९०
सा निष्ठा वेदवादीनां योगिनाञ्च निगद्यते
स चैव पठ्यते तैस्तु षडूर्मिरहिता तनुः ९१
वदन्ते नैव जानन्ते अन्यार्थेन वदन्ति ते
अस्मिन्नेव शृणु देवि षडूर्मिरहितं यथा ९२
ब्रह्माविष्णुस्तथा रुद्रो ईश्वरश्च सदाशिवः
शक्तिना रहितं देवि षडूर्मिरहितं शिवम् ९३

मूलतत्वं समाख्यातं विज्ञानानन्दकारकम्
नेति नेति च हंसाख्यं परमं ब्रह्मवाचकम् ९४
इदं तत्परमं तत्वमिदं तत्परमं पदम्
इदं सा परमामुक्तिः या सा वेदविदो ध्रुवम् ९५
त्रिप्रकारेण भेदेन योगिभिः समुदाहृतम्
आत्मानमन्तरात्मानं परमात्मानमेव च ९६
एवं त्रिधा वदन्त्येव हंकारं तथापरे
बुद्धिमन्ये तथा देवि प्रधानगुणगोचरम् ९७
पञ्चविंशञ्च षड्विंशं वेदमन्ये तथा परे
बद्धा वदन्ति बहवः ऋषयस्संशितव्रताः ९८
एकं तत्सकलं देवमुपास्यं त्रिदिवौकसः
ऋषयो यक्षरक्षांसि पिशाचोरगकिन्नराः ९९
गन्धर्वासुरदैत्याश्च तथा विद्याधरादयः
सिद्धाश्चैव तथा देवि ये चान्ये भुवि मानवाः १००
ह्रस्वं दीर्घं कृशं सूक्ष्मं सूक्ष्मात्सूक्ष्मतरं तथा
स्थूलात्स्थूलतरं देवं कल्पयन्ति मनीषिणः १०१
अरूपं रूपवान् देवं कल्पयन्ति अनेकधा
हरितं कपिलञ्चैव मञ्जिष्ठः सगरेव च १०२
बभ्रुः पिङ्गः कपोतश्च धूम्रश्शबलकं तथा
श्यामं तदुलमान्त्रन्तु आपबद्धे च पुष्करे १०३
खद्योताभनिभञ्चैव तारामात्रं तथैव च
चन्द्रबिंबनिभं केचित् आदित्योदयसन्निभम् १०४
इन्द्रनीलनिभञ्चैव पद्मरागनिभं तथा
एवं बहुविधं देव सकलं परमेश्वरि १०५
सकलं सर्वविद्यानां आधारं परिकीर्तितम्
अस्मात्प्रभूयते सर्वमस्मिन्नेव लयः पुनः १०६

अस्मात्सिद्धिश्च मुक्तिश्च संस्थिता नात्र संशयः
उत्तिष्ठमादितः कृत्वा विद्वेषाकर्षणं तथा १०७
करोति साधकेन्द्रस्तु यस्तत्वं जपते सदा
किं तस्य बहुभिर्मन्त्रैः ज्ञातैस्तु वरवर्णिनी १०८
चिन्तामणिरिव परं तत्वं सकलं सर्वतोमुखम्
यागे यागे जपे होमे यथा सिध्यन्ति योगिनः १०९
यथा च यजनं कुर्यात् शृणु देवि समासतः
यागस्थं सकलं देवं शिरःपाण्यादिलक्षणम् ११०
त्र्यक्षं दशभुजं देवं सर्वायुधधरं तथा
एवं जपं तथा ध्यायन् पूजयेत्परमेश्वरम् १११
न रूपेण विना सिद्धिः तस्माद्रूपं विचिन्तयेत्
चिन्त्यमानस्य देवेशे सर्वविघ्नक्षयो भवेत् ११२
निर्विघ्नस्सिध्यते मन्त्री कथितं सर्वतो मया
योगकाले तथा देवि ध्यातव्यं सकलं प्रिये ११३
पूर्वमुच्चारयेत्तत्वं सकलं यत्प्रकीर्तितम्
बिन्दुस्थं शब्दलीनन्तु ज्योतीरूपं शिखान्वितम् ११४
ध्यानकाले तु योगिभिः ध्यातव्यं सकलं सदा
जपकाले जपं कुर्यात् एवं सकलनिष्कलम् ११५
नमस्कारस्य अन्ते तु ज्ञेयं बिन्दुद्वयं बुधः
बिन्दुद्वयात्परो देवि स वै निष्कलमुच्यते ११६
होमकाले यथा होमः कर्तव्यः साधकेन तु
स्वाहाकारसमायुक्तं होमकाले तु होमयेत् ११७
प्रतिष्ठा नाम सा ज्ञेया बिन्दुदेवकला प्रिये
तया होमविकल्पस्तु कर्तव्यन्तु सदा बुधैः ११८
++++ ने बिन्दुसमायुक्तं मन्त्रं कुर्याद्विचक्षणः
शान्त्यर्थे वौषडित्येवं पुष्ट्यर्थे नमसुवौषट् ११९

अमृतीकरणे चैव वषट्कारेण होमयेत्
मारणे ताडने चैव इच्छा देवि विचक्षणम् १२०
फट् फट् कारसमायुक्तं होमं कुर्याज्जपं तथा
एवं विज्ञाय कर्तव्यं जपयोगं समाधिना १२१
अन्यथा नैव सिध्येत कल्पकोटिशतैरपि
सकलं जपमानस्तु निष्कलं जपितं भवेत् १२२
निष्कलं जपते यस्तु सकलस्योपरि स्थितम्
अचिराद्देवि सिद्ध्येत परमेशेन भाषितम् १२३
नैव पुण्यं भवेत्तस्य नैव पापं कथञ्चन
कथितं स रहस्यन्तु न मया गोपितं तव १२४
त्वयापि देवदेवेशि गोपनीयं न संशयः
अन्याये पृच्छते यस्तु गुरु वुत्क्रान्तिगोचरम् १२५
तस्य देवि न दातव्या आज्ञैषा परमेश्वरी
धर्मशीलविनीतस्य गुरुभक्तस्य धीमते १२६
ज्ञानमेतत्प्रदातव्यं ममाज्ञापरिपालके
तस्माच्छ्रेयार्थिभिर्नित्यं पूजनीयो गुरुस्सदा १२७

इति निश्वासकारिकायां दीक्षोत्तरे सकलविचारो नाम
त्रयोदशः पटलः

ईश्वरः
अतः परं प्रवक्ष्यामि अधिवासनमुत्तमम्
तिथिनक्षत्रयोगाश्च इतरानुकूलमेव च १
तारा चन्द्रकलेनैव कुर्याद्भूमिपरिग्रहम्
पूर्वेण ब्रह्मणे कुर्यात् क्षत्रियस्योत्तरेण तु २
वैश्यस्य वसुधा पीता कृष्णा शूद्रस्य कीर्तिता
ब्राह्मणे मधुरास्वादा कषाया क्षत्रियस्य तु ३

वैश्यस्य षड्ड्रसा ज्ञेया शूद्रस्य कटुका स्मृता
आज्यगन्धाद्विजे भूमीरक्तगन्धातु क्षत्रिये ४
धान्यगन्धाविशे भूमी शूद्रस्य क्षारगन्धिनी
परीक्ष्य निपुणो भूमिं वारयोगविधानवित् ५
पूजयित्वा विधानज्ञो रिक्तां राशिगणैस्सह
होराद्द्रेक्काणि अंशाश्च तारा चैव बलाबलम् ६
लौकिकं धार्मिकाश्चैव कलज्ञानविचक्षणः
यदि स्याल्लौकिको देवि कालज्ञानं न जानति ७
तदात्वाध्यात्मिकं कालं परीक्षेत विचक्षणः
ततस्संपूज्य देवेशं लक्षयेच्च क्रमाद्बुधः ८
दिव्यान्तरिक्षभौमानि प्रश्नान्तरिनितराणि च
लक्षयित्वा विधानेन आचार्यस्सुसमाहितः ९
शुद्धदुन्दुभिनिर्घोषैः वेदशब्दादिमङ्गलैः
गीतवाद्यरवोद्घोषं जयशब्दसमन्वितम् १०
सिंहनादरवञ्चैव कुमारीजनक्रीडनम्
भौमान्येतानि शब्दानि अन्तरिक्षाः प्रकीर्तिताः ११
मेघस्तनितनिर्घोषं मेघसञ्जनमंबरम्
स्निग्धविद्युल्लतारम्यं सर्वसंपत्करं शुभम् १२
प्रशान्तानि तु गृह्णीयात् अप्रशस्तानि वर्जयेत्
काकवृद्धचलोलूकश्वानमार्जारकूजितम् १३
अष्ट्रगर्दभशब्दानि वानरं ऋक्षसूकरम्
एतेषाञ्चैव यश्शब्दप्रशस्तन्तु शोभने १४
पूजति ग्रहचक्रे तु सङ्क्रमाद्गृह्य यत्नतः
खातयेज्ञानुमात्रन्तु पांसुमुद्धृत्य पूरयेत् १५
पांसुरभ्यधिको यत्र सा भूमिः सर्वकामदा
ज्ञात्वा भूमिर्विधानज्ञो वास्तुयागं यजेबुधः १६

विद्याङ्गावरणं यष्ट्वा हुनेदष्टशतं क्रमात्
वास्तुयाग स्मृतो ह्येषः ततो भूम्यां विशोधनम् १७
शोधयित्वा ततो भूमिं कीटकेशास्थिवर्जिताम्
सेचयेत्पञ्चगव्येन तां भूमिं सुपरीक्षिताम् १८
प्रशस्ततरमुद्धृतैः पलाशाश्वथमुद्गरैः
कोष्टयेत् सुदृढां भूमिं निम्नोन्नतविवर्जिताम् १९
पर्वोत्तरप्लुवा कार्या यागभूमिस्सुशोभना
समं सर्वत्र कर्तव्यं भूमिभागमिदं सुभम् २०
एवं कृत्वा विधानेन परितः परिवारयेत्
पुरुषाया न कर्तव्यमिष्टकं मृण्मयञ्च वा २१
द्वारमेकन्तु कर्तव्यं सकवाटार्गलान्वितम्
एवं कृत्वा ततो देवि विष्णुभूमिपरिग्रहम् २२
गणायागं यजेदादौ ततो भूमिपरिग्रहम्
पञ्चाङ्गञ्च शिवं यष्ट्वा जुहुयादष्टशतं क्रमात् २३
गणयागे त्रिकोणन्तु मण्डलं पद्मलाञ्छितम्
पीठोङ्कारसमायुक्तं पूजयेत गणेश्वरम् २४
वास्तुयागे चतुष्कोणं मध्ये पङ्कजभूषितम्
भूम्यां परिग्रहो ह्येष कथितं तव शोभने २५
अधिवासनं ततः कुर्यात् शास्त्रदृष्टेन कर्मणा
संभारैः संभृतो मन्त्री अधिवासनमारभेत् २६
अष्टौ तु कलशान् कुर्याद्दिशासु विदिशासु च
एवं विन्यस्य यत्नेन शिवाख्यं कलशं न्यसेत् २७
हेमजं ताम्रजं वापि ऋग्मजं वापि कारयेत्
अथवा मृण्मयं वापि कारयेत विचक्षणः २८
अकालमूलकलशाश्चन्दनेनोपलेपितम्
सुसुगन्धैस्तथा गन्धैः कण्ठसूत्रविभूषितम् २९

अक्षतैः पञ्चगव्येन धूपैर्गन्धैस्तथैव च
आसनं कल्पयेत्तत्र ईशान्यादिशमाश्रितम् ३०
कलशं स हिरण्यन्तु मूर्तिना सह संयुतम्
पञ्च ब्रह्म न्यसेत्पूर्वं अष्टत्रिंशत्कलां ततः ३१
पृथिवीमादितः कृत्वा तत्वानि परिकल्पयेत्
एवं विन्यस्य तत्वानि त्रितत्वांस्तु त्रिधा न्यसेत् ३२
विद्याङ्गानि ततो दद्यान्नेत्रादि क्षुरिका न्यसेत्
एवं विन्यस्य यत्नेन शिवस्यावाहनं कुरु ३३
सद्येनावाहयेद्देवं वामदेवेन स्थापयेत्
अघोरेण तु सान्निध्यमर्घ्यं तत्पुरुषेण तु ३४
ईशानेन तु पुष्पाणि शिवस्य परिकल्पयेत्
हृदये हृदयं दद्यात् शिरःशिरसि विन्यसेत् ३५
शिखायान्तु शिखा दद्यात् कवचं सर्वगात्रिकम्
अस्त्रं हस्तप्रदेशे तु विन्यस्य परमेश्वरि ३६
एवं विन्यस्य देवेशि चिन्तयेच्छिवमव्ययम्
मन्त्रातीतं परं देवं तत्वातीतं परं पदम् ३७
अनेन विधिना पूज्य सकलं परमेश्वरि
अस्त्रं जप्त्वा ततो देवि विकिरान् सर्वतो दिशि ३८
विकिरेन्मन्त्रविच्चैव पञ्चगव्यं ततः पुनः
गन्धोदकेन संशोध्य कलशं भ्रामयेत्ततः ३९
वर्धन्यामस्त्रजप्तायां जपन्नस्त्रन्तु भ्रामयेत्
अच्छिन्नोदकधारान्तु दद्यात् बाह्ये तु मन्त्रवित् ४०
चतुरस्त्रं तस्य मध्ये तु दर्पणञ्चैव बाह्यतः
वर्धनीमग्रतो गच्छेत् कलशं तस्य पृष्टतः ४१
शिवन्तु जपतश्चैव आचार्येण समन्वितः
भ्रामयित्वा ततो देवि पुनस्तत्रैव स्थापयेत् ४२

स्थापयित्वा ततो मन्त्री अर्घ्यं दद्यात्ततः पुनः
स्थण्डिलन्तु ततो गच्छेद् विधिना पूजयेत्ततः ४३
शिवं पूज्य ततो देवि गच्छेन्मन्त्र्यनलं पुनः
आग्नेय्यां दिशि आश्रित्य अग्निकुण्डन्तु कारयेत् ४४
हस्तमात्रप्रमाणन्तु कुण्डं कुर्यात्त्रिमेखलम्
चतुरङ्गुलमेकैका ह्रस्वा ह्रस्वतरा स्मृताः ४५
एवं कृत्वा विधानेन प्रोक्ष्यास्त्रेण विचक्षणः
उल्लेखनन्तु तेनैव उद्धृत्याभ्युक्षयेत्पुनः ४६
अवकुण्डन्तु अस्त्रेण गायत्र्यावोपलेपयेत्
उपलेपिते तु पश्चात् कुर्याद्रेखोपकल्पनम् ४७
रेखत्रयन्तु कर्तव्यं पूर्वपश्चिमतश्शुभम्
एका उत्तरतः कार्या दाक्षिणायतमुत्तरा ४८
वज्र एष समाख्यातो द्रढीकरणमुत्तमम्
विष्टरं कुण्डमध्ये तु वागीश्वर्याः प्रकल्पयेत् ४९
नीलोत्पलदलश्यामां ध्यात्वा रूपवतीं शुभाम्
तस्मिन् ततो मन्त्री ऋतुमतीं विचिन्तयेत् ५०
ताम्रपात्रे शरावे वा आनयेज्ञातवेदसम्
अभ्यर्च्य पञ्चभिर्मन्त्रैः विद्याङ्गैश्च यथाक्रमम् ५१
अवकुण्ठनं तु कर्तव्यं कवचेन विचक्षणः
त्रिधा कुण्डन्तु तं भ्राम्य हृदयेन विधानवित् ५२
प्रक्षिपेद्योनिमार्गेण हेतिभूतं विचिन्तयेत्
गर्भाधानं प्रतिमन्त्री सद्येन तु त्रिधाहुतिः ५३
पुं प्रशान्ते त्रयं दद्यादाहुतीनान्तु मन्त्रवित्
अर्घ्यं पाद्यं ततो दद्याद्गर्भाधानं कृतं भवेत् ५४
वामे पुंसुवनं कार्यं दद्यान्मन्त्री त्रयाहुतिः
रुद्राण्या तु त्रयं दद्यात् कृतं पुंसुवनं भवेत् ५५

अघोरेण त्रयं दद्यात् सीमन्तोन्नयनं बुधः
त्रयो ब्रह्मशिरेणैव अर्घ्यं पाद्यं ततः पुनः ५६
वक्त्रपञ्चकसंयुक्तं वक्तृनिष्कृतिमेव च
वक्त्रोद्घाटन्तु कुर्यादानुपूर्वेण मन्त्रवित् ५७
सद्याद्या ईशपर्यन्तं दद्यादाहुतयस्त्रयः
एकेनैव तु मन्त्रेण जुहुयान्नत्र संशयः ५८
अस्त्रेण निष्कृतिं कुर्यात् वक्त्राणान्तु वरानने
आहुतीनां त्रयं दद्यात् वक्त्रे वक्त्रे न संशयः ५९
उद्घाटन्तु तत्वेन दद्याद्वै आहुतित्रयम्
उद्घाटिते ततो वक्त्रे जातकर्मन्तु होमयेत् ६०
आहुतीनां त्रयं मन्त्री दद्यात्तत्पुरुषेण तु
अस्त्रेणैव त्रयं दद्यात् आहुतीनां वरानने ६१
एवं हुते ततो मन्त्री जातकर्म कृतं भवेत्
जातकर्म कृते पश्चाद् रक्षां कुर्याद्विचक्षणः ६२
पूर्वेण ब्रह्मा तत्रैव विन्यसेत्
दक्षिणे रुद्रदेवत्यं कल्पयेद्विष्टरोपरि ६३
पश्चिमे विष्णुदेवत्यं कल्पयेत स विष्टरम्
उत्तरेण शिवस्यैव कल्पयेत यथाक्रमम् ६४
एवं कृत्वा ततो मन्त्री नामकर्मन्तु कारयेत्
ईशानेन तु होतव्यं नामकर्म विचक्षणः ६५
कवचेन तथैवेह जुहुयादाहुतित्रयम्
हुत्वा ह्येवं ततो देवी शिवाग्निर्जनितो भवेत् ६६
संस्कारसिद्धिहेत्वर्थं पूर्णाहुत्या तु पातयेत्
संस्कारेण यदा शुद्धं अग्निमाहुत्य सुवृते ६७
++ चरुं श्रुपेत मन्त्रज्ञा विधिदृष्टेन कर्मणा
साङ्गेन देवदेवेन पञ्चब्रह्मयुतेन च ६८

सकलीकृत्य मां स्थालीं शिवं तत्रैव विन्यसेत्
त्रितत्वं विन्यसेत्पूर्वं शिवं तत्वात्तु विन्यसेत् ६९
घृतदिग्धान्तु तां कृत्वा क्षीरपूर्णाञ्च कारयेत्
यवगोधूमनीवारैश्शालिषष्टिकतराडलैः ७०
कङ्गुनावाथ कुर्वीत चरुकं सुसमाहितः
मध्यमं पाकसंयुक्तं पाचयेत विचक्षणः ७१
यदा स्विन्नं विजानीयात् तदा तमवतारयेत्
चालनं घट्टनालेपं कुर्यादेकादशेन तु ७२
तप्ताभिघारणञ्चैव तथा भूताभिघारणम्
एकादशात्मदेवेन जुहुयादाहुतित्रयम् ७३
संपाताभिर्हुतञ्चैव कृत्वा मन्त्री विचक्षणः
त्रिभागभाजितं कृत्वा चरुकं मन्त्रसंस्कृतम् ७४
भागं देवाय कल्पेत द्वितीयं होमकर्मणि
तृतीयं साधकेभ्यश्च पञ्चगव्यपुरस्सरम् ७५
विधिना कल्पितं देवि दद्याद्वक्त्राभिमन्त्रितम्
गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम् ७६
अभिमन्त्र्य सर्वमन्त्रैस्तु अमृतत्वं शिवेन तु
पञ्चगव्यन्तु कर्तव्यं विधिनाऽनेन सुवृते ७७
आशु शुद्धिमतो वक्ष्ये शृणुष्व कथयामि ते
आज्याधिश्रयणं कुर्यादुद्वास्योप्लवनं ततः ७८
संप्लावनं ततः पश्चात् कुर्याच्चाप्यवद्योतनम्
नीरायणं ततः कुर्यात् आज्यशुद्धे विधानवित् ७९
गायत्र्या कारयेत्सर्वमाज्यसंस्कारकं शोभने
संस्कारैश्शोधिते आज्ये आज्यभागन्तु होमयेत् ८०
दक्षिणेनोत्तरेणैव मध्यदेशे तथैव च
ओं अग्नये नमः । ओं सोमाय नमः । ओमग्नीषोमाभ्यां

नमः । ओमग्नये स्विष्टकृते नमः ।
आज्यभागविभागन्तु कथितं तव शोभने ८१
शुद्धे आज्ये ततो मन्त्रं बिन्दुं बिन्दुन्तु प्रक्षिपेत्
आज्यशुद्धिविधिर्ह्येषः कथितन्तु यथाक्रमम् ८२
आज्ये शुद्धे ततो देवि कुर्याद्वक्त्राभिघारणम्
सद्यादि ईशपर्यन्तमेकैकाहुतयो हुनेत् ८३
वक्त्राभिघारणं ह्येष कथितं वै शिवेन तु
अनेन सर्वकर्माणि कर्तव्यानि तु देशिकैः ८४
आज्याधिश्रयणे ब्रह्मा पूर्वं तत्रैव चिन्तयेत्
उद्वासने तु गायत्री उत्प्लवने विष्णुदैवतम् ८५
संप्लवे चैवमित्युक्तं रुद्रं तत्रैव चिन्तयेत्
अवद्योतस्वरो ज्ञेयो देशिकेन महात्मना ८६
निरात्मने तथा देवि स्वयं देवस्सदाशिवः
अभिमन्त्र्य समन्त्रैस्तु शिवं तत्रैव चिन्तयेत् ८७
सावित्र्या बिन्दुबिन्दुन्तु सर्वमाज्येषु प्रक्षिपेत्
कर्ममन्त्रप्रयोगेन अधिदेवैश्च संयुतम् ८८
सर्वकर्मप्रसिध्येत साधकस्य न संशयः
आसनं कल्पयेत्तत्र विधिदृष्टेन कर्मणा ८९
हृन्मध्ये कल्पयेद्देवि आसनं तव संज्ञितम्
अनन्तं विन्यसेत्पूर्वं धर्मज्ञानं तथैव च ९०
नवशक्तिं तथा देवि कर्णिकापद्मसन्धिषु
अकारं विन्यसेद्देवि कर्णिकायां वरानने ९१
आदित्यमण्डलं तेन चिन्तयेत्सुसमाहितः
ह्रस्वोङ्कारसमायुक्तं सोममण्डलकल्पितम् ९२
उकारो ह्रस्वं देवेशि अग्निमण्डलमुत्तमम्
आकारं ब्रह्मदेवत्यमादित्यस्याधिदैवतम् ९३

इकारं विष्णुदेवत्यं सोममराडलदैवतम्
उकारं रुद्रदैवत्यमग्निमराडलदैवतम् ९४
एवं विन्यस्य यत्नेन मूर्तिं तत्रैव विन्यसेत्
ईश्वरेण समायुक्तं विन्यसेत वरानने ९५
बिन्दुस्तु ईश्वरो ज्ञेय आत्मा हंसः प्रकीर्तितः
न्यस्या तु देवदेवेशि पञ्च ब्रह्माणि विन्यसेत् ९६
आदित्यं सोममग्निञ्च न्यस्तमात्मनि सुवृते
आत्मतत्वे तु वक्तव्यमात्मा तु परमेश्वरि ९७
ईशानः पुरुषेणैव अघोरेण तु सुवृते
वामदेवेन सद्येन लक्षमात्रं प्रकीर्तितम् ९८
अष्टत्रिंशत् कलाभिस्तु शिरोवक्त्रन्तु कल्पयेत्
अङ्गप्रत्यङ्गसंयुक्तं कर्तव्यं सुसमाहितैः ९९
सद्योजातकलाभिस्तु स्थिरत्वं परिकल्पयेत्
पञ्चमूर्धानमीशेन पूर्वादारभ्य मन्त्रतः १००
क्रमेण कल्पयेद्देवि ईशानस्य कला बुधैः
वक्त्रे तत्पुरुषस्यैव कलानि परिकल्पयेत् १०१
पूर्वमादिक्रमेणैव सकलं मूर्ध्नि विन्यसेत्
अघोरस्य कलां देवि हृदयादिविनिर्दिशेत् १०२
हृदि ग्रीवा अंसौ च नाभौ च जठरे तथा
पृष्ठे ह्युरसि मन्त्रज्ञ अघोरस्य कला न्यसेत् १०३
वामस्य गुह्यदेशे तु विन्यसेत यथाक्रमम्
गुदे चैव तु लिङ्गे च ऊरुभ्यां जानुनी तथा १०४
जङ्घे स्फिजौ च कट्याञ्च पादपार्श्वौ च तावुभौ
गुह्याङ्गक्रमयोगेन वामदेवकला न्यसेत् १०५
पादौ हस्तौ च नासायां शिरश्चैव भुजावुभौ
सद्योजातकला देवि सद्यः सर्वत्र मूर्तिषु १०६

एवन्तु सकलीकृत्य तत्वानि परिकल्पयेत्
तत्वान्यष्टादशं देवि नवतत्वान्यथापि वा १०७
पञ्चतत्वानि देवेशे तथा षट्त्रिंशमेव च
पञ्चतत्वानि विन्यस्य त्रितत्वमुपरि न्यसेत् १०८
विद्याङ्गानि ततो दद्यात् शिवस्यावाहनं कुरु
आवाहिते ततो देवि अङ्गानि परिकल्पयेत् १०९
हृदये हृदयं दद्यात् शिरे चैव शिरो न्यसेत्
शिखायान्तु शिखां दद्यात् कवचं सर्वगात्रकम् ११०
अस्त्रं हस्तप्रदेशे तु विन्यसेत शुभानने
आवाहयेत सद्येन वामदेवेन स्थापयेत् १११
अघोरेण तु सान्निध्यमर्घ्यं तत्पुरुषेण तु
ईशानेन तु पुष्पाणि मकुटं कुण्डलानि च ११२
ईशानं मध्यतो दद्यात् पूर्वे तत्पुरुषं न्यसेत्
अघोरं दक्षिणेनैव वामदेवं तथोत्तरे ११३
सद्योजातन्तु देवेशे पश्चिमेन तु विन्यसेत्
आग्नेय्यां हृदयञ्चैव ईशान्यान्तु शिरो न्यसेत् ११४
नैर्ऋत्यान्तु शिखां दद्यात् वायव्यां कवचं तथा
अस्त्रं द्वारप्रदेशे तु विन्यसेत यथा बुधः ११५
गर्भावरणमेतत्तु द्वितीयावरणं शृणु
अनन्तं पूर्वतो दद्यात् सूक्ष्मं दक्षिणतो न्यसेत् ११६
शिवोत्तमं तथा देवं पश्चिमेन तु विन्यसेत्
एकनेत्रोत्तरेणैव विन्यसेत सदा बुधः ११७
ईशान्यामेकरुद्रस्तु त्रिमूर्तिं ह्यग्निगोचरे
श्रीकण्ठं नैर्ऋतेनैव शिखण्डिं वायुगोचरे ११८
द्वितीयावरणं ह्येवं कथितं तव शोभने
तृतीयावरणं देवि शृणुष्व कथयामि ते ११९

ऐन्द्रीन्तु दिशमाश्रित्य इन्द्राद्यास्तु यथाक्रमम्
एवं विन्यस्य यत्नेन चतुर्थेऽस्त्राणि विन्यसेत् १२०
यष्ट्वा एवं विधं देवि दीक्षां कुर्वीत मन्त्रवित्
पूर्वोक्तेन विधानेन कुर्वीत विधिविस्तरम् १२१
अपरेऽहनि देवेशे यजेच्छण्डेश्वरं गुरुः
पञ्चाङ्गेन समायुक्तमर्धचन्द्रपुरोत्तरे १२२
त्रिभागहोमं कृत्वा वै विज्ञाप्यैवं महेश्वरम्
समयाष्टकदोषस्य कृतं होमं मया तव १२३
एवं विज्ञापयेद्देवि देशिकस्तु महात्मनः
समयाष्टकदोषेण साधकेनैव लिप्यते १२४
हुते चण्डेश्वरे पश्चाद्गुरुपूजान्तु कारयेत्
पूजयेत्तद्गुरुं प्राज्ञो यथा विभवविस्तरैः १२५
ग्रामैर्हिरण्यगोश्वाद्यैः देशदानैस्तथैव च
कर्णिकाकटकेयूरैः पूजयेत सदा गुरुम् १२६
येन येन च सन्तुष्टः तत्तद्द्यात्तु देशिकः
निवेदयेत्तदात्मानं तदा तु निनृणो भवेत् १२७
सर्वसंहितसामान्यं कथितं तव शोभने
षड्विधं यजते यस्तु आचार्यः सुसमाहितः १२८
तेन तुष्टेन तुष्टास्तु अशेषभुवनाधिपाः
शिववत्पूजयेद्देवि आचार्यं तत्वपारगम् १२९
यथाहं तादृशस्सोहि गुरुस्तत्वविशारदः

इति निश्वासकारिकायां दीक्षोत्तरे अधिवासनः
पटलः चतुर्दशः

ईश्वरः
शरीरं सर्वजन्तूनां सर्वदेवमयं स्मृतम्

वेदितव्यं प्रयत्नेन साधकैस्तत्वचिन्तकैः १
तत्वानि चोदितान्यादौ मया तु तव शोभने
शरीरे तानि सर्वाणि ज्ञातव्यानि विपश्चितैः २
इडा चैव सुषुम्ना च पिङ्गला च तथैव हि
नासां सञ्चारयोगं वै ज्ञातव्यं तत्ववेदिभिः ३
कलानाञ्चैव सर्वासां नाडीनां वायुभिस्सह
सञ्चारं ह्येष तत्वानां भोक्ता भोज्यं तथैव हि ४
कालवेलविभागानि सङ्क्रमानि तथैव हि
ज्ञात्वा सर्वमशेषेण साधकस्सविधीयते ५
दक्षिणेन सुषुम्ना तु यदा वहति सुवृते
विज्ञेयस्स सदा तज्ज्ञो उत्तरायणमुत्तमम् ६
इडायान्तु यदा देवि तिष्ठते परमेश्वरः
दक्षिणायनमित्येव कथितं तव सुवृते ७
मध्यस्थन्तु यदा देवि पिङ्गलायां व्यवस्थितः
विषुवं स तु विज्ञेयं योगकालः प्रकीर्तितः ८
सुषुम्नायां स्थितो ब्रह्मा अकाराक्षरसंयुतः
आदित्यः स तु विज्ञेयो ज्येष्ठा शक्तिः प्रकीर्तिता ९
ज्ञानशक्तिरिति ज्ञेया सत्वस्थं तं विनिर्दिशेत्
साग्रत्स्थानं स विज्ञेयं दक्षिणेन व्यवस्थितः १०
इडायां संस्थितो विष्णुरीकाराक्षरसंयुतः
सोमस्य तु स तु ज्ञेयो वामा शक्तिः प्रकीर्तिता ११
क्रियाशक्तिः स विज्ञेयो राजसं गुणलक्षणम्
स्वप्नस्थानं स विज्ञेयं वामतस्तु व्यवस्थितम् १२
मध्यमं रुद्रमित्याहुः उकारः परिकीर्तितः
रौद्री तन्तुविजानीयादिच्छाशक्तिः प्रकीर्तिताः १३
वह्निस्थानं हि यत्प्रोक्तं सुषुप्तं परिकीर्तितम्

द्वादश्येकादशी चैव पञ्चमी च द्वितीयका ३८
षष्ट्यामी च नवमी सूर्यादिभ्यः क्रमेण तु
दग्धवाराहुति ज्ञेयाः स्थापनादिषु वर्जयेत् ३९
पूषा च सप्तमी युक्ताश्विनी च द्वितीयका
पुष्याष्टमी च संयुक्ता सितवारे तु वैष्णवम् ४०
सौम्येन गुरुवारस्तु चोत्तराषाढसंयुतः
सोमवारस्तु हस्तेन चाश्विनी युक्तमेव च ४१
एते त्वशोभनं प्रोक्तं तत्रैव प्राणनाशनम्
उच्चस्थानगतश्चन्दो सौख्यमित्रगतस्तथा ४२
शत्रुक्षेत्रगतश्चन्द्रो नीचस्थोपि च धनव्ययः
भौमादिसेन्दुराहुश्च सौरिर्वा लग्नसंस्थितः ४३
आयुश्च धनधान्यं च कर्तुर्नश्यति संशयः
धनस्थानगताः क्रूराः धनधान्यविनाशकाः ४४
ता एव ग्रहसंयुक्ता धनधान्यविवर्धकाः
भातृस्थानगता सर्वे कर्तुः पीडनमादिशेत् ४५
शुभग्रहा नवस्थाने सर्वसौख्यधनावहाः
कर्मस्थानगताः क्रूराः सर्वायुष्य विनाशकाः ४६
शुभग्रहास्तु कर्मस्थाः सर्वेषां वित्तवर्धनाः
अशुभाश्च शुभश्चैव लाभस्थानगताः शुभाः ४७
द्वादशस्थौ बुधजिवौ +++++ समावहेत्
नक्षत्रान्ते च मासान्ते पक्षान्ते वेयितर्क्षके ४८
व्यतीपाते च परिघे शूल वै धृति तालगे
षडशीति मुखे चैव मासशून्ये तथैव च ४९
पापग्रहसमायुक्तं मुक्तकांक्षितसंयुतम्
कण्टं स्थूणं व्यतीपातं विष्ठिं काणं च संक्रमम् ५०
कण्टकं ब्रह्मदण्डं च उल्कापातं च पिण्डकम्

ग्रहवेधितनक्षत्रं शूलं च भूमिकम्पकम् ५१
ध्वजं चैव विशेषेण वर्जयेत्तु प्रयत्नतः
प्रतिष्ठां वर्जयेद्धीमां जीवभार्गवास्तमनेऽपि च ५२
कर्षणादिप्रतिष्ठान्त सर्वकर्माणि चाचरेत्
मर्त्यानामायुषो विप्राः कृष्णपक्षे च चन्द्रवत् ५३
तस्माद्वै यत्नतः शीघ्रं कर्तव्ये धर्मसङ्ग्रहः
अल्पदोषं गुणाधिक्यं दिनं लग्नं च संग्रहेत् ५४
अनेककोटिदोषाढ्यदिने वा लग्नमाचरेत्
दोषो हि नाशनं यान्ति जीवदृष्ट्याद्विजोत्तमाः ५५
अनेककोटिदोषं हि शैविकेन विना ++ लम्
तमोपरिभूते रात्रौ रविणे केन नश्यति ५६
तथैव जिवदृष्ट्या तु सर्वे दोषो विनाशितः
एवं परीक्ष्य बहुधा कर्षणादीन्समाचरेत् ५७
ज्ञानशक्त्यात्मके लिङ्गे क्रियाशक्तेः समर्पणम्
प्रतिष्ठास्थापनं चैव स्थितस्थापनमेव च ५८
उत्थापनं च संप्रोक्तं तथाऽऽस्थापनमेव च
पीठस्य विधिना योगात्सा प्रतिष्ठा च पञ्चधा ५९
लिङ्गे ब्रह्मशिला सा च पूर्वके योज्य पिण्डिके
बाणादौ च पृथक्पीठे जीर्णेऽव्यक्ते यथाक्रमम् ६०
लिङ्गभेदं प्रवक्ष्यामि शृणुध्वं मुनिपुङ्गवाः
प्रथमं सर्वतोभद्रं द्वितीयं वर्धमानकम् ६१
शैवाधिक्यं तृतीयं च त्रैराशिकं चतुर्थकम्
एवं लिङ्गं चतुर्वर्गं महालिङ्गमिति स्मृतम् ६२
एकैकं तु चतुर्भेदं एकैकं तु चतुर्विधम्
चतुष्षष्टिविधं लिङ्गं समासात्परिकीर्तितम् ६३
सहस्रय ++ तु चतु+ वादि लिङ्गकम्

महालिङ्गमिति प्रोक्तं धारालिङ्गसहस्रकम्  ६४
नागरं सर्वतो भद्रं द्राविडं वर्धमानकम्
शिवाधिकं +++++ त्रैराशिकं तु मिश्रकम्  ६५
क्रमाच्चतुर्विधं लिङ्गं स्थापयेद्विधिपूर्वकम्
धारालिङ्गसहस्राणि मिश्रके स्थापयेद्बुधः  ६६
आदौ कृतं चैत्प्रासादं लिङ्गं प्रासादमानकम्
गर्भमानं चारमानं हस्तमानं त्रिधा भवेत्  ६७
लिङ्गमादौ कृतं चेत्तु प्रासादं लिङ्गमानकम्
लिङ्गद्विलिङ्गद्विगुणं त्रिगुणं च चतुर्भवेत्  ६८
आदौ लिङ्गं प्रकुर्याच्च आदौ प्रासादमेव च
हस्तैर्वितस्तिभिर्मात्रैमानोन्मानं त्रिधा भवेत्  ६९
प्रासादलिङ्गयोरत्र नवधा भेदमानकम्
प्रासादं चापि लिङ्गं च भेदाब्नवविधक्रमात्  ७०
उत्तमं मध्यमं चैवाधमत्वधमाधमम्
तदेकेकं चतुर्विधं चतुर्विधमिदं लिङ्गम्  ७१
चतुर्विधं तदेकेकं मानमेवं प्रकीर्तितम्
समलिङ्गं वर्धमानं शैवाधिक्यं च स्वस्तिकम्  ७२
सर्वतो भद्रलिङ्गं च सार्वदेशिकमेव च
धारालिङ्गं मुखलिङ्गं लिङ्गमष्टविधं भवेत्  ७३
समलिङ्गं च विप्राणां नृपाणां वर्धमानकम्
शैवाधिक्यं च वैश्यानां शूद्राणां स्वस्तिकं भवेत्  ७४
अन्येषामपि सर्वेषां सार्वदेशिकमेव हि
इष्टायामविशालेन चतुरश्राकृतिं पुरा  ७५
पश्चाद्भागत्रयं कृत्वा तत्तल्लिङ्गोक्तमानकम्
पृष्टायामं त्रिधा कृत्वा समभागं विशेषतः  ७६
चतुरश्रं ब्रह्मभागमष्टाश्रं विष्णुरुच्यते

वृत्तं शिवाश्रकं प्रोक्तं समभागादिलक्षणम् ७७
वर्धमानस्य चेष्टांशं चतुर्विं शतिभागकम्
सप्तांशं ब्रह्मभागं तु अष्टांशं विष्णुभागकम् ७८
नवांशं रुद्रभागं स्याद्वर्धमानमिति स्मृतम्
शैवाधिक्यदशांशेन त्रयांशं ब्रह्मभागकम् ७९
त्र्यंशं च विष्णुभागं स्याद्वेदांशं रुद्रभागकम्
शैवाधिक्यमिति प्रोक्तं स्वस्तिकं च तत शृणु ८०
स्वस्तिकस्य च लिङ्गस्य रुद्रांशं विभजेत्क्रमात्
त्र्यंशं च ब्रह्मभागं च वेदांशं विष्णुरुच्यते ८१
वेदांशं रुद्रभागं स्यात्स्वस्तिकस्य विधीयते
चतुरश्रं पुरा कृत्वा कर्णार्धार्धां शमानतः ८२
दिक्सूत्रेण समायोज्य भवेदष्टाश्रमुत्तमम्
अष्टाश्रस्येकभागार्थं कलाश्रं परिकल्पयेत् ८३
कलाश्रच्छेदनाद्विद्वान्वृत्ताकारं भवेत्क्रमात्
लिङ्गाग्रं विप्रजातीनां छत्राकारं विशेषतः ८४
छत्राकारं भवेत्पूर्वं कुक्कुटाण्डं द्वितीयकम्
अर्धचन्द्रं तृतीयं तु त्रापुषं च चतुर्थकम् ८५
अथवा समलिङ्गं तु रविभागं भवेत्पुनः
त्रिभागं ब्रह्मभागं तु विष्णवंशं वेदभागकम् ८६
रुद्रांशं भूतभागं तु समलिङ्गस्य लक्षणम्
पक्षांशे वर्धमानस्य वेदांशं ब्रह्मभागकम् ८७
भूतांशं विष्णुभागं तु रसांशं रुद्रभागकम्
अष्टादशविभागे तु शैवाधिक्यं द्विजोत्तमाः ८८
भूतांशं ब्रह्मभागं तु रसांशं विष्णुभागकम्
रुद्रांशं मुनिभागेन शैवाधिक्यस्य संमतम् ८९
एकविंशतिभागेन स्वस्तिकं विभजेत्ततः

रसांशं ब्रह्मभागं तु धात्वंशं विष्णुभागकम् ९०
अष्टांशं रुद्रभागं तु स्वस्तिकं कारयेत्सुधीः
चतुर्विधानां लिङ्गानामेवमेव क्रमं विदुः ९१
घण्टाशब्दं तु यच्छैलं तत्पुमानिति कीर्तितम्
कांस्यतालध्वनिश्चैव स्त्रीशिलेति प्रकीर्तितम् ९२
दुन्दुभिध्वनिसंयुक्ता नपुंसकशिला स्मृता
दीर्घशब्दं तु यद्वृद्धो ह्रस्वो बाल इति स्मृतः ९३
लिङ्गायामं पीठतारं तदर्धं तस्योत्सेधं गोमुखान्तं तथैव
तस्यार्धं वा पञ्चभागं त्रिभागं त्र्यंशेकांशं नालदीर्घं क्रमेण
९४
लिङ्गनाहसमपीठविस्तरं विस्तरस्य शरवेदतुङ्गकम्
विस्तरार्धमथ नालदीर्घकं गोमुखान्तमथ कण्ठनाहकम्
९५
एवं परीक्ष्य बहुधा लिङ्गस्थापनमारभेत्
प्रतिष्ठां शिवलिङ्गस्य वक्ष्यामि शृणु ते गुरो ९६
प्रासादगर्भमाने च द्वारमानेन वा पुनः
स्तम्भमानेन वा कुर्यात्कर्तृहस्तमितेन च ९७
लिङ्गं कुर्यात्त्रिभागेकं लिङ्गमानेन पीठिका
पूजाभागत्रिभागेकं द्विभागं वा त्रिभागकम् ९८
पार्श्वयोः पृष्ठसंयुक्तलिङ्गे सूच्या शिवाधिकम् ९९
लिङ्गमानेनावार्धेन पादेनार्धेन वा पुनः
कुर्यात्तु याज्ञिकैर्वृक्षैर्प्रतिलिङ्गं ससूत्रकैः १००
बाणलिङ्गं विना यत्र प्रतिलिङ्गं प्रकल्पयेत्
प्रतिलिङ्गं प्रकर्तव्यं बाणलिङ्गं तथोक्तवत् १०१
बाणलिङ्गम् --
आदिमध्यावसाने तु लिङ्गस्थापनकर्मणि

प्रतिलिङ्गं गृहीत्वा तु कर्मान्ते तद्विसर्जयेत् १०२
नवमुद्दिश्य यत्कर्म यत्र वै क्रियते दिने
तस्मात्सर्वं प्रयुञ्जीत नवमे सप्तमेऽपि वा १०३
पञ्चमे वा त्रहे वापि कुर्याद्वै बीजवापनम्
बीजानामधिपः सोमस्तस्माद्रात्रौ तु वापयेत् १०४
एकाहे वा शिवं पूज्यं सद्योङ्कुरमथापि वा
अङ्कुराण्यर्पयेद्धीमान्पूर्वोक्तविधिना सह १०५
यागार्थमण्टपं कुर्याद्धर्म्याग्रेवाथ पार्श्वयोः
श्रेष्ठमण्टपविस्तारं द्वात्रिंशद्धस्तमुच्यते १०६
अष्टाष्टस्तम्भसंयुक्तं कलातालोच्छ्रयं भवेत्
तन्मण्टपस्य मध्ये तु चतुस्तम्भं विवर्जयेत् १०७
पङ्क्तिद्वयकरैस्ताल मध्यमे मण्टपस्य तु
षट्त्रिंशत्स्तम्भकैर्युक्तं धर्मतालसमुच्छ्रयम् १०८
पूर्ववत्संत्यजेन्मध्ये रविहस्तसुविस्तरम्
स्तम्भषोडशसंयुक्तमुत्सेधं चाष्टतालकम् १०९
कन्यसं मण्टपं ज्ञेयं मण्टपं तु त्रिधा भवेत्
वेदिका मध्यभागे तु रत्निमात्रसमुच्छ्रिता ११०
तदर्धतोपवेदीं च कल्पयेत्तु समावृतः
युगाङ्गुलप्रविस्तारमुत्सेधं स्यात्तदर्धकम् १११
द्व्यङ्गुलाधिकविस्तारं मध्यमस्योत्तमस्य तु
दर्पणोदरसंकाशं मुद्रावेष्टिकया कुरु ११२
कन्यसत्रयलिङ्गानां मण्टपं कन्यसं भवेत्
मध्यमत्रयलिङ्गानां मण्टपं मध्यमं भवेत् ११३
उत्तमत्रय लिङ्गानां मण्टपं चोत्तमं भवेत्
कूटं वा मण्टपं वापि प्रपां वापि प्रकल्पयेत् ११४
वेदिकायास्तु परितो कुण्डानि परिकल्पयेत्

कुण्डपट्टिकयोर्मध्ये चान्तरालं द्विहस्तकम् ११५
द्वात्रिंशत्कुण्डकानत्र कुर्यादुत्तममण्टपे
कुर्यादत्र चतुर्विं शत्कुण्डकं मध्यममण्टपे ११६
कारयेन्नवकुण्डानि कन्यसे मण्टपे क्रमात्
चतुरश्राश्वत्थपत्र चापं गुणाश्रवर्तुले ११७
भूतकाब्जाष्टकाश्राणि कुण्डानिन्द्रादिषु क्रमात्
वृत्तं प्रधानकं मध्ये चेन्द्रेकुण्डेशकुण्डयोः ११८
एवमभ्यन्तरे कुर्याद्बाह्ये सर्वं युगाश्रकम्
सर्वलक्षणसंयुक्तं पूर्वोक्तविधिना कुरु ११९
महादिक्षु चतुर्ष्वेव सुप्रवेश्यं सुतोरणम्
अश्वत्थोदुम्बरप्लक्षन्यग्रोधाः पूर्वकादिषु १२०
नवानां चैव लिङ्गानां नवधा तोरणं कुरु
दिग्ध्वजैश्च पताकैश्च वितानेन विभूषयेत् १२१
हेमशुक्लारुणारक्ताकृष्णानीलासितारुणा
पूर्वादिषु क्रमेणैव लम्बयेत्तु प्रदक्षिणम् १२२
रम्भाम्रनालिकेराणां फलैश्च क्रमुकस्य तु
चूतप्रवालताम्बूल लताभिश्च विभूषयेत् १२३
मुक्तादामैश्च विविधैर्दर्भमालाभिरावृतम्
गात्रवेष्टनसंयुक्तं तरङ्गेणावृतं बहिः १२४
अष्टमङ्गलसंयुक्तं पूर्णकुम्भैरलङ्कृतम्
नानादीपसमायुक्तं मण्टपं च विभूषयेत् १२५
तस्यैव पूर्वदिग्भागे लक्षणोद्धारणाय च
मण्टपं कारयेत्तत्र मण्टपार्धसुविस्तरम् १२६
तन्मध्ये वेदिकां कुर्याल्लिङ्गायामप्रमाणतः
त्र्यङ्गुलसमुत्सेधं दर्पणोदरसन्निभम् १२७
तस्य पश्चिमदिग्भागे स्नानश्वभ्रं प्रकल्पयेत्

लिङ्गानुरूपं कर्तव्यं दारुपीठसमन्वितम् १२८
सौम्ये तु जलमार्गं स्यादवटेन समन्वितम्
देशिकस्तक्षकैः सार्धं विशेत्कर्मकुटीं ततः १२९
वस्त्रहेमाङ्गुलीयैश्च देशिकस्तक्षकं यजेत्
शाणाभिघर्षणं कृत्वा लिङ्गं चैव तु पिण्डिकाम् १३०
शिल्पान्ते शैललिङ्गे तु पञ्चगव्यं च निक्षिपेत्
अष्टमृत्सलिलैश्चैव स्नापयेद्गन्धतोयकैः १३१
लिङ्गं च पिण्डिकं चैव नव वस्त्रेण वेष्टयेत्
स्यन्दने तु समारोप्य लिङ्गमुद्धारमण्तपे १३२
वेद्यूर्ध्वे स्थण्डिलं कृत्वा चाष्टद्रोणैश्च शालिभिः
लाजपुष्पैश्च दर्भैश्च स्थण्डिलं समलङ्कृतम् १३३
स्थण्डिलं पूजयित्वाथ लिङ्गं पुष्पादिभिर्हृदा
लिङ्गं तु शाययेत्तस्मिन्प्राक्शिरस्कं सपीठकम् १३४
रक्तवस्त्रेण संवेष्ट्य गन्धपुष्पादिभिर्यजेत्
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् १३५
पलाशसमिधः सद्यमन्त्रेण जुहुयात्ततः
आज्यं मूलेन हुत्वा तु चरुं वामेन होमयेत् १३६
शतमर्धं तदर्धं वा द्रव्यान्ते व्याहृतिं हुनेत्
ब्रह्मजज्ञानमन्त्रेण घृतेन जुहुयाच्छतम् १३७
पूर्णाहुतिं च शिरसा स्विष्टमग्नौ तु होमयेत्
कौतुकं हृदयेनैव रुद्रभागे तु बन्धयेत् १३८
प्रभाते सुमुहूर्ते तु लक्षणोद्धारमाचरेत्
विलिखेत्स्वर्णसूचिभ्यां लिङ्गं सूत्रत्रयान्वितम् १३९
रुद्रभागसमायामं षण्णवत्यंशकं भवेत्
अङ्गुलान्तेषु भागेकमुत्तमस्योत्तमस्य तु १४०
सूत्रकस्य तु विस्तारं पद्माङ्गुलिमिति स्मृतम्

भ्रामयेदर्धमर्धं तु चाङ्गुलं तु क्रमेण तु १४१
अष्टानां चैव लिङ्गानां सूत्रविस्तारमुच्यते
तन्मानं खातयेद्धीमान्यावत्सूत्रस्य चावधि १४२
मस्तके मध्यमं ज्ञात्वा हेमसूच्या च विन्यसेत्
भ्रामयेन्मस्तकान्तं तु तन्मध्ये सरसि क्रमात् १४३
मस्तके सु महाशासु गैरिकङ्कारयेत्क्रमात्
अजभागस्य तारस्य मध्यमं कारयेत्तथा १४४
तन्मध्यकं समारभ्य मस्तके मध्यमानकम्
गैरिकात्तेन सूत्रेण स्फालयेन्मध्यमं दृढम् १४५
वस्वश्रं मध्यमं ज्ञात्वा गैरिकात्तेन तन्तुना
सूत्रादि स्फालयेद्धीमानष्टादशकलान्तकम् १४६
ज्ञात्वा वन्दनपार्श्वं तु नलिनं मध्यमे कुरु
गुणाङ्गुलं तु तत्तारं नालकस्य द्विपार्श्वयोः १४७
तस्य सीमावधौ चैव सूत्रेणैव समालिखेत्
तयोः सङ्गमनं पृष्ठे कारयेत्तु क्रमेण तु १४८
रुद्रांशोच्चं द्विधा कृत्वा चोर्ध्वभागांशकं त्यजेत्
पक्षांशं दशधा भज्य व्योमांशं मुकुलं भवेत् १४९
विस्तारं तत्समं ज्ञेयमङ्गुलद्वयसंयुतम्
क्रमेण कृशमस्त्रेण तस्याग्रे चैव बन्धयेत् १५०
नालायामं तु वस्वंशं मुकुलस्य तु मूलतः
तस्योक्तेनैव मार्गेण मणिरेखास्तु वर्जयेत् १५१
तयोः सङ्गमनं पृष्ठे कारयेत्तु क्रमेण तु
प्रथमं लक्षणं प्रोक्तं द्वितीयं लक्षणं शृणु १५२
रुद्रांशं भज्य रव्यंशं ऊर्ध्वे गुणांशकं त्यजेत्
एकभागेन मुकुलं अभ्यन्तं नालमुच्यते १५३
पार्श्वसूत्रद्वयङ्कार्यं पूर्वोक्तविधिना सह

द्वितीयं लक्षणं प्रोक्तं तृतीयं लक्षणं शृणु १५४
रुद्रांशं नवधा भज्य चग्रोर्ध्वभागे द्वयं त्यजेत्
अंशमेकमथस्त्यक्त्वा मुकुलं चेकभागतः १५५
पञ्चांशेनैव नालं तु शेषं पूर्वोक्तवद्भवेत्
पद्मभागमथस्त्यक्त्वा मुकुलं चेकभागतः १५६
रन्ध्रांशं नालमित्युक्तं शेषं प्राकृतवद्भवेत्
मुकुलं वा गजाक्षं वा योन्याकारमथापि वा १५७
पद्माभं वा प्रकर्तव्यं शूलाकारमथापि वा
अन्यकार्याणि सर्वाणि मुकुलस्योक्तमार्गतः १५८
नालं सदाशिवं ज्ञेयं सव्यसूत्रं पितामहः
वैष्णवं वामसूत्रं तु सूत्राणामधिदेवतम् १५९
उच्चरेन्मन्त्रमाचार्यः स्थपतिः कर्म सन्धयेत्
वस्त्रहेमाङ्गुलीयाद्यैः संपूज्योद्वास्य शिल्पिनम् १६०
अर्चयेन्मधुसर्पिभ्यां हेमदूर्वाभिरक्षिषु
त्र्यम्बकेन मन्त्रेण नालसूत्रद्वयं लिखेत् १६१
ब्रह्मजज्ञानमन्त्रेण ब्रह्मसूत्रं समालिखेत्
इदं विष्णिवति मन्त्रेण विष्णुसूत्रं च लेखयेत् १६२
मधुवातेति मन्त्रेण मधुना तर्पयेत्ततः
घृतं घृतं मिक्षेति जपित्वा तर्पयेद्धृतम् १६३
धेनुं गौर्धेनु हव्येति ब्रह्मसूक्तेन भूसुराः
सौवर्णे राजते ताम्रे कांस्ये वाथ शरावके १६४
घृतेन मधुना चैव प्रत्येकं प्रस्थपूरितम्
घृतं प्रदर्शयेन्मन्त्री +++ ष्टोविधिमनुस्मरन् १६५
धारिका बीजमुख्यैश्च धान्यराशिं प्रदर्शयेत्
प्रच्छन्नपटमावर्ज्य जनसङ्घान्प्रदर्शयेत् १६६
नयनोन्मीलनं व्यक्ते व्याक्ताव्यक्ते च लक्षणे

न बाणादौ चले चैव नरौप्येनापि रत्नजे १६७
रन्ध्रमध्ये भगाकारमूर्ध्वाग्रं लक्षपीठकम्
रन्ध्रस्यैव विभागेन तन्मूलं भ्रामयल्लिखेत् १६८
स्नापयेत्पञ्चगव्येन पवमानमुदीरयन्
नमकं चमकं चैव पुरुषसूक्तं ततः परम् १६९
पञ्चशान्तिं जपित्वा तु स्नापयेत्तु विशेषतः
पञ्चामृतेन संस्नाप्य पञ्चब्रह्म समुच्चरन् १७०
अष्टमृत्सलिलेनैव यवगोधूमचूर्णकैः
राजचूर्णशकृच्चूर्णभस्मभिः पत्रतोयकैः १७१
स्नापयेत्तु विशेषेण शुक्लमित्येव तद्भवेत्
पाद्यमाचमनं चार्घ्यं स्वस्वमन्त्रेण दापयेत् १७२
स्थापितैः कलशाद्भिस्तु ईशाने वाभिषेचयेत्
गन्धपुष्पादिभिः पूज्य हृदयेनैव मन्त्रतः १७३
पुण्याहं वाचयेत्तत्र रक्तवस्त्रेण वेष्टयेत्
जलाधिवासनारम्भं रात्रावेन कारयेत् १७४
न कुर्याच्छयनारम्भं दिवाकाले विशेषितम्
सर्वालङ्कारसंयुक्तं कुर्याद्ग्रामप्रदक्षिणम् १७५
जलाशयमनुप्राप्य तत्तीरे स्थण्डिलं कुरु
तस्योत्तरे न्यसेल्लिङ्गं पीठं शैलं क्रमात् १७६
पूजयेत्पुरुषेणेव प्रथग्वस्त्रेण वेष्टयेत्
जलमध्ये प्रपां कुर्याद्वेदगात्रसमन्वितम् १७७
वितानध्वजसंयुक्तं दर्भमालासमावृतम्
आचार्यः कण्ठदघ्नाप्सु प्रपायाश्चैव मध्यमे १७८
शाययेत्फलकोर्ध्वे तु प्राक्शिरस्कोर्ध्ववक्त्रकम्
स्थापितान्कलशानष्टौ लोकपालाधिदैवतान् १७९
सूत्राम्रशाखा सहितान्गन्धपुष्पैरलङ्कृतान्

पूजयेत्तु विशेषेण गन्धपुष्पादिभिर्बुधः १८०
एक त्रिपञ्चरात्रं स्यात्सप्तरात्रं निवासयेत्
ऋगाद्यध्ययनं कुर्यात्प्रागादिषु विशेषतः १८१
अधिवासनपूर्वे तु प्रागुक्तविधिना सह
प्रासादमण्टपे चैव वास्तुहोमं तु कारयेत् १८२
आषाढपत्रदर्भैश्च पर्यग्निं तेन वह्निना
मण्टपं च विमानं च कारयेत्तु क्रमेण तु १८३
गन्धतोयेन संप्रोक्ष्य पुण्याहं वाचयेत्ततः
स्थण्डिले वेदिकोर्ध्वे तु दशद्रोणेन शालिना १८४
शाल्यर्धतण्डुलोपेतं तण्डुलार्धतिलान्वितम्
आलिखेन्नलिनं तत्र साष्टपत्रं सकर्णिकम् १८५
परिस्तीर्य ततो दर्भफललाजसपुष्पकैः
पञ्चभिः शयनं कुर्या चर्मजाद्यैरनुक्रमात् १८६
दारुजं चर्मजं रोमजं चाण्डजं तथा
उपर्यास्तरणोपेतं वासः शयनपञ्चकम् १८७
दारुजं फलकं ज्ञेयं क्षीरवृक्षसमुद्भवम्
चर्मजं चाजिनं चर्म वैयाघ्रेण च चर्मणा १८८
रोमजं चाजिनं चर्मरोमकं पक्षि पक्षिकम्
चतुर्थं शाल्मली तूलसंभवं वा प्रकल्पयेत् १८९
उपर्यास्तरणं वापि केवलं सूक्ष्मवाससा
अलाभे पञ्चशयनं कम्बलं तदलाभके १९०
कल्पयेत्पञ्चवस्त्रेण सोपधानसमन्वितम्
द्वारादिकलशानां च व्रीहि द्रोणं क्रमेण तु १९१
पञ्चभारं गृहीत्वा तु विन्यसेत्परितः क्रमात्
तन्मध्ये पद्ममालिख्य सुस्थितां च घटान्क्रमात् १९२
शाखदुन्दुभिनादैश्च स्वस्तिमङ्गलवाचकैः

नृत्तगेयसमायुक्तं सर्वालङ्कारसंयुतम् १९३
जलादुत्तीर्य देवेशं स्नानवेद्युपरि न्यसेत्
अष्टमृत्पञ्चगव्यैश्च क्षालयित्वा च निर्मलम् १९४
संस्नाप्य गन्धतोयेन वस्त्रेणैव तु वेष्टयेत्
स्नानवेद्यास्तु तल्लिङ्गं यागवेदिं नयेद्गुरुः १९५
गन्धपुष्पादिभिश्चैव पूजयेद्धृदयेन तु
सौवर्णं राजतं ताम्रं क्षौमं कार्पासजं तु वा १९६
रक्षासूत्रं च विन्यस्य पात्रस्थतण्डुलोपरि
आलयं तु परिभ्राम्य पूजयेद्गन्धपुष्पकैः १९७
पुण्याहं वाचयित्वाथ सर्वातोद्यसमन्वितम्
दत्वा सर्वजनानां तु ताम्बूलं च विशेषतः १९८
संयजेत्पूर्ववत्सूत्रं सुमुहूर्ते सुलग्नके
रुद्रांशे कौतुकं बध्वा देव्या नालशिले तथा १९९
प्रतिष्ठादिवसस्यादौ रात्रौ चैवाधिवासयेत्
देशिको मूर्तिपैस्सार्धं सकलीकृतविग्रहः २००
वासवानलयोर्मध्ये नित्यवत्सूर्यमर्चयेत्
विसृस्य च समाचम्य सकलीकृतविग्रहः २०१
सामान्यार्घ्यं च संकल्प्य द्वारान्संप्रोक्ष्य शस्त्रतः
शान्तिभूतिबलारोग्य तोरणानि समर्चयेत् २०२
द्वाराणां शाखयोर्नन्दिकालौ भृङ्गीविनायकौ
वृषस्कन्दौ तथा चण्डौ द्वौ द्वौ यजेत्क्रमात् २०३
शाखामूलस्थकुम्भेषु प्रशान्तादींश्च पूजयेत्
प्रशान्तशिशिरौ चैव पर्जन्याशोकनामकौ २०४
भूतस्थामृतसञ्जीवौ धनदश्रीप्रदायकौ
नित्यवत्पश्चिमद्वारे द्वारपालार्चनं नयेत् २०५
दिव्यान्तरिक्षभूमिस्थ विघ्नानुत्सार्य तद्गतान्

दिग्ध्वजेषु पताकासु कुमुदादीन्दशास्त्रकान्  २०६
द्वाराग्यस्त्रेण संघट्य पश्चिमद्वारमार्गतः
अन्तः प्रविश्य देहल्यामस्त्रराजं समर्चयेत्  २०७
लक्ष्मीं तु पश्चिमे कुम्भे नैर्ऋते वास्तुदेवताम्
संपूज्य पृथिवीतत्वं यागशालास्थकम्पसु  २०८
बन्धेष्वप्तत्वमभ्यर्च्य तेजस्तत्वं त्रिणेषु च
वंशेषु वायुतत्वं च स्थूणासु व्योमतत्वकम्  २०९
विताने चन्द्रमभ्यर्च्य चर्भदामेषु वासुकिम्
दर्पणे सूर्यमभ्यर्च्य पूर्णकुम्भे जलेश्वरम्  २१०
स्कन्दं च वृषभे यष्ट्वा मातरिश्वं यग्मचामरे
श्रीवत्से चैव श्रीदेवीं स्वस्तिके तु सरस्वतीम्  २११
शङ्खे च विमलं यष्ट्वा दीपे ज्वालानलं तथा
वेदिका दक्षिणे स्थित्वा गुरुरुत्तरदिङ्मुखः  २१२
भूतशोधनान्तर्यजनस्थानशोधनकानि च
अर्घ्यसंस्थापनद्रव्यशुद्धिमात्मार्चनं तथा  २१३
मन्त्रशुद्धिं च कृत्वा तु स्वदक्षिणाकरे तले
वामाङ्गुष्ठेन संलिप्ते चन्दनेन षडध्वगम्  २१४
न्यस्त्वा शिवासनं मूर्तिं मूलेन सर्वनिष्कलम्
साङ्गं संपूज्य तत्वस्तं स्वकीये मस्तके न्यसेत्  २१५
तालप्रमाणं षट्त्रिंशद्दर्भ सप्तधा स्मृतः
जप्तज्ञानासिमादाय स्थापयेत्पञ्चगव्यकम्  २१६
मण्टपं प्रोक्षयेत्तेन तत्वमूर्त्यादिकं स्वके
न्यस्त्वा नैर्ऋतदेशस्थं ततोष्टादशसंस्कृतिम्  २१७
कृत्वा तु विकिरानस्त्रमन्त्रेण त्वीशदेशके
निक्षिप्य कुम्भवर्धन्यारायनाय समाहरेत्  २१८
कुम्भे चलासनन्दत्वा शिवं साङ्गं च तर्पयेत्

वर्धन्यां संयजेत्पाशुपतास्त्रं साङ्गसंयुतम्  २१९
पूर्वादिकलशेष्वेतालोकपालांश्च सास्त्रकान्
आवाहयेत्क्रमादिन्द्रं त्रातारमिति मन्त्रतः  २२०
त्वन्नोग्नेऽग्निमावाह्य सुगं नः पन्धमन्त्रतः
असुन्वन्तेति निर्ऋतिं तत्वायामीति वारुणम्  २२१
आनोनियद्भिरनिलं वयं सोमेति सोमकम्
ईशानं च तमीशानमस्मेरुद्रेति तं विधिम्  २२२
विष्णुं स्योनापृथिवीति क्रमादावाहयेदमून्
तथैव वज्रशक्त्यादि दिगस्त्राण्यपि पूजयेत्  २२३
दशायुधानि संपूज्य हुम्फडन्तस्वनामतः
भो भो शक्र त्वया स्वस्य दिशि विघ्नप्रशान्तये  २२४
सावधानेन यागान्तं यावत्स्थेयं शिवाज्ञया
सर्वेषां लोकपालानामनेन क्रमयोगतः  २२५
शिवाज्ञां श्रावयेत्कुम्भं भामयेदग्रतोस्त्रकम्
विन्यसेत्कुम्भवर्धन्यौ पूर्ववत्तदनन्तरम्  २२६
स्थिरासनं च संपूज्य देवमस्त्रं च पूजयेत्
मूर्तिविद्यातनुं साङ्गं शिवं सावरणस्थितम्  २२७
पूजयित्वा तयोरैक्यं कल्पयेल्लिङ्गमुद्रया
सर्वमुष्टिरुमापिण्डी लिङ्गमङ्गुष्ठको हरः  २२८
प्रार्थयेत्कलशं स्पृष्ट्वा पूर्वमङ्गुष्ठपर्वणा
संस्पृशेद्वर्धनीं पश्चा मुष्टिना हृदयाणुना  २२९
उमायै भगरूपिण्यै लिङ्गरूपधराय च
शङ्कराय नमस्तुभ्यमिति स्तुत्वानुमोद्य च  २३०
यज्ञस्यास्य पतिस्त्वं हि मूर्तिरिषा तवाचला
एष ते ज्ञाननिस्त्रिंशस्तद्गृहाण स्वमायुधम्  २३१
मया प्रवर्तितश्चायं यज्वना भवतः क्रतु

रक्षणीयस्त्वया तर्हि समाप्तिर्यावदस्य हि २३२
यज्ञरक्षा धुरन्तस्मिन्नेवमारोप्य देशिकः
अर्घ्यपात्रं विधायाथ दद्यादर्घ्यमथाम्भसा २३३
निरोधनाय तत्पात्रं तत्रैव स्थापयेद्गुरुः
वर्धन्यस्थ विकिरास्त्रैः समन्ताद्यागमण्टपम् २३४
अपसारितविघ्नं तु भावयेद्धूपरिग्रहम्
इति प्रार्थ्य निरोधार्घ्यं दत्वा वाथ विनायकम् २३५
संयजेदीशकुम्भे तु गुरून्संपूज्य देशिकः
वेदिका मध्यमे पञ्चशयने सुविशेषतः २३६
अधाराख्यमनन्तं च सिंहं च विमलं तथा
पद्मासनं च कर्तव्यं पूजयेत्पञ्च चासनम् २३७
शालिस्तु वृषभं विद्यात्तण्डुलं षण्मुखस्तथा
तिलं च कालिमूर्तिं च परिस्तरणे पार्वतिम् २३८
तन्मध्ये तु समभ्यर्च्य गन्धपुष्पादिभिर्हृदा
प्राक्छिरस्कं ससूत्रं च शयने शाययेत्तदा २३९
रक्तवस्त्रेण संवेष्ट्य गन्धपुष्पादिभिर्यजेत्
पिण्डिका नन्दिका वर्तशिलां कूर्मशिलां ततः २४०
लिङ्गमूले तु विन्यस्य क्रमाद्वस्त्रेण वेष्टयेत्
तत्वतत्वाधिपान्मूर्तिमूर्तिपान्विन्यसेत्क्रमतस्तथा २४१
शिवान्तव्यापिने लिङ्गे विद्याशक्तिः शिवान्तिके
आत्मविद्या शिवाख्यं च ब्रह्मादीनपि विन्यसेत् २४२
ब्रह्मभागादि खण्डेषु पूर्वास्यो लक्षणादधः
पृष्ठतः पश्चिमास्ये तु चाष्टदिक्षु प्रदक्षिणम् २४३
क्ष्मावह्नि यजमानार्क जलवायु निशाकराः
व्योमान्तमूर्तयश्चाष्टौ न्यस्तव्या प्रतिखण्डकम् २४४
शर्वः पशुपतिश्चोग्ररुद्रो भवस्तथैव च

ईशानश्च महदेवो भीमश्चैवाष्टमूर्तिपाः २४५
इत्येवं पञ्चपक्षे तु तत्वतत्वाधिपान्न्यसेत्
पश्चिमोत्तरयाम्ये तु पूर्वमीशानदिक्षु च २४६
पृथिव्याधिपं च मूर्तीनां ब्रह्मादि पञ्चकान्क्रमात्
मुमुक्षोस्तु प्रतिष्ठायां निवृत्याद्यास्तु मूर्तिपाः २४७
सद्योजातादयो लिङ्गे मानाः पञ्चदिगीश्वराः
ततो ब्रह्माणि विन्यस्य साष्टत्रिंशत्कलाः स्मृताः २४८
एवं न्यासतया कृत्वा विद्यादेहं च विन्यसेत्
आवाह्याङ्गानि संपूज्य पिण्डिकान्यासमारभेत् २४९
माया सदेशशक्त्यन्ते ह्यथ मध्योर्ध्वतः क्रमात्
ब्रह्मविद्या शिवाख्यं च पीठे तत्वत्रयं न्यसेत् २५०
क्रियाज्ञानी तथेच्छा च त्रितत्वाधीश्वरी मता
पूर्ववद्विन्यसेन्मूर्तीः पूर्वादि धारिकादयः २५१
धारिका दीप्तिमत्युग्रा ज्योत्स्ना वै चेतना तथा
बलोत्कटा च धात्री च विवस्वाद्यष्टमूर्तिपाः २५२
पञ्च पक्षेऽत्र तत्वेशा तत्वेशीं पूजयेत्ततः
आप्येन्दु पूर्वयाम्येशस्थाने भूम्यादि मूर्तयः २५३
वामा ज्येष्ठा क्रिया ज्ञानी इच्छाव्याश्च क्रमान्न्यसेत्
मनोन्मन्यास्तु मन्त्रेण चावाह्याङ्गानि विन्यसेत् २५४
एवं सदेशव्यापिन्यां शब्दं शक्तं सदेशकम्
त्रिखण्डब्रह्मशिलायां तत्वतत्वेश्वराः ततः २५५
त्रयीमयं त्रयीमूर्तिं ब्रह्माणमपि पूजयेत्
मूर्ति मूर्तीश्वरां चैव विन्यसेत्तु क्रमेण तु २५६
शिलायामष्टमूर्तीनामुग्रछायामथोच्यते
तमा मोहा क्षमा निष्ठा मृत्युर्मायाभया जरा २५७
पञ्चपक्षे तमा मोहा होरारत्रिपरश्चरः

शिलायां पिण्डिकालाभे चेष्टकामधिवासयेत् २५८
मायातत्वान्तकव्याप्ति हृत्कुम्भस्य प्रकीर्तिता
त्रिखण्डाद्वा पुनश्चित्तकालमायावसानकम् २५९
क्वचिदिन्द्रादयो लोकपाला मूर्तीश्वरा मताः
पञ्चान्वामथ मूर्तीनां लिङ्गपीठा लयास्वपि २६०
तत्वाध्वा व्याप्तितो भेदं क्रमादेव विभावयेत्
प्रसिद्धा एव ते क्वापि क्षुद्रकर्माणि भैरवाः २६१
असिताङ्गोरुरुश्चण्डो क्रोधश्चोन्मत्तभैरवः
कपालि भीषणश्चैव संभारश्चाष्टभैरवाः २६२
मुकुलीं पद्ममुद्रं च सुरभिं तालमुद्रिकाम्
लिङ्गाख्यां पञ्चमुखीन्दर्शयेद्धृदयेन तु २६३
कुशैर्वस्त्रै समाच्छाद्य ऊर्ध्वयोर्वेष्टयेत्पटैः
द्रोणतोयेन संपूर्णं निष्कलङ्कान +स्वकान् २६४
सुपक्त्वान्दोषरहिता पक्वबिम्बपलोपमान्
प्रक्षल्याथ ततः कुम्भान्त्रिभिः सूत्रेण वेष्टयेत् २६५
पिधानानीह सर्वाणि च +++ चित्रयुक्
पूतस्यास्य चतुर्विं शत्प्रस्थतोयैः सुगन्धिभिः २६६
शिवकुम्भमिति प्रोक्तं शीततोयसुपूरितम्
वर्धनी चेति विख्याता सर्वलक्षणसंयुता २६७
वस्त्रपूतेन तोयेन सर्वगन्धान्वितेन च
संपूज्य युग्मवस्त्रेण समावेष्ट्य पृथक्पृथक् २६८
लिङ्गस्यैव शिरोदेशे कल्पयेदासनं ततः
गन्धादिभिः समभ्यर्च्य शिवकुम्भं तु विन्यसेत् २६९
पञ्चरत्नं क्षिपेत्तत्र न्यसेदुत्तमकूर्चकम्
शिवकुम्भस्य मध्ये तु शिवमन्त्रं तु विन्यसेत् २७०
वर्धनी मध्यमे न्यस्त्वा हाटकेन सरोरुहम्

निक्षिपेन्मध्यमे कूर्चं मनोन्मन्यास्तु मन्त्रकम् २७१
वर्धनी मध्यमे न्यस्त्वा ध्यात्वा तद्रूपकं यजेत्
पूर्वादीशानपर्यन्तमष्टौ कुम्भानि विन्यसेत् २७२
अर्चयेद्गन्धपुष्पाद्यैर्मन्त्रमूर्तिं समावहेत्
पूर्वे तत्पुरुषं मूर्तिं घोरमूर्तिं तु दक्षिणे २७३
पश्चिमे सद्यमूर्तिं तु वाममूर्तिं तथोत्तरे
आग्नेय्यां हृदयं मूर्तिं शिरोमूर्तिं च नैर्ऋते २७४
वायव्यां तु शिखामूर्तिं ईशे कवचमूर्तिकम्
नेत्रमूर्तिं न्यसेन्मध्यकुम्भे चास्त्रं न्यसेत्पुनः २७५
लिङ्गबीजं समुच्चार्य मन्त्रमूर्तिं समावहेत्
पञ्चब्रह्मषडङ्गानि लिङ्गे लिङ्गे तु विन्यसेत् २७६
अर्चयेद्गन्धपुष्पाद्यैः स्वै स्वैर्लिङ्गे यथाक्रमम्
अभितस्तु घटानष्टौ स्थापयेदष्टदिक्पतीन् २७७
पूर्वादीशानपर्यन्तं ++++ सरान्यजेत्
निक्षिपेत्कन्यसं कूर्चं कुम्भे चायुधानि तु २७८
निक्षिप्येशानकुम्भेन कुम्भमध्ये तु निक्षिपेत्
अष्टविद्येश्वरान्सर्वान्शिवकुम्भं च वर्धनीम् २७९
तल्लिङ्गाभिमुखां चैव स्थापयेत्स्थापकोत्तमः
दिशास्वध्ययनं कुर्यात्पूर्वादिषु प्रदक्षिणम् २८०
ऋग्वेदं पूर्वदिग्भागे यजुर्वेदं तु दक्षिणे
पश्चिमे सामवेदं तु अथर्वं चोत्तरे क्रमात् २८१
शिवसंकल्पकं सूक्तं उमारुद्रस्य सूक्तकम्
कद्रुद्राय त्वमग्ने च पूर्वभागे जपेद्बुधः २८२
श्रीसूक्तं पवमानं च पुरुषसूक्तं त्र्यम्बकम्
शान्तिद्वयं जपेद्धीमान्दक्षिणे तु विशेषतः २८३
कलासूक्तं शन्नपर्वं विष्णुसूक्तं च वारुणम्

पश्चिमे तु ++++++ पवमानं हिरगयकम् २८४
देवभूतं पुरुषभूतं ज्येष्ठसामं तथैव च
कयानचित्रं विरूपाक्षमुत्तरे तु विशेषतः २८५
सद्योजातस्तु ऋग्वेदो वामदेवो यजुः स्मृतः
अघोरं सामवेदस्तु अथर्वः पुरुषः स्मृतः २८६
अष्टोत्तरसहस्रं वा तदर्धं वा तदर्धकम्
अष्टोत्तरशतं वापि जपेद्वैदिकसिद्धये २८७
पञ्चाङ्गाध्ययनं ह्येवं ततो होमं समाचरेत्
पूर्वोक्तलक्षणोपेतः त्वादिशैवस्तु देशिकः २८८
ताम्बूलं दापयेत्पश्चान्मूर्तिपानाङ्गुरुस्ततः
आचार्यानुज्ञया सर्वे चार +++ न्यः क्रमात्ततः २८९
होमारम्भस्य पूर्वे तु सृक्सृवौ चेन्धनं तुषम्
परिधीं चैव दर्भाणि समिदाज्यचरून्तथा २९०
साधकान्
आहृत्य सर्वसम्भारान्नवकुगडं प्रति क्रमात्
आचार्यो मूर्तिपैः सार्धं ++++++++ २९१
पञ्चधा देशिकः प्रोक्तस्त्वन्यकुगडेषु मूर्तिपाः
सर्वे च मूर्तिपास्तत्र मूर्तिवद्भवसंयुताः २९२
भवश्चोग्रश्च शर्वश्च वामदेवश्च रुद्रकाः
भीमः पशुपतिश्चैव ईशानश्चाष्टमूर्तयः २९३
इन्द्रादीशानपर्यन्तं स्वस्वमन्त्रैर्विशेषतः
संयजेयुः क्रमान्मूर्तीन्कुगडानां चैव दक्षिणे २९४
सदाशिवं प्रधाने तु यजेत्कुगडस्य दक्षिणे
इन्द्रादि लोकपालां च बाह्ये तत्र दिशासु च २९५
कोणे पार्श्वद्वये वसून्प्रागादि विन्यसेत्
मरुतश्चैव शक्रादीन्शेषेष्वायतनेषु च २९६

मरुतश्च विना कुर्यान्मध्यमे होमकर्मणि
विना वसुश्च दिक्पालान्कन्यसे होममाचरेत् २९७
अग्न्याधानादिकं सर्वं भागान्तकं पृथक्
होमं प्रति विशेषेण चाग्निकार्योक्तमाचरेत् २९८
यस्यान्दिशि भवेद्वारं तत्र कुण्डादि दैवतम्
तत्र कुण्डे समावाह्य नेत्रमस्त्रं प्रधानके २९९
शेषकर्माणि सर्वाणि दीपान्तं च हुनेत्क्रमात्
समिदाज्यचरूंल्लाजान्मुद्गमाषयवान्तिलान् ३००
शालिगोधूम नीवार सक्तु सिद्धार्थकानपि
क्षीरं दधिक्रमेणैव जुहुयाद्वै पृथक्पृथक् ३०१
पलाशं चैव शुक्लार्कं अश्वत्थोदुम्बरं तथा
प्लक्षं खादिरबिल्वे च शमी च प्रथमावृतौ ३०२
इन्द्रादीशानपर्यन्तं क्रमशः समिधो विदुः
प्रधानाग्नौ तु पालाशं आषाढं वाप्युदुम्बरम् ३०३
सर्वेषां बाह्यकुण्डानां समिधः संप्रकीर्तिताः
प्रधानाग्नौ पलाशं वा अषाढं वाप्युदुम्बरम् ३०४
सर्वेषां बाह्यकुण्डानां समिधः संप्रकीर्तिताः
सद्योजातेन समिधो मूलेनाज्यं तु होमयेत् ३०५
अघोरेण चरुं हुत्वा लाजं तत्पुरुषेण तु
मुद्गं हृदयमन्त्रेण माषं च शिरसा हुनेत् ३०६
यवं नेत्रेण हुत्वा तु तिलं वामेन होमयेत्
शालिमीशानमन्त्रेण गोधूमं चास्त्रमन्त्रतः ३०७
पाशुपतेन सिद्धार्थं बीजमुख्येन दध्यपि
दशाक्षरेण मन्त्रेण दुग्धं तु जुहुयात्ततः ३०८
अष्टाधिकं मन्त्रशतं द्रव्यं प्रत्युक्तमाहुतिः
मध्यमं द्विशतं चाष्टाधिकमष्टोत्तरं शतम् ३०९

अधमं त्विति विख्यातं क्रमादेवं हुनेद्गुरुः
व्याहृत्याहुतिकं कार्यं प्रतिद्रव्यं पुनः पुनः ३१०
प्रधानान्यकुण्डेषु तन्मूलेन हुनेत्पुनः
ततः स्पर्शाहुतिं कुर्याल्लिङ्गे द्रव्यं प्रति क्रमात् ३११
स्पृष्ट्वा हुत्वा तु तन्मन्त्रैर्देशिको मूर्तिपै सह
तत्वतत्वेश्वरान्यस्त्वा मूर्तिमूर्तीश्वरान्तथा ३१२
++++++++ होमयेत्तदनन्तरम्
शान्त्यम्भः प्रोक्षणं स्वस्वमन्त्राणां च जपक्रिया ३१३
दर्भसंस्पर्शनो भागशुद्धिं सन्धाय चेश्वरम्
एवं संशोध्य ब्रह्मांशं विष्णवंशादींश्च शोधयेत् ३१४
विधाय पूर्ववत्सर्वं होमसङ्ख्या जपादिकम्
कुशमूलान्तराग्रैश्च ब्रह्मभागादिकान्क्रमात् ३१५
ब्रह्मजज्ञानमन्त्रेण हुत्वा स्पृष्ट्वा त्वजांशकम्
इदं विष्णिवति मन्त्रेण हुत्वा विष्णवंशकं स्पृशेत् ३१६
त्र्यम्बकेन मन्त्रेण हुत्वा रुद्रांशकं स्पृशेत्
मनोन्मन्यास्तु मन्त्रेण हुत्वा पीठं तु संस्पृशेत् ३१७
ब्रह्मणो मूलमन्त्रेण हुत्वा पीठं तु संस्पृशेत्
ब्रह्मणो मूलमन्त्रेण हुत्वा ब्रह्मशिलां स्पृशेत् ३१८
प्रायश्चित्तमघोरेण हुत्वा चाष्टोत्तरं शतम्
ज्ञानशक्तिमयं लिङ्गं क्रियाशक्तिं तु पिण्डिकाम् ३१९
शिलामाधारशक्तिं च +++ निरोधितः
सर्वाङ्ग ++++ हव्यवाहे तु होमयेत् ३२०
दत्वा पूर्णाहुतिं पश्चाल्लिङ्गवदीं च निरोधयेत्
भूति दर्भतिलैर्हुत्वा रक्षामन्त्रेण मन्त्रतः ३२१
बहिरन्तर्बलिं क्षिप्त्वा क्षेत्रपालबलिं क्षिपेत्
आसनोत्थापने क्रोधे क्षुधे निष्ठीवने तथा ३२२

बध्वाचारभयोत्पन्ने भाषणे चाप्यदीक्षिते
श्लेष्मोद्गारे च सन्तापे क्रिया विस्मृतिसम्भवे ३२३
मन्त्रोक्तमन्यकार्ये तु व्याहृत्याहुतिमाचरेत्
नृत्तगेयसमायुक्तं रात्रिशेषं व्यपोह्य च ३२४
प्रभाते विमले चैव देशिको मूर्तिपैः सह
कृत्वा स्नानादिकं पश्चात्सकलीकरणं ततः ३२५
लिङ्गस्य शयने स्थाप्य कुम्भाग्निमूर्तिपान्यजेत्
कुम्भस्थदेवतानां तु नैवेद्यन्दापयेत्ततः ३२६
कुण्डं प्रति विशेषेण तत्तदाहुतिभिर्हुनेत्
देशिकं शिल्पिभिः सार्धं प्रविशेद्गर्भगेहकम् ३२७
पूर्वपश्चिममार्गेण मध्यसूत्रं तु दापयेत्
दक्षिणोत्तरमार्गेण सूत्रं कुर्यात्तु मध्यमे ३२८
पूर्वपश्चिममार्गेण पुरस्तादपरपूर्वकम्
याम्यात्सौम्यं तथा चैव द्वाराभिः सप्तधा भजेत् ३२९
मध्यभागं त्रिधा भज्य पञ्चांशं दक्षिणे त्यजेत्
एकांशमुत्तरे त्यक्त्वा मध्यसूत्रं तु दापयेत् ३३०
शिवसूत्रं तदाख्यातं तन्मध्ये स्थापयेच्छिवम्
अन्यत्र स्थापितं लिङ्गं स्थाननाशं धनक्षयम् ३३१
मध्यमे स्थापितं लिङ्गं सर्वदोषक्षयं भवेत्
शालिपिष्टाक्तसूत्रेण गैरिकाक्तेन वा पुनः ३३२
सूत्रमास्फालयेद्धीमान्स्थलभित्तौ क्रमेण तु
हित्वाभावे महाशासु यष्टिकं स्थापयेद्बुधः ३३३
शिवसूत्रं महाशासु तन्तुनोर्ध्व प्रकल्पयेत्
पिण्डिकायास्तु तारार्धं शिवसूत्रस्य मध्यमात् ३३४
अङ्कयेत्तु महाशासु सूत्रमध्यं तु कारयेत्
++++++++++++ प्रदिशश्चैव भागतः ३३५

तत्समं कारयेद्गर्तं विस्तरं पीठविस्तरम्
भूमिं समतलं कृत्वा कटी कृत्वैव भागतः ३३६
अथाद्भिः समतलं कृत्वा वस्त्रैरेव तु शोधयेत्
गर्तयद्वा विशालं तु शक्तिबीजेन विन्यसेत् ३३७
मध्यमे शिवसूत्रं तु लब्मयित्वा ततः क्रमात्
कारयेत्प्रतिलिङ्गं तु क्षीरकैस्तरुभिस्तथा ३३८
उपपीठं तथा कृत्वा श्वभ्रमध्ये तु विन्यसेत्
प्रतिलिङ्गं तु संस्थाप्य सुस्थितं सुस्थितं विदुः ३३९
पिण्डिकां प्रतिलिङ्गं च यष्टिसूत्रेण विन्यसेत्
कूर्मशैलं तदा शोध्य प्रोक्षयेत्पुरुषेण तु ३४०
चन्दनेन विलिप्याथ नवरत्नादि विन्यसेत्
वज्रं मरकतं पुष्यरागं नीलं प्रवालकम् ३४१
मौक्तिकं चैव वैडूर्यं स्फटिकं च महामणिम्
इन्द्रादि मध्यपर्यन्तं विन्यसेन्मूलवद्यथा ३४२
स्वर्णं च रजतं ताम्रमायसं त्रपुसीसकम्
आरकूटामलतलं देवलोकं क्रमेण वै ३४३
हरितालाभ्रकं चैव गम्यकं पारदाञ्जनम्
सौराष्ट्रं गैरिकं चैव माक्षिकं पूर्ववन्न्यसेत् ३४४
यवगोधूमनीवारशालिवैणवकानि च
प्रियङ्गुतिलमुद्गं च निष्पावं च क्रमेण तु ३४५
चन्दनं कङ्कुमं चैव लोलपत्रं फलत्रयम्
कर्पूरोशीरकं चैव पूर्ववद्विन्यसेत्ततः ३४६
वैष्णवं वज्रपत्राणि वृषभं ध्वजमेव च
लक्ष्मीं च सहदेवीं च शङ्खपुष्पं सुवर्चलाम् ३४७
दूर्वां च मुसलीं चैव विन्यसेत्तु क्रमेण तु
पृथिवीं शातकुम्भेन समुद्रं रजतेन तु ३४८

ताम्रेण वृषभं कृत्वा तोमरं चामरं गजम्
श्रीवत्सं कलशं भेरीं दर्पणं पुष्पकं तथा ३४९
महामेरुं सुवर्णेन कृत्वा रन्ध्रावटे न्यसेत्
दक्षिणे मध्यमे सौम्ये त्ववटेषु क्रमान्न्यसेत् ३५०
मुकुलीं पद्ममुद्रां च शोधनीं चापि दर्शयेत्
मध्ये ब्रह्मपदं विद्यादिन्द्रादीशान्तकं क्रमात् ३५१
पूजयित्वा तु रत्नानि गन्धपुष्पादिभिर्हृदा
पायसेनानुलिप्याथ साज्यं ब्रह्मशिलामवटम् ३५२
आसनं कल्पयेत्पञ्च तस्य मध्ये क्रमेण तु
पुष्पादिभिश्च संपूज्य वस्त्रेणावेष्ट्य सर्वतः ३५३
आचार्यो मूर्तिपैः सार्धं विधिना होममाचरेत्
शिवसूत्रसङ्गदोषनिवृत्यर्थं शिवाणुना ३५४
हुत्वा शताहुतिं पश्चाद्वैष्णवं च शतं हुनेत्
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत् ३५५
पूर्णाहुतिं ततो हुत्वा देशिकं पूजयेत्ततः
शुक्लवस्त्रमथोष्णीषं वसनं चोत्तरीयकम् ३५६
होमाङ्गुलीयकं चैव यज्ञसूत्रत्रयाणि वै
पञ्चाङ्गभूषणं चैव गन्धपुष्पावलेपनम् ३५७
आचार्याय प्रदातव्यं ++++++ मूर्तिपान्
मन्त्रजप्तृंश्च मन्त्रैश्च हेमाङ्गुलीयकैर्यजेत् ३५८
पर्यष्टिपरिचारांश्च पूजयेत्तु यथा श्रुतः
संपूज्य देशिकादीनां दक्षिणां दापयेत्ततः ३५९
उत्तमा स्याच्चतुष्षष्टिनिष्कन्देशिकदक्षिणा
पञ्चाशन्मध्यमा ज्ञेया त्रिंशन्निष्कं तु कन्यसम् ३६०
सवत्सगोभूमिधान्यानि गृहोपकरणानि च
आचार्याय प्रदातव्यं श्रद्धाभक्तिसमन्वितः ३६१

यजमानो गुरुं तोष्य वित्तशाठ्यविवर्जितः
देशिकस्य मनस्तुष्टिर्देवदेवस्यैव तु सन्निधिः ३६२
देशिकं तोषयेत्तस्मात्सन्निधीकरणाय च
होतॄणां मन्त्रजप्तॄणा अध्येतॄणां च दक्षिणा ३६३
उत्तमा नवनिष्का च सर्वेषां तु विधीयते
मध्यमा सप्तनिष्का तु कन्यसा पञ्चनिष्कका ३६४
एतेषु दक्षिणे कस्य यावद्द्विगुणदक्षिणा
वास्तुतक्षस्य कर्तव्यं दैवज्ञस्य तथैव हि ३६५
मुहुर्तात्पूर्वकाले तु सर्वातोद्यसमन्वितम्
शङ्खदुन्दुभिनिर्घोषगीतनृत्तसमाकुलम् ३६६
ब्रह्मघोषसमायुक्तं नानाभक्तसमन्वितम्
चित्रध्वजवितानैश्च धूपदीपैः समन्वितम् ३६७
वर्धन्या श्रावसहितं मङ्गलाङ्कुरशोभितम्
उद्धृत्य शयनाल्लिङ्गं वस्त्रादीनि व्यपोह्य च ३६८
घृतशिरोर्पणं कृत्वा हेमदूर्वाङ्कुराक्षतैः
स्वेति सन्तधा वह्नौ हेति लिङ्गोपरिश्रवम् ३६९
धून्वन्तदाज्यशेषं तु संपदोद्धृत्य च क्रमात्
रथे वा शिबिकायां वा रज्जुयन्त्रेण वा पुनः ३७०
उक्तालङ्कारसंयुक्तं कृत्वा धामप्रदक्षिणम्
यागं प्रवेशयेत्तत्र आवृतो मूर्तिभिः सह ३७१
स्वस्तिसूक्तं जपित्वा तु पुण्याहं वाचयेत्ततः
पृष्ठतो यजमानस्तु पुत्रपौत्रसमन्वितः ३७२
आचार्यस्त्वग्रतोगच्छेदर्घ्यहस्तसमन्वितः
वशुद्य द्वारदेशे तु चार्घ्यं दत्वा विशेद्गृहम् ३७३
कालं निरीक्ष्य दैवज्ञो गुरवे सन्निवेदयेत्
आचार्यो मूर्तिपैः सार्धं लिङ्गस्थापनमारभेत् ३७४

सुमुहूर्ते च संस्थाप्य लिङ्गं द्वारस्य सम्मुखम्
दुस्थिते +++ वक्त्रे स्थापितं च न चालयेत्  ३७५
एवमादि समुद्भूतौ निष्कृतिं च समाचरेत्
अष्टोत्तरशतं हुत्वा शिवाग्नौ शिवमन्त्रतः  ३७६
अथ ब्रह्म षडङ्गैश्च प्रत्येकं तु शताहुतिः
नन्द्यावर्तशिलायोज्य पूर्वोक्तविधिना सह  ३७७
वालुकाभिः समापूर्य सुस्निग्धं सुदृढं कुरु
मनोन्मन्यास्तु मन्त्रेण पिण्डिकां च समुद्धरेत्  ३७८
उक्तालङ्कारसंयुक्तं कृत्वा धामप्रदक्षिणम्
द्वारदेशं समानीय दत्वार्घ्यं शिरसा पुनः  ३७९
शनैर्लिङ्गं समायोज्य शक्तिबीजमनुस्मरन्
पिण्डिकां चैव लिङ्गोर्ध्वे वेशयेत्तु शनैः शनैः  ३८०
समं च सुदृढं कृत्वा वालुकाभिः सुपूर्य च
अष्टबन्धं तु विधिना कारयेत्सुदृढं क्रमात्  ३८१
इष्टकाभिः शिलाभिर्वा सुधा गुलसमन्वितम्
ब्रह्मभागं वैष्णवं पीठसंस्थितम्  ३८२
पीठोर्ध्वे चेश्वरं भागं पूजा तु त्रिविधा मता
शुद्धिं कृत्वा यथान्यायं पवमानमुदीरयन्  ३८३
गन्धपुस्पादिभिः पूज्य लिङ्गं चैव तु पिण्डिकाम्
अचार्यो दक्षिणं हस्तं लिङ्गमूर्ध्नि निधाय च  ३८४
दशाक्षरं जपित्वा तु पञ्चविंशति सङ्ख्यया
कुण्डान्तिकं ततो गत्वा शान्तिहोमं समाचरेत्  ३८५
वह्निं प्रज्वाल्य कुण्डस्थं कृत्वा तु परिषेचनम्
लग्नकाले चेल्लिङ्गस्थापनं दोषशान्तये  ३८६
मूलमन्त्रशतं हुत्वा ततो दिग्बन्धनाथ च
तत्तद्दिक्पालशान्तिं च तत्तदस्त्रशतं हुनेत्  ३८७

उक्तस्य मूलमन्त्रेण शतमष्टोत्तरं हुनेत्
इन्द्रं वो विश्वतेत्युक्त्वा सुप्रभायां तु हूयते ३८८
अग्निमूर्धेति मन्त्रेणातिरिक्तेति होमयेत्
नाके सुपर्णामन्त्रेण कृष्णायां चैव हूयते ३८९
रमस्वतेति मन्त्रेण हिरण्यायां हुनेत्ततः
++++ क्षितस्येति हो ++++ स्य मध्यमे ३९०
मारुतमसीति मन्त्रेण रक्तायां चैव हूयते
आप्यायस्वेति मन्त्रेण हूयते च विचक्षणः ३९१
ईशानः सर्वविद्यानां बहुरूपेति हूयते
जयादिरभ्याधानं च राष्ट्रभृच्च क्रमाद्धुनेत् ३९२
यद्देवा देवहेडेति यदस्ययोरन्तरं क्रमात्
स्वस्तिव्याहृतयः पश्चात्प्रासादं चैव होमयेत् ३९३
पूर्णाहुतिं तु शिरसा स्विष्टमग्नौ तु होमयेत्
समाप्य होमशेषं तु पूर्वोक्तविधिना सह ३९४
कुण्डस्थदेवतान्सर्वान्कुम्भेषु विनिवेशयेत्
प्रधानकुम्भमाचार्यो मूर्तिपाः त्वन्यकुम्भकान् ३९५
उद्धृत्य शिरसावाह्य धामकृत्वा प्रदक्षिणम्
सर्वालङ्कारसंयुक्तं सर्वातोद्यसमावृतम् ३९६
स्थण्डिलोपरि लिङ्गाग्रे कुम्भानि स्थापयेत्क्रमात्
सुमुहूर्ते सुलग्ने तु मन्त्रन्यासं समारभेत् ३९७
पूर्ववत्तत्वतत्वेशान्मूर्तिमूर्तीश्वरान्न्यसेत्
पञ्चतत्वाभितत्वेशान्पूर्ववत्सन्निवेशयेत् ३९८
प्रतिखण्डं विशेषेण षडध्वन्यासमाचरेत्
ब्रह्मभागे धरण्यादि +++++++++++ ३९९
विष्णुभागे शक्तितत्वं शक्तिमन्त्रं च विन्यसेत्
शिवतत्वं रुद्रभागे शिवं चैव तु विन्यसेत् ४००

कालानलादिभुवनं एकोत्तरशतद्वयम्
अनन्ताद्यं न्यसेद्ब्राह्मे सूक्ष्मादि भुवनाष्टकम् ४०१
सदाशिवान्तं रुद्रभागे शिवं चैव तु विन्यसेत्
कालानलादि +++++++++++++++ ४०२
अनन्ताद्य +++++++++++++++
सदाशिवान्तं विष्णवंशे निवृत्यादि शिवान्तकम् ४०३
अनाश्रितान्तं विन्यस्य पुराणि दश पञ्च च
अकारादि क्षकारान्तं पञ्चत्रिंशन्न्यसेद्विधौ ४०४
अकारादि विसर्गान्तं विष्णुभागे तु विन्यसेत्
अकारं रुद्रभागे तु विन्यसेदक्षरं क्रमात् ४०५
पदानान्तरं षष्ठी स्याद्व्योमव्याप्यां ततो विधौ
नित्यं योगिने नम इति विष्णवंशेकादशं पदम् ४०६
ओमित्येकपदं चैव रुद्रभागे तु विन्यसेत्
सद्याद्यस्त्रान्तमन्त्राणि ब्रह्मभागे हरौ शिवे ४०७
बिन्दुशक्तिं न्यसेद्रुद्रे कलामन्त्रं ततः परम्
निवृत्तिं च प्रतिष्ठां च विद्यां ब्राह्मे तु विन्यसेत् ४०८
विष्णुभागे न्यसेच्छान्तिं शान्त्यतीतां शिवांशके
एवं षडध्वविन्यासं कृत्वा हृद्बीजतो न्यसेत् ४०९
ततः शक्त्यादि शक्त्यन्तं शिवासनमतः परम्
शिवमूर्तिं च विन्यस्य पञ्चब्रह्म ततः परम् ४१०
दण्डपङ्क्ति कलान्यासं लिपिन्याससमन्वितम्
ध्यात्वा सदाशिवं देवं विद्यादेहं च विन्यसेत् ४११
विन्यसेन्नेत्रविन्यासं पञ्चप्रासादमन्त्रकैः
आचार्यः सुप्रसन्नात्मा लिङ्गं दक्षिणसंस्थितम् ४१२
प्राणप्रकृतियोगं च ज्ञात्वा स्थापनमारभेत्
प्राणो मन्त्रमिति प्रोक्तो प्रकृतिस्थापनोच्यते ४१३

कुम्भाद्बीजं समादाय कूर्चेनाभियुतेन च
दक्षिणेनैव हस्तेन +++++++++++तु ४१४
ध्यानेनैव समायुक्तं सदा मन्त्रमनुस्मरन्
लिङ्गस्यैव तु मध्ये तु विन्यसेत्तु विशेषतः ४१५
कुम्भाद्भिस्तु विशेषेण स्नापयेत्परमेश्वरम्
वर्धन्यास्तु मनोन्मन्याः बीजमादाय पूर्ववत् ४१६
लिङ्गस्य वामभागे तु पिण्डिकायां तु विन्यसेत्
वर्धनी तोयकैश्चैव पिण्डिकामभिषेचयेत् ४१७
आवाह्य सद्यमन्त्रेण सर्वज्ञं कारणेश्वरम्
संस्थाप्य वामदेवेनाघोरेण निरोधयेत् ४१८
सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा
पञ्चाशत्पञ्चविंशद्भिर्नव एकं तु वा पुनः ४१९
स्नपनं कारयेत्पश्चाद्यथावित्तानुसारतः
पूजयित्वा यथान्यायं पञ्चमावरणैः सह ४२०
प्रभूतहविषं दत्वा ताम्बूलं तु प्रदापयेत्
नीराजनं ततो दत्वा दर्पणछत्रचामरैः ४२१
नन्द्यादि बलिपीठान्तं बलिं दत्वा क्रमेण वै
अञ्जनं च हरिद्रां च सर्षपं च मनः शिलाम् ४२२
गोरोचनं घृतेनैव सर्वाङ्गं लेपयेत्ततः
अर्केन्दुतारकं यावत्सह विद्येश्वरादिभिः ४२३
मन्दिरेत्र महादेवस्थाधव्य स्वेच्छया त्वया
ज्ञानतो ज्ञानतो वापि शास्त्रोक्तं न कृतं यदि ४२४
तत्सर्वं कृतमेवास्तु त्वत्प्रसादान्महेश्वर
कारयेन्नामकरणं यजमानाख्ययादिभिः ४२५
ईश्वरं तं तु तं चापि शिवाय विनिवेदयेत्
गोभूहिरण्यवासांसि ग्रामक्षेत्रादि संपदः ४२६

देशिकाय प्रदातव्यं शिवसान्निध्यकारणम्
प्रायश्चित्तं ततो हुत्वा बहुरूपेण देशिकः ४२७
अष्टोत्तरशतं चैव मूर्तिपानां पृथक्पृथक्
द्वितीयदिवसे मन्त्रतर्पणान्तं समाप्य च ४२८
प्रायश्चित्तादि पूर्वादि दिक्षु कुण्डेषु कल्पयेत्
शिवास्त्रं चैव घोरास्त्रं तथा पाशुपतास्त्रकम् ४२९
प्रत्यङ्गिरास्त्रकं चैव होमयेत्तु यथाक्रमम्
आग्नेयादिषु कोणेषु क्षुरिकास्त्रं मूर्तिपैः ४३०
शिवगायत्रिसावित्रीं शिवमन्त्रं च होमयेत्
प्रधाने संहिता होमं कारयेद्देशिकोत्तमः ४३१
ततस्तृतीयदिवसे दिशाद्यष्टकशान्तये
शतं शिवास्त्रमघोरास्त्रं सर्वकुण्डेषु होमयेत् ४३२
चतुर्थे दिवसे चैव निर्माल्यं तु विसर्जयेत्
लिङ्गं संस्नाप्य संपूज्य प्रायश्चित्तं तु होमयेत् ४३३
वागीशमन्त्रहोमं तु प्रतिकुण्डं विशेषतः
चतुर्थमङ्गलं होमं प्रायश्चित्तं शिवाणुना ४३४
एवं संस्थाप्य विधिवद्यदस्येति च होमयेत्
पूर्णाहुतिं च शिरसा चण्डपूजां समारभेत् ४३५
यजमानाभिषेकं तु प्रणवेन विशेषतः
सहस्रं वा तदर्धं वा तदर्धार्धमथापि वा ४३६
ब्राह्मणान्भोजयेत्तत्र यथाविभवविस्तरैः
प्रतिष्ठोत्सवं तु कर्तव्यं यावत्सप्तदिनान्तरम् ४३७
तल्लिङ्गे पूजनं राष्ट्रसुभिक्षं रोगनाशनम्
आयुरारोग्यदं राष्ट्रे सर्वभोगमवाप्नुयात् ४३८
एवं यः कुरुते मर्त्यः सर्वपापात्प्रमुच्यते
मण्टपं च विसृज्याथ देशिकस्य प्रदापयेत् ४३९

उपर्युक्तमिहद्रव्यं यागे स्वर्णाम्बरादिकम्
यागावशिष्टं यद्द्रव्यं भूषणं मण्टपस्य तु  ४४०
स्थण्डिलं चाम्बरं स्वर्णं  कुम्भं च कलशादिकम्
तोरणं सृक्स्रुवं चाष्टमङ्गलं नवरत्नकम्  ४४१
तद्धोमचरुनैवेद्यशेषं यन्मण्टपस्य च
वलयं स्थालिपात्रं च यदन्यदुपयोगितान्  ४४२
आचार्याय प्रदातव्यं नानाभोगाय कल्पयेत्
मोक्षार्थी लभते मोक्षं पुत्रार्थी लभते सुतम्  ४४३
अर्थार्थी चार्थमाप्नोति ज्ञानार्थी ज्ञानमाप्नुयात्
इहैव पुत्रवान्छ्रीमान्सोन्ते सायुज्यमाप्नुयात्  ४४४
इति निश्वासागमे शिवलिङ्गप्रतिष्ठाविधि पटलः

अष्टबन्धविधिं वक्ष्ये सर्वाभीष्टफलप्रदम्
सर्वशान्तिकरं पुण्यं जीर्णबन्धफलं तथा  १
ऐन्द्रे ग्रामविनाशं च आग्नेय्यामग्निना भयम्
याम्ये मृत्युभयं विद्यात् राक्षसे निर्ऋतौ तथा  २
वारुण्यां वरुणवर्जं  च वायौ मूर्छा भविष्यति
धनशनिरुदग्दिश्यां ईशाने सर्वनाशनम्  ३
ब्रह्मभागगतस्तस्य निर्माल्यमुदकन्तु वा
ब्रह्मवर्गविनाशं च विष्णुभागो नृपस्य तु  ४
रुद्रभागस्य विच्छिन्ने विध्वगं च विनश्यति
एवमादि दिशा स्थाने छिन्ने बन्धनमाचरेत्  ५
पूर्वोक्तेनैव मार्गेण यागोपकरणं नयेत्
वास्तुशान्तिं तथा कुर्यात् मृद्ग्रहं चाङ्कुरार्पणम्  ६
मण्टपाराधनं चाग्निकार्यादीन् पूर्ववद्यजेत्
विघ्नेशाराधनं पूर्वं  विशेषाराधनं शिवे  ७

विज्ञाप्य ब्राह्मणान् वेदपारगान् शिवविप्रधीः
यदाग्निं पूर्वमुच्चार्य पश्चात्कुम्भे समावहेत् ८
स्थालिके पालिकां न्यस्य आदाय पुरतो गमान्
कुम्भानुद्धृत्य शिरसा अनन्ताद्यैस्समावृतम् ९
स्वस्तिघोषसमायुक्तं दीपज्वालासमन्वितम्
छत्रचामरबृन्दैश्च सर्वातोद्य समन्वितम् १०
शालाङ्गत्वाथ देवेशं पूजां पूर्ववदाचरेत्
समिदन्नाज्यकं हुत्वा यथापूर्वविधानतः ११
निश्वासकारिकायाम्
अष्टाष्टस्तम्भमेवं तु मण्टपं चोत्तमं भवेत्
श्रेष्ठं मण्टपविस्तारं द्वात्रिंशद्धस्तमुच्यते १२
अष्टाष्टसाम्भसंयुक्तं कलातालोच्छ्रयं भवेत्
तन्मण्टपस्य मध्ये तु +++++++++ विवर्जयेत्
पक्षद्वयकरे स्थाने मध्ये मण्टप कस्य तु
षट्त्रिंशत्स्तम्भकैर्युक्तं यन्मदालसमुच्छ्रयम् १४
पूर्ववत्सन्त्यजेन्मध्ये रविहस्तसुविस्तृतम्
स्तम्भैः षोडशभिर्युक्तं उत्सेधं चाष्टतालकम् १५
कन्यसं मण्टपं ज्ञेयं मण्टपं तु त्रिधा भवेत्
वेदिमध्ये तु भागे तु रत्निमात्रसमुच्छ्रयम् १६
तदर्धं चोपवीतं तं कल्पयेत्तु समावृतम्
द्व्यङ्गुलात् द्व्यङ्गुलाधिक्यं मध्यमस्या ++ १७
दर्पणोदरसंकाशा मृदावेष्ट्याक्रमात्ततः
शार्वोत्तरे -
कन्यसत्रयलिङ्गानां मण्टपं कन्यसं भवेत्
मध्यमत्रयलिङ्गानां मध्यमं तु शुभं भवेत् १८
उत्तमत्रयलिङ्गानां मण्टपं चोत्तमं भवेत्

कूटं वापि प्रपां वापि मराटपं समलंकृतम्  १९
वेदिकायां तु परितं अग्निकुराडानि कारयेत्
कुराडस्य कुराडयोर्मध्ये चान्तरं तु द्विहस्तकम्  २०
कुर्यात्कुराडानि द्वात्रिंशन्मराटपं चोत्तमं भवेत्
मध्यमं मराटपं कुर्याद् नवकुराडानि कारयेत्  २१
कन्यसं मराटपे कुर्यात् पञ्चकुराडं तु कारयेत्
द्वात्रिंशदिष्टकाम्यार्थं फलार्थं च प्रशस्यते  २२
इन्द्रादिनवकुराडेषु अष्टभोगादि सिद्धिदम्
अणिमाद्यष्टसिद्धिं च पञ्चकुराडेषु धीयते  २३
स्वयंभूर्दैविके लिङ्गे कोटिसंख्याहुतिं हुनेत्
आर्षे गाणपतादीनां लिङ्गानां लक्षमाहुतिः  २४
समलिङ्गादिवर्णानां नियुतं त्वयुतं क्रमात्
कपिलाघृतमेवं तु उत्तमं तु विधीयते  २५
नानावर्णं च धेन्वादि घृतं वै मध्यमं भवेत्
कन्यसं तु द्विभारं स्यात् घृतसंख्या प्रकीर्तिता  २६
पलाशोदुम्बराश्वत्थवटखादिरमेव च
शमापामार्गबिल्वं च दूर्वार्कपुष्पमेव च  २७
पञ्च साहस्त्रकं चैव पलाशमुत्तमं भवेत्
मध्यमं तु द्विसाहस्त्रं साहस्त्रं कन्यसं भवेत्  २८
अष्टोत्तरशतं चैव अलाभे समिदादिकम्
उत्तमं पञ्चभारं तु मध्यमं तु त्रिभारकम्  २९
द्विभारं कन्यसं प्रोक्तं भारमेकं विवर्जयेत्
शाल्यर्धं तराडुलं चैव तराडुलार्धं तिलेन च  ३०
तिलार्धं लाजमेवं तु सप्तधान्यं शिवत्रयम्
आढकमुद्गमाषं च शोधिसर्षपमेव च  ३१
शिम्बिनिष्पावकं चैव सप्तधान्यं प्रकीर्तितम्

नालिकेरफलं चैव उत्तमं तु विधीयते ३२
कपित्थफलमात्रेण मध्यमं समुदाहृतम्
कुक्कुटाण्डप्रमाणेन अष्टमृत्फलकादिकम् ३३
न्यूनादिदोषरहितः तदर्धाञ्चासिना शिवम्
प्रत्येकं घोरमन्त्रेण प्रत्येकं च शतं हुनेत् ३४
ततः पूर्णां च ताम्बूलं पश्चादाचमनं शिवे
निरुध्य व्याहृतिं हुत्वा अन्तर्बहिबलिं ददेत् ३५
श्रोत्रं च वन्दनं कृत्वा अहं संरक्षयेद्गुरुः
सकलीकरणं हुत्वा समर्पयेत् ३६
होमैर्वेदादिघोषैश्च गीतनृत्तमहोत्सवैः
भक्तितः सप्तरात्रं वा पञ्चरात्रं त्रिरात्रकम् ३७
एकरात्रमथो सद्यः कुर्याद्दिवाधिवासनम्
होतव्यं प्रत्यहं स्वस्वमन्त्रैर्होमशतं शतम् ३८
शिवकुम्भादिपूजां च दिग्बलिं च निवेदयेत्
सहमूर्तधरैः प्राश्य पञ्चगव्यादिकं स्वचेत् ३९
अथ प्रातः कृतं नित्यं मण्टपादीन् प्रपूजयेत्
होमं कृत्वाथ बल्यन्तं शिवं विज्ञाप्य देशिकः ४०
हुंफडन्तास्त्र मन्त्रेण प्रासादं संप्रविश्य च
अस्त्रेण विघ्नानुच्चाटय लिङ्गपीठं विशोधयेत् ४१
दृढीकृत्य न्यसेद्रत्नान् बन्धद्रव्येण वन्धयेत्
तद्यथा
गोमयालेपनं कृत्वा देवाग्रे चतुरश्रकम् ४२
लुखलं मुसलं चैव प्रोक्षयेच्छुद्धवारिणा
षडुत्थायनमभ्यर्च्य तस्योपरि निधापयेत् ४३
लूखलं ब्रह्मदैवत्यं मुसलं विष्णुदैवतम्
वस्त्रदर्भैरलंकृत्य लूखलमुसलस्य तु ४४

गन्धपुष्पादिनाभ्यर्च्य धूपदीपादिकं ददेत्
कदलीशङ्खचूर्णं च तथा लाक्षा च गुल्गुलुम् ४५
शर्करामधुसंयुक्तं कार्पासं तैलमेव च
एतानि सोमपाकानि कारयेत्तु विचक्षणः ४६
गुल्गुलं चैव पाषाणं शङ्खलं च कदलीफलम्
मधूच्छिष्टं तु संयुक्तं बन्धयेत्पञ्चबन्धनम् ४७
लाक्षासञ्ज ++ षाणं नवनीतं चतुर्थकम्
चतुर्बन्धमिति ख्यातं सर्वसिद्धिकरं शुभम् ४८
गुल्गुलुं चैव पाषाणं नवन्तीतं च मिश्रकम्
त्रिबन्धनमिति ख्यातं कारयेत्सुदृढं बलिः ४९
श्वेतगुल्गुलुकैर्योगतुल्यमहिषाज्यमेव च
उलूखलमुसलद्वयकुट्टनापाकयुक्तवशात् दृढबन्धनम् ५०
कार्पासकुली महिषाज्य तु शर्कराणां लक्षाम धूच्छिष्टं तु कन्तुरुष्कम्
कषायपाषाणगुलं समानं
लिङ्गस्य पीठस्य बलाष्टबन्धनम्
एकार्धं पूर्णभागन्तु भागमेकं तु गुल्गुलुम् ५१
नवनीतं च मिश्रं च कुट्टात् भागं च बन्धनम्
गुणांशं चूर्णं संयुक्तं अश्विन्यंशेन गुल्गुलुम् ५२
अर्धभागं तु लाक्षा च काषायं तु तदर्धकम्
मधूच्छिष्टं तदर्धम् तु यथेष्टं तूलमेव च ५३
स्वल्पं गुलेन संयुक्तं नवनीतेन पेष्य च
उलूखलैश्चैतत्पश्चात् मुसलैश्चैव ताडयेत् ५४
पाकयुक्त्या दृढं कृत्वा लिङ्गपीठान्तरे क्षिपेत्
सम्यक्संकुट्य मुसलैः सुपक्वं वीक्ष्य बुद्धिमान् ५५
संगृह्य स्थलिकेन्यस्य संपूज्य द्रव्यदैवतान्

लिङ्गपीठबिले वेष्ट्य दृढीकृत्य विशेषतः ५६
शान्तिहोमं ततः कृत्वा पश्चान्मृत्पञ्चगव्यकैः
पश्चात्काषायसलिलैः स्नापयेच्छुद्धवारिणा ५७
चन्दनाद्यैर्विलिप्याथ रक्षासूत्रं प्रबन्धयेत्
धूपं दीपं ततो दत्त्वा तत्त्वतत्त्वेश्वरानपि ५८
मूर्ति मूर्तीश्वरान् न्यस्य ब्रह्मभागादिकादिषु
एवं हुत्वाथ तत्त्वाद्यैः स्पृष्ट्वा खण्डत्रयेष्वपि ५९
इत्येवं पिण्डिकायां च त्रिभागं परिकल्पयेत्
आवाह्यं तत्त्वतत्त्वेशी मूर्तिमूर्तीशकादिकम् ६०
अथो भागादिशुद्ध्यर्थं उमामन्त्रेण होमयेत्
मूलेन प्रायश्चित्तार्थं अष्टोत्तरशतं हुनेत् ६१
सर्वद्रव्यसमायुक्तं हव्यवाहेन होमयेत्
एवं रात्रौ प्रकर्तव्यं प्रभाते स्नानमाचरेत् ६२
सकलीकरणं कृत्वा मण्टपं पूर्ववद्यजेत्
कृत्वाग्निकार्ययजनं जयादिजुहुयात्ततः ६३
भूरादिभिश्च शिरसा पूर्णां हुत्वा विधानतः
स्विष्टमग्नेति हुत्वान्ते कुण्डाद्देवं समाहरेत् ६४
कुम्भस्थं योजयेत्पश्चात् सुमुहूर्ते सुलग्नके
दशदानादिकं कृत्वा सर्वातोद्यसमायुतम् ६५
स्वस्तिवादसमायुक्तं पिञ्छचामरसंयुतम्
छित्रध्वजसमायुक्तं प्रज्वाल्यादीपसंयुतम् ६६
कुम्भानुद्धृत्य शिरसा वाहयित्वा सुधीमता
यजमानसमोपेतं गत्वा हर्म्यप्रदक्षिणम् ६७
द्वारदेशे समानीय अर्घ्यं दत्वा शिवे ततः
तदग्रे शालिना कल्प्य स्थण्डिलं चतुरश्रकम् ६८
क्रमात्कुम्भान् समुत्थाप्य रसन्नात्मा गुरुस्ततः

सकलीकरणं कृत्वा पुण्याहपोक्षणं कुरु ६९
पञ्चकोष्ठं प्रकल्प्याथ पञ्चगव्यं प्रकल्पयेत्
मृत्कषायबिल्वचूर्णं भस्मगन्धोदकानि च ७०
अभिषिच्य क्रमेणाथ हृदा गन्धादिनार्चयेत्
अध्वषट्कं च विन्यस्य अष्टत्रिंशत्कलां न्यसेत् ७१
विद्यादेहं समापाद्य सुमुहूर्ते विलोकयेत्
कुम्भाद्बीजं समादाय आचार्यः सुप्रसन्नधीः ७२
वर्धनीबीजमादाय पिण्डिकायां तु विन्यसेत्
अष्टविद्येश्वरान् बीजान् तत्तत्स्थानेषु विन्यसेत् ७३
शिवादिकुम्भान् संसिच्य मन्त्रान्नं च निवेदयेत्
गव्यपञ्चामृतैः पश्चात् विशेषस्नपनेन तम् ७४
ततः सहस्रधारादिः शङ्खगङ्गाजलैरपि
संसिच्य वाससोन्मृज्य मन्त्रान्नं मन्त्रपुष्पकम् ७५
विनिवेद्य शिवं पश्चात् वस्त्रादिभिरलंकृतम्
विधाय पूर्ववत्पूजां महाहविर्निवेदयेत् ७६
पाद्यमाचमनं चार्घ्यं ताम्बूलं धूपदीपकम्
अन्यैश्च सर्वकर्माणि समाप्तिं पूर्ववत्तथा ७७
पश्चाच्छिवालयं गत्वा प्रायश्चित्तं च पूर्ववत्
मण्टपस्यान् ततो देवान् अग्निं चापि विसर्जयेत् ७८
मोक्षार्थी लभते मोक्षं पुत्रार्थी लभते सुतम्
अर्थार्थी चार्थमाप्नोति जयार्थी जयमाप्नुयात् ७९

इति निश्वासे अष्टबन्धनविधिपटलः

Reference:

*Niśhvāsāgama* manuscripts T0017A, T0017B, T1044, and T0064 from the Muktabodha on-line digital library, based on the paper transcripts of the French Institute of Indology at Pondicherry, India:

http://muktabodha.org/

http://muktalib5.org/digital_library.htm